ह्यणावेति, तत्रोत्तरं सूचयति, स्त्र्यपराधात् कर्त्तुश्च पुत्त्रदर्शनादिति। प्रवरे प्रशस्यमाणे ब्रूयात्, देवाः पितर इत्यस्य विधेस्तावकोऽयमर्थवादः। यदि यजमानो देवाः पितर इत्यादिमन्त्रेण प्रवरमनुमन्त्रयेत्, तदानीमब्राह्मणोऽपि ब्राह्मणो भवेदित्यनुमन्त्रणस्य स्तुतिः। नचैतद्विद्म इत्येतदज्ञानवचनं दुर्ज्ञानत्वगुणेन तत्र प्रयुज्यते, यत्र स्त्रियोऽपराधो भवति, तत्र कर्त्तुरुत्पादयितुर्जारस्यापि पुत्त्रो दृश्यते, अतः पत्युपपत्योरुभयोः पुत्त्रदर्शनात् स्वकीयं जन्म कीदृशमिति दुर्ज्ञानं, अनेनाभिप्रायेण प्रयुक्तत्वान्नास्ति तत्र दृष्टविरोधः, नहि तत्र दृश्यमानं स्वब्राह्मण्यमपवदितुं न चैतद्विद्म इत्युपन्यस्तं, यदपि शास्त्रीयदर्शनविरोधायोदाहृतं, को हि तद्वेद यदमुष्मिंल्लोकेऽस्ति वा न वेति, तत्रोत्तरं सूचयति, आकालिकेप्सेति। दिक्षती काश्यान् करोतीति प्राचीनवंशस्य द्वारविधिः, तस्य शेषोऽयं को हि तद्वेदेति। धूमाद्युपद्रवपरिहरणेन प्रत्यक्षेण फलेन द्वारविधिः स्तूयते, स्वर्गप्राप्तिरूपन्तु फलमाकालिकं विप्रकृष्टकालीनं न त्विदानीन्तनमित्यर्थः, तस्येप्सा तस्य प्राप्तुमिच्छा सा च, को हि तद्वेदेत्यनिश्चयोपन्यासे कारणं, यथा भाविकालीनः पौत्त्रप्रपौत्त्रादिवृत्तान्तो निश्चेतुं न शक्यते, तद्वत् स्वर्गप्राप्तिर्हि भाविनीति गुणयोगादनिश्चयोपन्यासः, धूमादिपरिहारस्तु प्रत्यक्षत्वान्निश्चित इत्यभिप्रायः। यद्यप्यन्यद्दृष्टविरोधायोदाहृतं शोभतेऽस्य मुखं य एवं वेदेति, तत्रोत्तरं सूचयति, विद्याप्रशंसेति। सोऽयं गर्गत्रिरात्रविधेःशेषः, तद्विषयकम्वेदनमपि मुखशोभाहेतुः किमुतानुष्ठानमिति स्तूयते, यथा कस्यचित् कर्णाभरणादिना मुखं शोभितं भवति, एवं वेदितुरुत्साहेनैव विकसितं वदनं शोभितमिव लोकैरुद्वीक्ष्यते, अतः शोभासादृश्यगुणयोगात् शोभत इत्युच्यते। यद्यप्यन्यद्दृष्टविरोधायोदाहृतं आस्य प्रजायां वाजी जायते य एवं वेदेति। सोऽपि वेदानुमन्त्रणविधेः शेषः, अत्रापि कैमुतिकन्यायेन स्तुतिः पूर्व्ववद्योजनीया, वेदितुः पुत्त्रः पितृशिक्षया स्वयमपि विद्वान् भवति, ततः प्रतिग्रहेणान्नं प्राप्नोति, तस्मादीदृशं गुणमभिप्रेत्य वाजी जायत इत्युक्तं यद्यप्यन्यानर्थक्यायोदाहृतं पूर्णाहुत्या सर्वान् कामानवाप्नोतीति, तत्रोत्तरं सूचयति, सर्व्वत्वमाधिकारिकमिति। पूर्णाहुतिं जुहुयादित्यस्य विधेः शेषोऽयं, सर्व्वकामावाप्तिहेतुत्वात् प्रशस्तेयमाहुतिरिति

---

* भाविकालीनेतिपाठः, का म। * शिष्यैः का-म।

स्तूयते, यथा सर्व्वे ब्राह्मणा भोजयितव्या इत्यत्र सर्वत्वं समुद्रागत-ब्राह्मणविषयं, एवं पूर्णाहुत्या कर्म्मसाङ्गत्वं यत्फलं तस्मिन्नधिकार-प्रस्तावे सम्भावितं तद्विषयमेव सर्वत्वं द्रष्टव्यं, पूर्णाहुतेरभावे सत्याधा-नरूपं कर्म्माङ्गं विकलं भवति, तच्च वैकल्यं पूर्णाहुत्या समाधीयत इत्येकः कामः, तस्मिन् समाहिते सत्याहवनीयाद्यग्नयोऽग्निहोत्रादिकर्म्मसु योग्या भवन्तीत्ययमन्यः कामः, तैश्च कर्म्मभिस्तत्फलं प्राप्यत इति कामान्तरं, ईदृशी सर्व्वकामावाप्तिराहुत्यन्तरेष्वपि इति चेत्, विद्यतां नाम किमस्मिन्नं, न ह्यस्यैतावता पूर्णाहुतिस्तुतेः काचिद्धानिरस्ति । ननु पूर्णाहुतेरङ्गभावत्वात् तदीयफलश्रुतेरर्थवादत्वेन स्तावकत्वं भवतु, द्रव्यसंस्कारकर्म्मसु परार्थत्वात् तदीयफलश्रुतेरर्थवाद इति सूत्रेण निर्णीतत्वात् पशुबन्धवाक्यस्य तु कर्म्मविधायकत्वात् सर्वलोकाभिजयस्य मुख्यफलत्वादन्यानर्थक्यं दुर्व्वारमित्याशङ्क्योत्तरं सूत्रयति, फलस्य कर्म्म-निष्पत्तेः, तेषां लोकवत् परिमाणतः सारतो वा फलविशेषः स्यादिति । पृथिव्यन्तरिक्षद्युलोकेष्वन्यतमलोकाभिजयरूपं फलं पशुबन्धकर्म्मणा निष्पद्यते, तेषाञ्च पृथिव्यादीनां फलानां कर्म्मान्तरेण परिमाणाधिक्यं, सारवत्त्वं वा सम्पद्यते, ततः फलविशेषः स्यादिति नास्त्यानर्थक्यं, लोकवदित्यत्रार्थे दृष्टान्तः, यथा लोके निष्केण खारीपरिमितव्रीहीन् विक्रीय निष्कान्तरेण पुनः क्रये सति परिमाणाधिक्यं भवति, यथा वा निष्केण वस्त्रमात्रं लभ्यते, निष्कद्वयेन तु सारभूतं दुकूलं, यथा भोगाधिक्यं भोगसारत्वं वा कर्म्मान्तरेण द्रष्टव्यं, ब्रह्महत्याया अपि मानस्याः स्वल्पाया वेदनमात्रेण तरणं, कायिक्यास्तु महत्या अश्वमेधेनेति नास्त्यानर्थक्यं। योऽपि नान्तरिक्षे न दिवीत्यप्रसक्तप्रतिषेध उदाहृतः, तथा ववरः प्रावाहणिरित्यनित्यसंयोग उदाहृतः, तत्रोभयत्रोत्तरं सूत्रयति, अन्ययोर्यथोक्तमिति । अन्ययोरनयोरुदाहरणयोरुत्तरं पूर्व्वोक्तमेव द्रष्टव्यं, अन्तरिक्षादौ चयननिन्दारूपेऽर्थवादे हिरण्यं निधाय चेतव्यमित्यस्य विधेः शेषः, अतोऽत्र स्तुत्यर्थेन विधीनां स्युरि-त्युक्तमेवोत्तरं, अन्तरिक्षे चयनप्रसक्त्यभावात्तन्निन्दा नित्यानुवादोऽस्तु, तेनापि विधिः स्तोतुं * न शक्यते, नित्यसिद्धार्थानुवादिना वायोः क्षेपिष्ठत्वेन, पशुविशेषस्य स्तुतत्वात् । ववरः प्रावाहणिरकामयते त्यत्रापि ववरनामकः कश्चिदनित्यः पुरुषो मनुष्यो * न विवक्षितः,

* नेति नास्ति का-भं । * मनुष्य इति नास्ति पं-का-भं ।

किन्तु ववरध्वनियुक्तः प्रकर्षेण वहनशीलो वायुर्थ्यं ववरशब्दस्यार्थो नित्य एवार्थो विवक्षित, इत्येतदुत्तरं प्रथमपादस्यान्तिमाधिकरणे प्रोक्तं, तस्मात् सम्भावितदोषाणां परिहृतत्वादर्थवादानामस्ति प्रामाण्यं, तत्र सङ्ग्रहश्लोकाः, वायुर्वा इत्येवमादेरर्थवादस्य मानता, न विधेयेऽस्ति धर्म्मे किं किं वार्त्ता तत्र विद्यते। विध्यर्थवादशब्दानां मिथोपेक्षापरिक्षयात्, नास्त्येकवाक्यता धर्म्मे प्रामाण्यं सम्भवेत् कुतः। विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यं पुरुषार्थयोः। तेनैकवाक्यतस्तस्माद्वादानां धर्म्ममानतेति। तदेवं वेदे विद्यमानानां त्रयाणां मन्त्रविध्यर्थवादभागानामप्रामाण्यकारणाभावाद्बोधकानान्तेषां प्रामाण्यस्य स्वतस्त्वङ्गीकारात् कृत्स्नस्यापि वेदस्य प्रामाण्यं सिद्धं। नन्वेवमपि वेदस्य पौरुषेयत्वेन विप्रलम्भकवाक्यवदप्रामाण्यं स्यात्, पौरुषेयत्वञ्च प्रथमपादे पूर्व्वपक्षत्वेन जैमिनिः सूत्रयामास, वेदांश्चैके सन्निकर्षं पुरुषाख्येति। एके वादिनो वेदान् प्रति सन्निकर्षं मन्यन्ते, कालिदासादिभिर्निर्म्मितानां रघुवंशादिग्रन्थानां समुच्चयार्थश्चकारः, ते ह्यत्र दृष्टान्ततया समुच्चीयन्ते। यथा रघुवंशादय इदानीन्तनाः, तथा वेदा अपि। ननु वेदा अनादयः, अतएव वेदकर्तृत्वेन पुरुषा आख्यायन्ते, वैयासिकं भारतं, वाल्मीकीयं रामायणमित्यत्र यथा भारतादिकर्तृत्वेन व्यासादय आख्यायन्ते, तथा काठकं कौथुमं तैत्तिरीयमित्येवं, तत्तद्वेदशाखाकर्तृत्वेन काठकादिना समाख्यातत्वाद्वेदाः पौरुषेयाः, नतु नित्यानामेव सतां वेदानामुपाध्यायवत् सम्प्रदायप्रवर्त्तकत्वेन काठकादिसमाख्या स्यादित्याशङ्क्य युक्त्यन्तरं सूत्रयति, अनित्यदर्शनाच्चेति। अनित्या जननमरणवन्तो ववरादयो वेदार्थे श्रूयन्ते, ववरः प्रावाहणिरकामयत। कुसुरुविन्द औद्दालकिरकामयतेति, तथा सति ववरादिभ्यः पूर्व्वमभावादनित्या वेदाः, विमतं वेदवाक्यं पौरुषेयं वाक्यत्वात्, कालिदासादिवाक्यवदित्याद्यनुमानसमुच्चयार्थश्चकारः, सिद्धान्तं सूत्रयति, उक्तन्तु शब्दपूर्व्वत्वमिति। तु शब्दो वेदानामनित्यत्वं वारयति, शब्दस्य वेदरूपस्य कठादिपुरुषेभ्यः पूर्व्वत्वमनादित्वं प्राचीनैरेव सूत्रैरुक्तं, औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति। अस्मिन् सूत्रे औत्पत्तिकशब्देन सर्व्वेषां शब्दानां वेदानां तदर्थानां तदुभय सम्बन्धानाञ्च नित्यत्वं प्रतिज्ञायोत्तराभ्यां शब्दाधिकरणवाक्याधिकरणाभ्यामुपपादितत्वात्, का तर्हि काठकाद्याख्यायिकाया गतिरित्याशङ्क्य, सम्प्रदायप्रवर्त्तनात् सैयमुपपद्यत इत्युत्तरं सूत्रयति, आख्या

यप्रवचनादिति। अनित्यमाख्यायिकाया गतिः, ततः परं बबराद्य-नित्यदर्शनं यदुक्तं तस्य किमुत्तरमित्याशङ्क्योत्तरं सूत्रयति, परं श्रुतिसामान्यमात्रमिति। यत्परं बबरादिकं तच्छब्दसामान्यमेव, नतु मनुष्यो बबरनामकोऽत्र विवक्षितः बबरध्वनियुक्तस्य प्रवहणस्वभा-वस्य वायोरत्र वक्तुं शक्यत्वात्। ननु वेदे क्वचिदेवं श्रूयते, वनस्पतयः सत्रमासत, सर्पाः सत्रमासतेति, तत्र वनस्पतीनामचेतनत्वात् सर्पा-णाञ्चेतनत्वेऽपि विद्यारहितत्वान्न* तदनुष्ठानं सम्भवति, अतो जर-द्गवो गायति, मद्रकाणीत्याद्युन्मत्तबालवाक्यसदृशत्वात् केनचित् कृतो वेद इत्याशङ्क्योत्तरं सूत्रयति, कृते चाविनियोगः स्यात् कर्म्मणः सम त्वादिति। यदि ज्योतिष्टोमादिवाक्यं केनचित्पुरुषेण क्रियेत, तदानीं कृते तस्मिन् वाक्ये स्वर्गसाधनत्वे ज्योतिष्टोमस्य विनियोगो न स्यात्, साध्यसाधनभावस्य पुरुषेण ज्ञातुमशक्यत्वात्, श्रूयते तु विनियोगः ज्योतिष्टोमेन स्वर्गकामो यजेतेति, न चैतदुन्मत्तवाक्यसदृशं, लौकिका-नित्यविधिवाक्यवत्, भाव्यकरण, इतिकर्त्तव्यतारूपैस्त्रिभिरंशैरुपेताया भावनाया अवगमात्, लोके हि ब्राह्मणान् भोजयेदिति विधौ, किं केन कथमित्याकाङ्क्षायां तृप्तिमुद्दिश्यौदनेन द्रव्येण शाकसूपादिपरिवेषण-प्रकारेणेति यथोच्यते, ज्योतिष्टोमविधावपि स्वर्गमुद्दिश्य सोमेन द्रव्येण दीक्षणीयाद्युक्तप्रकारेणेत्युक्ते कथमुन्मत्तवाक्यसदृशं भवेदिति, वनस्पत्यादिसत्रवाक्यमपि न तत्सदृशं, तस्य सत्रकर्म्मणो ज्योतिष्टोमा-दिना समत्वात्। यत् परो हि शब्दः सशब्दार्थ इति न्यायविद आहुः, ज्योतिष्टोमादिवाक्यस्य विधायकत्वादनुष्ठाने तात्पर्य्यं, वनस्पत्यादि-सत्रवाक्यस्यार्थवादत्वात् प्रशंसायां तात्पर्य्यं, सा चाविद्यमानेनापि कर्त्तुं शक्यते, अचेतना अविद्वांसोऽपि सत्रमनुष्ठितवन्तः तत् किं पुन-श्चेतना विद्वांसो ब्राह्मणा, इति सत्रस्तुतिश्चकार, पूर्व्वपक्षोक्तस्य वाक्य-त्वहेतोः कर्त्रनुपलम्भेन पराहतिं समुच्चिनोति, तस्मान्नास्ति वेदस्य पौरुषेयत्वं। अत्रैतौ सङ्ग्रहश्लोकौ। पौरुषेयं नवा वेदवाक्यं स्यात् पौरुषेयता। काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत्। समा-ख्यानं प्रवचनाद्वाक्यत्वन्तु पराहतं। तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौ-रुषेयता। ननु भगवता बादरायणेन वेदस्य ब्रह्मकार्य्यत्वं सूत्रितं, शास्त्रयोनित्वादिति। ऋग्वेदादिशास्त्रकारणत्वात् ब्रह्म सर्व्वज्ञमिति

---

* नचानुष्ठानमिति का-मं।

सूत्रार्थः, वाढं, नहि तावता पौरुषेयत्वं भवति मनुष्यनिर्म्मितत्वाभावात्। ईदृशमपौरुषेयत्वमभिप्रेत्य व्यवहारदशायामाकाशादिवन्नित्यत्वं वादरायणेनैव वेदनित्यताधिकरणे सूचितं, अतएव च नित्यत्वमिति। श्रुतिः स्मृतिश्चात्र भवतः, वाचा विरूपनित्ययेति श्रुतिः, अनादिनिधना नित्या वागुत्सृष्टा स्वम्भुवेति स्मृतिः, तस्मात् कर्त्तृदोषशङ्काया अनुदयान्मन्त्रब्राह्मणात्मकस्य वेदस्य निर्व्विघ्नं प्रामाण्यं सिद्धं। ननु मन्त्रब्राह्मणात्मकस्य वेदस्य प्रामाण्यं न युक्तं, तयोः स्वरूपस्य निर्णेतुमशक्यत्वात्, मैवं, द्वितीयाध्यायस्य प्रथमे पादे सप्तमाष्टमयोरधिकरणयोर्निर्णीतत्वात्। सप्तमाधिकरणमारचयति, अहे वुध्नियमन्त्रं म इति मन्त्रस्य लक्षणं नास्ति अस्ति, वास्य नास्त्येतदव्याप्त्यादेरवारणात् नास्त्यतिव्याप्तेरस्त्येतदव्याप्त्यादेरवारणात्, अत्र याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितं। तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते। आधान इदमाम्नायते, अहे वुध्निय मन्त्रं मे गोपायेति, तत्र मन्त्रस्य लक्षणं नास्ति, अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात्। विहितार्थाभिधायको मन्त्र इत्युक्ते, वसन्ताय कपिञ्जलानालभेतेत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः। मननहेतुर्मन्त्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिः। एवमसिपदान्तो मन्त्र उत्तमपुरुषान्तो मन्त्र इत्यादि लक्षणानां परस्परमव्याप्तिरिति चेत्, मैवं, याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात्। तच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति। उरुप्रथस्वेत्यादयोऽनुष्ठानस्मारकाः, अग्निमीळे पुरोहितमित्यादयः स्तुतिरूपाः। इषेत्वेत्यादयस्त्वान्ताः। अग्न आयाहि वीतय इत्यादय आमन्त्रणोपेताः। अग्नीदग्नीन्विहरेत्यादयः प्रैषरूपाः। अधःस्विदासीदुपरिस्विदासीदित्यादयो विचाररूपाः। अम्बे अम्बाल्यम्बिके नमानयति कश्चनेत्यादयः परिदेवनरूपाः। पृच्छामि त्वा परमन्तं पृथिव्या, इत्यादयः प्रश्नरूपाः। वेदिमाहुः परमन्तं पृथिव्या, इत्यादय उत्तररूपाः,। एवमन्यदप्युदाहार्य्यं। ईदृशेष्वन्यविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्म्मो, ऽस्ति यस्य लक्षणमुच्यते, लक्षणस्योपयोगः पूर्व्वाचार्य्यैर्दर्शितः। ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः। लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चित इति, तस्मादभियुक्तानां मन्त्रोऽयमिति समाख्यानं लक्षणं अष्टमाधिकरणमारचयति, नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा, नाश्नायन्त वेदभागा इति क्लृप्तेरभावतः। मन्त्रश्च ब्राह्मणञ्चेति द्वौ भागौ तेन मन्त्रता, अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणं चातु-

मांस्येष्विदमाम्नायते एतद्ब्राह्मणान्येव पञ्चहवींषीति, तत्र ब्राह्मणस्य लक्षणं नास्ति, कुतो वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात्, पूर्व्वोक्तमन्त्रभाग एकः, भागान्तराणि कानिचित् पूर्व्वैरुदाहृत्य सङ्गृहीतानि हेतुर्निर्वचनं निन्दा प्रशंसा संशयोविधिः। परक्रिया पुरा कल्पो व्यवधारणकल्पनेति। तेन ह्यन्नं क्रियत इति हेतुः। तद्दध्नो दधित्वमिति निर्वचनं। अमेध्या वै माषा इति निन्दा। वायुर्वै क्षेपिष्ठा देवता इति प्रशंसा। तद्व्यचिकित्सज्जुहवानी३मा हौषा३मिति संशयः। यजमानेन सम्मितौदुम्बरी भवतीति विधिः। माषानेव मह्यं पचतीति परकृतिः। पुरा ब्राह्मणा अभैषुरितिपुराकल्पः। यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति विशेषावधारणकल्पना। एवमन्यदप्युदाहार्यं। न च हेत्वादीनामन्यतमं ब्राह्मणमिति लक्षणं, मन्त्रेष्वपि हेत्वादिसद्भावात्, इन्दवो वा मुशन्ति हीति-हेतुः। उदानिषुर्महीरिति, तस्मादुदकमुच्यत इति निर्वचनं। मोघमन्नं विन्दते अप्रचेता इति निन्दा। अग्निर्मूर्द्धादिव इति प्रशंसा। अधः स्विदासीदुपरिस्विदासीदिति संशयः। वसन्ताय कपिञ्जलानालभेतेति विधिः। सहस्रमयुतं ददामीति परकृतिः। यज्ञेन यज्ञमयजन्त देवा इति पुराकल्पः। * इतिकरणबहुलं ब्राह्मणमितिचेत्, न, इत्यददा इत्ययजथा इत्यपठ इति ब्राह्मणो गायेदित्यस्मिन् ब्राह्मणेन गातव्ये मन्त्रेऽतिव्याप्तेः। इत्याहेत्यनेन वाक्येनोपनिबद्धं ब्राह्मणमितिचेत्, न, राजा चिद्यम्भगम्भक्षीत्याह, यो मायातं यातुधानेत्याह, १ये वा वत्साः शुचिरसीत्याहेत्यनयोर्मन्त्रयोरतिव्याप्तेः, आख्यायिकारूपं ब्राह्मणमितिचेन्न, यमयमीसंवादसूक्तादावतिव्याप्तेः, तस्मान्नास्ति ब्राह्मणस्य लक्षणमिति ब्रूमः, मन्त्रब्राह्मणरूपौ द्वावेव वेदभागावित्यङ्गीकारात्, मन्त्रलक्षणस्य पूर्व्वमभिहितत्वात्, अवशिष्टवेदभागो ब्राह्मणमित्येतल्लक्षणं भविष्यति। तदेतल्लक्षणद्वयं जैमिनिः सूत्रयामास, तच्चोदकेषु मन्त्राख्या शेषे ब्राह्मणशब्द इति। तच्चोदकेषु तदभिधायकेषु वाक्येषु मन्त्र इति समाख्या सम्प्रदायविद्भिर्व्यवह्रीयते, मन्त्रानधीमह इति। मन्त्रव्यति-

---

* अत्रविशेषावधारणकल्पनाया विवरणं कर्त्तुमुचितं। किन्तु आदर्शे तदभावान्न लिखितं पुस्तकान्तरेष्वेवमभावः।

रिक्ते भागे तु ब्राह्मणशब्दस्तैर्व्यवहृत इत्यर्थः। ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयो भागा आम्नायन्ते, यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीरिति, मैवं, विप्रपरिव्राजकन्यायेन ब्राह्मणावान्तरभेदानामेवेतिहासादीनां पृथगभिधानात्। देवासुराः संयत्ता आसन्नित्यादय इतिहासाः। इदं वा अग्रेनैव किञ्चिदासीन्नद्यौरासीदित्यादिकं जगतः प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणं। कल्पस्तु आरुणकेतुकचयनप्रकरणे समाम्नायते, इति मन्त्राः, कल्पोऽत ऊर्द्धं, यदि बलिं हरेदित्यग्निचयने यमगाथाभिः परिगायतीति विहिता मन्त्रविशेषा गाथाः। मनुष्यवृत्तान्तप्रतिपादका ऋचो नाराशंस्यः। तस्मान्मन्त्रब्राह्मणव्यतिरिक्तभागाभावान्मन्त्रब्राह्मणस्वरूपस्य च लक्षितत्वात्तदुभयात्मकत्वं वेदस्य सुस्थितं। मन्त्रावान्तरविशेषश्च तस्मिन्नेव पादे इत्थमेव विचारितः, ऋक्सामयजुषां लक्ष्म साङ्कर्य्यादिति शङ्कते। पादोऽथ गीतिः प्रश्लिष्टपाठ इत्यस्वसङ्करः। इदमाम्नायते, अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदुः ऋचः सामानि यजूंषीति। त्रीन् वेदान् विदन्तीति त्रिवेदः, त्रिविदां सम्बन्धिनोऽर्थतारस्त्रयीविदः ते च यं मन्त्रभागमृगादिरूपेण त्रिविधमाहुस्तङ्गोपायेति योजना, तत्र त्रिविधानामृक्सामयजुषां व्यवस्थितं लक्षणं नास्ति कुतः, साङ्कर्य्यस्य दुष्परिहरत्वात्, अध्यापकप्रसिद्धेषु ऋग्वेदादिषु पाठतो मन्त्र इति हि लक्षणं वक्तव्यं, तच्च सङ्कीर्णं, देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिरित्ययं मन्त्रो यजुर्वेदे सम्मतिपन्नो यजुषां मध्ये पठितः, न च तस्य यजुष्ट्वमस्ति तद्ब्राह्मणे सावित्र्यर्चेत्युक्तेन व्यवहृतत्वात्। एतत्सामगायन्नास्त इति प्रतिज्ञाय, किञ्चित् सामयजुर्वेदे गीतं। अक्षितमस्यच्युतमसि, प्राणं शंसितमसीति त्रीणि यजूंषि सामवेदे समाम्नातानि, तथा गीयमानस्य साम्न आश्रयभूता ऋचः सामवेदे समाख्याताः तस्मान्नास्ति मन्त्रलक्षणमिति चेत् न, पादादीनामसङ्कीर्णलक्षणत्वात्। पादेनार्द्धर्चेनचोपेता वृत्तबद्धा मन्त्रा ऋचः, गीतिरूपा मन्त्राः सामानि, वृत्तगीतवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषीत्युक्ते न क्वापि सङ्करः। तदेतत्त्रविध्यं जैमिनिना सूत्रत्रयेण लक्षितं, तेषामृग्यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या,

---

* भामाम्नायन्ते कां, भं। * पाठार्थे मां।

शेषे यजुःशब्द इति। एतमेव मन्त्रावान्तरविशेषमुपजीव्य वेदाना-
मृग्वेदो यजुर्वेदः सामवेद इति त्रैविध्यं सम्पन्नं। तेषाञ्च वेदानां
सर्व्वेषामन्यतमस्य वा स्वशाखानुसारेणाध्ययनमुपनीतेन कर्त्तव्यं। तथाच
याज्ञवल्क्यः स्मरति, वेदानधीत्य वेदौ वा वेदं वापि यथाक्रम-
मिति। एकवेदपक्षेऽपि पितृपितामहादिपरम्पराप्राप्तएववेदोऽध्येतव्यः,
इत्यभिप्रेत्य स्वाध्यायोऽध्येतव्य. इति स्वशब्द आम्नातः। तच्चाध्ययनं न
काम्यं. किन्तु नित्यं; अतएव पुरुषार्थानुशासने सूचितं, वेदाध्ययनं
नित्यमनध्ययने पातादिपातित्यञ्चैवमाम्नायते. अपहतपाप्मा स्वाध्यायो
वेदपवित्रं वा एतत्तं योऽनुत्सृजत्यभागो वाचि भवत्यभागो नाके
तदेषाभ्युक्ता, यस्तित्याज सखिविदं सखायं, न तस्य वाच्यपि भागोऽस्ति,
यदीं शृणोत्यलकं शृणोति. नहि प्रवेद सुकृतस्य पन्थामिति। तस्मात्
स्वाध्यायोऽध्येतव्य इति अध्येतारं पुरुषं तदीयप्रयासाभिज्ञानेन सखि-
वत् पालयतीति सखिविद्वेदः; बहुद्रव्यप्रयाससाध्यक्रतुफलस्याध्ययन-
मात्रेण सम्पादनं तत्पालनं, तदप्याम्नायते, यं यं क्रतुमधीते, तेन तेनास्येष्टं
भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छतीति। यद्यप्येतद्ब्रह्मयज्ञस्वाध्या-
यफलं, तथापि ग्रहणार्थाध्ययनमन्तरेण ब्रह्मयज्ञासम्भवात् तदीय-
फलमपि सम्पद्यते। ईदृशं सखिविदं वेदरूपं सखायं यः * पुमानध्यय-
नमकृत्वा परित्यजति, तस्य वाच्यपि भाग्यं नास्ति, फले भाग्यं नास्तीति।
किमु वक्तव्यं सकलदेवतानां धर्म्मस्य परब्रह्मतत्त्वस्य प्रतिपादकवेद-
मनभ्यस्य परनिन्दानृतकलहहेतुकां लौकिकीं वार्त्तां सर्व्वत्रोच्चारयतः
स्पष्ट एव वाचि भाग्याभावः। अतएवाम्नायते नानुध्यायाद् बहूञ्छब्दान्
वाचो विग्लापनं हि तदिति; यद्यप्यसौ काव्यनाटकादिकं शृणोति, तथा-
पि व्यर्थकत्वेन तच्छ्रवणं, तेन सुकृतमार्गज्ञानाभावादित्यर्थः। स्मृतिरपि,
योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमं, स जीवन्नेव शूद्रत्वमाशु
गच्छति सान्वय इति, एवमन्यान्यपि बहूनि वचनान्युदाहर्त्तव्यानि।
नन्वधीते वेदे पश्चादध्ययनविध्यर्थं ज्ञानं, ज्ञाने सति पश्चादध्ययने
प्रवृत्तिरित्यन्योन्याश्रय इतिचेत्, वाढं,। अतएव गुरुमतानुसारिणः,
आचार्य्यकर्त्तृकादध्यापनप्रवृत्तिं माणवकाध्ययनस्य महता प्रयासेन
सम्पादयन्ति। मतान्तरानुसारिणस्तु पञ्चाशात्मादयोऽध्ययनात् प्रागेव
सन्ध्यावन्दनादिविधिज्ञानवत् पित्रादिभ्योऽध्ययनविधिज्ञानं वर्णयन्ति।

* पुमः का, मं।

यद्यप्यध्यायनविधिप्रयुक्तिः, यदिवा स्वविधिप्रयुक्तिः, सर्वथाप्युपनीतै-
रध्येतव्य एव वेदः, तस्य चाध्ययनस्यादृष्टार्थत्वमक्षरग्रहणान्तत्वञ्च पुरु-
षार्थानुशासने सूचितं। तानि सूत्राणि तद्वृत्तिञ्चोदाहरामः। अध्ययन-
स्यादृष्टार्थत्वं साधयितुं पूर्व्वपक्षयति, अदृष्टार्थात्वधीतिर्विहितत्वा-
दिति। दृष्टफलसाधने भोजनादौ विध्यदर्शनाद्विहितमध्ययनमदृ-
ष्टार्थमवगन्तव्यं। अदृष्टविशेषो न श्रुत इतिचेत् तत्राह, घृतकुल्या-
द्यतिदेशः स्वर्गकल्पनञ्चेति। ब्रह्मयज्ञजपाध्ययनार्थवादं नित्याध्ययने
ऽतिदिश्य तत्रत्यं घृतकुल्यादिकं रात्रिसत्रन्यायेन फलत्वेन कल्पनीयं।
ये त्वर्थवादातिदेशं नेच्छन्ति, तैर्विश्वजिन्न्यायेन स्वर्गः कल्पनीयः। दृष्ट-
फलयोः संस्कारप्राप्त्योः सम्भवे कथमदृष्टकल्पनेत्यत आह, अयुक्ते
संस्कारप्राप्ती इति। संस्कृतस्वाध्यायस्य क्वचित् क्रतौ विनियोगादर्शनात्
प्राप्तेः स्वयमपुरुषार्थत्वाच्चेत्यर्थः। स्वाध्यायप्राप्तिरर्थप्रमितिहेतुतया
पुरुषार्थं इत्याशङ्क्य विषनिर्हरणादिकार्य्यविनियुक्तमन्त्रवदध्ययनाङ्ग-
तया विनियुक्तानां ज्योतिष्टोमादिवाक्यानां न स्वार्थे प्रामाण्यमित्याह,
अन्याङ्गं नार्थप्रमापकमिति। अध्ययनविधायकन्तु वाक्यं स्वविहिता-
ध्ययनस्यैवाङ्गमिति कृत्वा स्वार्थे प्रामाण्यमित्याह, अध्ययनवाक्यमन-
न्याङ्गमिति। नन्वेवमदृष्टार्थत्वे कर्म्मकारकभूतस्वाध्यायगतफलाभावा-
दध्येतव्य इति कर्म्मवाची तव्यप्रत्ययो निरर्थ्यकेत्यत आह, सक्तुवत्
करणपरिणाम इति। * सक्तुभिर्जुहोतीत्यत्र कर्म्मत्वेन प्रधानभूतान्
सक्तूनुद्दिश्य होमसंस्कारविधाने प्रतीयमानेऽपि होमसंस्कृतानां भस्मी-
भूतानां सक्तूनामन्यत्र विनियोगाभावात् कर्म्मप्राधान्यं हित्वा सक्तुभि-
र्जुहोतीति करणपरिणामः कृतः। एवमत्रापि कर्म्मभूतयोः संस्कार-
प्राप्त्योरसम्भवात्, स्वाध्यायेनाधीयीतेति वाक्यपरिणामः कर्त्तव्यः।
इदानीं दृष्टफले सत्यदृष्टफलं न कल्प्यमिति सिद्धान्तयति, दृष्टे तु
नादृष्टमिति। किन्तद्दृष्टफलमिति तदाह, दृष्टौ प्राप्तसंस्काराविति।
अक्षरप्राप्तेः परम्पराया पुरुषार्थमाह, प्राप्यार्थबोध इति, जायत
इति शेषः। नच भोजनादिवदन्वयव्यतिरेकसिद्धत्वाद्विधिवैयर्थ्यमिति
शङ्कनीयं। अवघातादिवन्नियमादृष्टाय विध्युपपत्तेरित्याह, विधि-
र्नियत्या इति। यत्तूक्तं संस्कृतस्य विनियोगादर्शनान्न संस्कार इति
तत्राह, संस्कारसिद्धिः क्रत्वध्ययनविधिद्वयोपादानादिति। क्रतुविधयो

* सक्तून् ध, का।

न्हि विषयावबोधमपेक्षमाणास्तदवबोधे स्वाध्याये विनियुज्यन्ते, अध्ययनविधिश्च लिखितपाठादिव्यावृत्त्याध्ययनसंस्कृतत्वं स्वाध्यायस्य गमयति, अत उभयोपादानात्तत्सिद्धिः। ननु संस्कारो नामादृष्टातिशयः- स च न स्वाध्यायगतः. तव्यप्रत्ययेन स्वपदोपात्तप्रकृत्यर्थीभूताध्यय, नोपरक्ताया * भावनाया अपूर्व्वाभिधानात्, ततः कथं स्वाध्यायस्य संस्कृतत्वमिति, तत्राह, तव्यः कर्म्मवाच्यदृष्टवाचीति। तत्र तव्यप्रत्ययस्य कर्म्माभिधायितया कर्म्मकारकस्य स्वाध्यायस्य तव्यप्रत्ययार्थं प्रतिप्रकृत्यर्थादध्ययनादपि प्रत्यासन्नत्वात् स्वाध्यायगतमेवापूर्व्वं तव्यप्रत्ययो वक्ति. अपूर्वस्य धात्वर्थजन्यत्वनियमेऽपि तदुपरक्तत्वानियमादिति भावः। यच्चोक्तमन्याङ्गं नार्थप्रमापकमिति, तदसत्. यतो मन्त्राणां स्वतन्त्रादृष्टशेषाणां तथात्वं युज्यते, इह तु स्वाध्यायाश्रितमदृष्टं, तस्य च स्वाध्यायगतान्तरसामर्थ्यसिद्धार्थावबोधे फले सति फलान्तरकल्पनायोगात् प्रामाण्यस्योपष्टंभकमेवादृष्टं नतु प्रतिबन्धकमित्याह, स्वतन्त्रादृष्टशेषत्वान्न स्वार्थप्रमा प्रतिबध्यत इति। सक्तुन्यायेन कर्म्मकारकप्राधान्ये परित्यक्ते स्वतन्त्रादृष्टमेवात्रापि स्यादित्यत आह, यथा श्रुतोपपत्तेर्न सक्तुन्याय इति। सक्तुषु गत्यभावात् श्रुतं परित्यज्याश्रुतं कल्प्यतां नाम. नेह तद्युक्तं प्रदर्शितत्वादित्यर्थः। इत्थमध्ययनविधे दृष्टार्थत्वं प्रसाध्यार्थावबोधपर्य्यन्ततां निराकर्त्तुं पूर्व्वपक्षयति, वैधमर्थनिर्णयं भट्टगुरुर्विधेः पुमर्थावसानादिति। सर्वत्र विधेः पुरुषार्थपर्य्यवसायित्वनियमादत्रापि पुरुषार्थभूतं फलवदर्थनिश्चयमध्ययनविधिप्रयुक्तं भट्टगुरुर्मन्यते। ननु सकृदध्ययनादावृत्तिसहितादर्थनिश्चयो नोपलभ्यत इत्याशङ्क्य, तथा सति तस्मिन् सिद्धेऽयं स्वाध्यायविधिरर्थनिश्चयहेतुं विचारं कल्पयिष्यतीत्याह, सविचारमाक्षिपेदिति। ननु स्वाध्यायविधेय तदुपकारिणोरेव विधिः प्रयोजक इति सर्व्वत्र नियमः। तथा सत्येतादृशं विचारं कथमत्राध्ययनविधिराक्षेप्स्यतीत्यत आह, अविधेयानुपकार्य्याक्षेपोऽवघातावृत्तिवदिति, व्रीहीनवहन्तीत्यत्रावघातमात्रं विधेयं नतु तदावृत्तिः, तस्या अधात्वर्थत्वान्नापि सा विधेयोपकारिणी, अन्तरेणावृत्तिं सकृन्मुषलमात्रादवघातसिद्धेः, तथापि तण्डुलनिष्पत्तिफलसिद्धये स विधिरावृत्तिं यद्वदाक्षेप त्तद्वत् प्रकृतेऽप्यवगन्तव्यं। ननु वेदमात्राध्यायिनोऽर्थावबोधानुदयेऽपि

---

* उपरक्तापूर्व्वाभिधानात् सं, का।

भावरचाश्रमुसहितवेदाध्यायिनः तदुदयसद्भावात्, तं प्रति अर्थविचारविधिं न कल्पयेदित्याशङ्कार्थावबोधपरिहारापेक्षित एव विचार इत्याह, साङ्गाध्ययनात्तद्भावो विचारो विरोधापनुदिति। सिद्धान्तयति प्राप्तेस्तु गवादिवत् पुमर्थत्वादिधिस्तदन्त इति। यथा फलभूतस्य क्षीरादेर्हेतवो गवादयोऽपि पुरुषैरर्थ्यन्ते, तथा फलवदर्थावबोधहेतोरक्षरप्राप्तेरपि पुरुषार्थत्वादध्ययनविधिरक्षरप्राप्त्यवसानोऽवगन्तव्यः। नन्वक्षरप्राप्तेः पुरुषार्थत्वं फलवदर्थावबोधप्रयुक्तं चेत्, तर्हि तद्बोधस्य मुख्यपुरुषार्थत्वात्, बोधान्त एव विधिः किं न स्यादित्यत आह, फलवद्बोधान्तत्वे अध्ययनकात्स्न्यमिति। बोधस्य हि फलं कर्मानुष्ठानं, तथा सति यस्य ब्राह्मणादेर्यस्मिन् बृहस्पतिसवादावधिकारः, तस्य तद्वाक्यनामाध्ययनं स्यात्, नतु राजसूयाद्यर्थवाक्याध्ययनं, तत्र प्रवृत्त्यादिफलाभावात्, स्वपक्षे तु नायं दोष इत्याह, कृत्स्नप्राप्तिर्जपार्थेति। नचावबोधकत्वे विधिबोधकत्वाभावेनार्थावबोध एव न सिद्धेदिति शङ्कनीयं, प्रमाणस्य प्रमेयबोधत्वस्वाभाव्यात, लौकिकाप्तवाक्यानामन्यतरेणैव * विधिबोधकत्वदर्शनादित्याह, लोकवत्तेजो बोध इति। ननु बोधस्य विधिफलत्वे बोधकाममुद्दिश्य विधातुं शक्यत्वात् सुलभोऽधिकारी स्यादित्याशङ्क्य प्राप्तिपक्षेऽपि, प्राप्तिकाम उपनीताष्टवर्षब्राह्मणोऽधिकारी सुलभ एवेति परिहारं स्पष्टत्वादुपेक्ष्य बोधस्य काम्यत्वं दूषयति, सोऽकाम्यः प्राग्बोध्यभानाभानयोरिति। बोध्यस्याग्निहोत्रादिलक्षणवेदार्थस्याध्ययनात् प्राक् सन्ध्योपासनादिवत् पित्राद्युपदेशत एव भाने सिद्धत्वादेव सोऽर्थबोधो न काम्यः। अभाने कामयितुमशक्यः, ज्ञात एव विषये कामना नियमात् ननु सामान्यतो ज्ञाते विशेषतो बुभुत्सा सम्भवति, यद्वा विशेषतोऽपि पित्राद्युपदेशादवगते सति, पौरुषेयिकज्ञानस्य प्रामाण्यनिर्णयाय पुनर्बोधकामनायुक्तैवइत्याशङ्क्यैवमप्यर्थावबोधमुद्दिश्य स्वाध्ययनविधानं न सम्भवति, इत्याह उद्देशायोगादिति। अग्निहोत्रादिविशेषज्ञानानां न तावदेकबुद्ध्या विशेषाकारेणोद्देशः सम्भवति, अनन्तत्वात् सामान्याकारेणोद्देशे सामान्यमेव विधिफलं स्यान्नतु ज्ञानविशेषः, ततो नोद्देशो युक्तः। नन्वर्थावबोधमुद्दिश्याचाराभावे वेदस्य स्वार्थे तात्पर्यं न स्यादित्याशङ्क्य, उपक्रमोपसंहारावभ्यासोऽपूर्वताफलं। अर्थवादो-

---

* भकारेणैव का, ध।

उपपत्तीच लिङ्गं तात्पर्य्यनिर्णये, उपक्रमादिलिङ्गगम्यं तात्पर्य्यं शब्दबलादेव सिद्ध्यतीत्याह, तात्पर्य्यं शब्दादिति। तर्ह्यर्थज्ञानमुद्दिश्य शब्दोच्चारणं * व्यर्थं स्यादितिचेत्, न, पुरुषसम्बन्धकृतदोषाख्यप्रतिबन्धपरिहारार्थत्वादित्याह, उद्दिश्योच्चारणं दोषं * हन्ति लोक इति। नन्वध्ययनविधिर्बोधान्तत्वाभावे विचारशास्त्रं न प्रवर्त्तेत प्रयोजनाभावादित्याशङ्क्याह, विचार उत्तरविधिप्रयुक्त उपपद्यत, इति क्रतुबोधविधयः साङ्गवेदाध्ययनादापात प्रतिपन्ना विरोधपरिहारेण प्रतिष्ठितं निर्णयज्ञानमन्तरेणानुष्ठापयितुमशक्नुवन्तः, तन्निर्णयाय क्रतुविचारं प्रयोजयन्ति, श्रवणविधिस्तु साक्षादेव ब्रह्मविचारं विधत्ते। एवञ्च सति श्रवणविधेः स्वविधेयप्रयोजकत्वं क्रतुविधीनाञ्च विधेयोपकारित्वप्रयोजकत्वं, इत्युपपद्यतेतरां, अध्ययनविधिप्रयुक्तिपक्षेतु तद्विधेः क्रतुद्वारा स्वर्गसिद्धिपर्य्यन्तत्वात् क्रत्वनुष्ठानस्यापि तत्प्रयुक्तौ क्रतुविधिवैयर्थ्यमापद्येत। नन्वध्ययनविधेस्त्रैवर्णिकमात्रं प्रतिनित्यत्वात्तत्प्रयुक्तौ विचारस्यापि तत्सम्भवेत, नान्यथेतिचेत् क्रतुविचारस्य त्रैवर्णिकमात्रेऽपि नित्यत्वासिद्धेः किं वा ब्रह्मविचारस्य तत्राद्योऽसम्मतेऽपि सम इत्याह, आद्यो नित्यक्रतुविचारस्त्रैवर्णिकमात्रस्येति, यतोऽकरणे प्रत्यवायश्रवणात् क्रतवस्त्रैवर्णिकानां नित्या अत इत्यर्थः। द्वितीयोऽनिष्ट इत्याह, ब्रह्मविचारः पुनः परमहंसस्यैवेति नित्यो ऽनुषक्त इति। ननूक्तरीत्याध्ययनस्याक्षरग्रहणान्तत्वे ऽर्थज्ञानमविहितं स्यात् नैवं, वाक्यान्तरेण तद्विधानात्, ब्राह्मणेन निष्कारणो धर्म्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति तद्विधिः, तत्र निष्कारणशब्देनाध्ययनज्ञानयोः काम्यत्वं निवार्य्यते। अर्थज्ञाने पुरुषप्रवृत्तिकरं वचनद्वयं शाखान्तरगतं निरुक्तकारो यास्क एवमुदाजहार, अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च, स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थं; योऽर्थज्ञ इह * सकलं भद्रमश्नुते, नाकमेति ज्ञानविधूतपाप्मा यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचिदिति। अस्मिन्मन्त्रद्वये योऽर्थज्ञ इत्यनेनैवार्द्धेन वेदार्थज्ञानं प्रशस्यते, इतरेणार्द्धत्रयेण ज्ञानराहित्यं निन्द्यते। यो वेदार्थं जानाति, सोऽयमिहलोके सकलं श्रेयः प्राप्नोति, तथा तेन ज्ञानेन पापक्षये सति मृतः स्वर्गं प्राप्नोति। तदेतदैहिकामुष्मिकञ्च

---

* लोके का. मं। * दोषघ्नं वैलोके, का. मं। * इन् का. मं।

ध्यानफलं तैत्तिरीया मन्त्रोदाहरणेन तदीयतात्पर्य्याभिधायिब्राह्मणेन च स्पष्टीचक्रुः, तदेषाभ्युक्ता ये अर्व्वाङुतवा पुराणे वेदं विद्वांसमभितो वदन्त्यादित्यमेव ते परिवदन्ति सर्व्वे अग्निं द्वितीयं तृतीयञ्च हंसमिति। यावती र्वै देवतास्ताः सर्व्वा वेदविदि ब्राह्मणे वसन्ति, तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्य्यान्नाश्लीलं कीर्त्तयेदेता एव देवताः प्रीणातीति। वेदविदानर्थाभिज्ञः पुरुषः, सच द्विविधः, अर्वाचीनकाले समुत्पन्नश्चतुर्द्दशविद्यास्थानकुशलः कश्चिदुपाध्यायः, पुरातनकाले समुत्पन्नो व्यासादिश्च, तमेतमुभयविधं विद्वांसं विद्यामदधनमदकुलमदोपेताः पण्डितं मन्या ये पुरुषा, अभितो विद्यासु दूषयन्ति, ते सर्वेऽप्यादित्यमेव प्रथमं दूषयन्ति, आदित्यापेक्षया द्वितीयमग्निं दूषयन्ति, तदुभयापेक्षया तृतीयं हंसं दूषयन्ति, हन्ति, सदा गच्छतीति हंसो वायुः, अग्न्यादिरूपत्वं वेदविदि आम्नातं, अग्नेर्वायोरादित्यस्य सायुज्यं गच्छतीति न केवलमेतद्देवतात्वं। किन्तु सर्व्वापि देवता वेदविदि निवसन्ति, तस्माद्ब्राह्मणान् वेदविदो दृष्ट्वा स्मृत्वा वा प्रतिदिनं नमस्कुर्य्यान्नतु तस्मिन् विद्यमानमपि दोषं कीर्त्तयेत्। एवं सति तत्तन्मन्त्रार्थभूताः सर्व्वा अपि देवता वेदार्थविदा स्मर्य्यमाणतया तदीयहृदयेऽवस्थिता अयं नमस्कर्त्ता तोषयति। नचैतदध्ययनस्यैव फलमिति शङ्कनीयं, विद्वांसमित्याम्नातत्वात्, अन्यथा वेदमधीयानमित्याम्नायेत, तस्मात् सर्वदेवताबुद्ध्या प्राणिभिः पूज्यस्य वेदार्थविदो लोकद्वयेऽपि श्रेयः प्राप्तिरुपपद्यते। यस्तु वेदमधीत्यार्थं न विजानाति, सोऽयं पुमान् भारमेव हरति, धारयति, स्थाणुरिति दृष्टान्तः छिन्नशाखं शुष्कमूलं वृक्षःस्थाणुशब्देनोच्यते; सच यथेन्धनार्थमुपयुज्यते नतु पुष्पफलार्थं, तथा केवलपाठकस्य ब्रात्यत्वं न भवतीत्येतावदेव नह्यनुष्ठानं स्वर्गादिफलसिद्धिर्व्वास्ति। किलेत्यनेन लोकप्रसिद्धि र्द्योत्यते लोकेऽपि पाठकस्य यावन्ति धनानि पूजा च, ततोऽप्यधिका विदुषि दृश्यते। किञ्च यद्वेदवाक्यमाचार्य्याद्गृहीतमर्थज्ञानरहितं पाठरूपेणैव पुनः पुनरुच्चार्य्यते, तत् कदाचिदपि न ज्वलति, स्वर्गं न प्रकाशयति, यथा अग्निरहितप्रदेशे प्रक्षिप्तं शुष्ककाष्ठं न ज्वलति तद्वत्। तथा सति तस्य वाक्यस्य वेदत्वमेव मुख्यं नस्यात् अलौकिकं पुरुषार्थोपायं वेत्त्यनेनेति वेदशब्दनिर्व्वचनं, तथा चोक्तं, प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एतं विदन्ति वेदेन, तस्माद्वेदस्य वेदता। अतो मुख्यवेदत्वसिद्ध्यर्थं ज्ञातव्य एव तदर्थः। किञ्चात्र यास्केन काचिदन्याप्यृगुदा-

श्रुता, उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्। उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा इति। अस्य पूर्वार्द्धस्य तात्पर्य्यं स एव दर्शयति, अप्येकः पश्यन्न पश्यति, वाचमपि च शृण्वन् न शृणोत्येवमित्यविद्वांसमाहार्द्धमिति। अस्यार्थः, यः पुमानर्थं न वेत्ति, तं प्रति पूर्व्वार्द्धेन मन्त्रो ब्रूते, एकः पुरुषः पाठमात्रपर्य्यवसितः वेदरूपां वाचं पश्यन्नपि न सम्यक् पश्यति, एकवचनबहुवचनादिविवेकाभावे पाठशुद्धेरप्येवमेव कर्त्तुमशक्यत्वात्, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति, आदित्यानेव स्वेन भागधेयेनोपधावति, त एवैनं भूतिं गमयन्तीत्यादावव्युत्पन्नः कथं पाठं निश्चिनुयात्। अन्यः कश्चिदर्थज्ञानाय व्याकरणाद्यङ्गानि शृण्वन्नपि मीमांसाराहित्यादेनां वेदरूपां वाचं न सम्यक् शृणोति। यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणां श्चतुष्कपालान्निर्व्वपेदित्यत्र व्याकरणमात्रेण प्रतिग्रहीतुरिष्टिः प्रतीयते, मीमांसायान्तु न्यायेन दातुरिति निर्णीतं, तस्मादुभयविधमप्यविद्वांसं प्रत्येवमाहेति। तृतीयपादतात्पर्य्यं दर्शयति, अप्येकस्मै तन्वं विसस्र, इति स्वमात्मानं विवृणुते ज्ञानं प्रकाशनमर्थस्याह अनया वाचा इति। अस्यार्थः, अपि शब्दपर्य्याय उतशब्दः, स च पूर्वोक्तानभिज्ञानवैलक्षण्येनात्र प्रयुक्तः निपातानामनेकार्थत्वात्, यः पुमान् व्याकरणाद्यङ्गैः सशब्दार्थं मीमांसया तात्पर्य्यञ्च शोधयितुं प्रवृत्तस्तस्मा एकस्मै वेदः स्वकीयान्तनुं विसस्रे, स्वमित्यादिकं पदव्याख्यानं, ज्ञानमित्यादिकं तात्पर्य्यव्याख्यानं वेदार्थप्रकाशनक्षमं सम्यक् ज्ञानमनया तृतीयपादरूपया वाचा मन्त्र आहेति। चतुर्थपादतात्पर्य्यं दर्शयति, उपमोत्तमया वाचा जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु यथा स एनां पश्यति, स शृणोतीति तात्पर्य्यार्थ इत्यर्थज्ञप्रशंसेति। अस्यार्थः उत्तमया चतुर्थपादरूपया वाचा तृतीयपादार्थस्योपमोच्यते, उशतीत्येतस्य व्याख्यानं कामयमानेति। यद्यप्यङ्ग रजस्वलत्ववेलायां मलिनवासाः, तथापि सम्भोगकालेषु कल्याणवासा भवति, तत्र हेतुः कामयमाना ऋतुकालेष्विति, यथा स पतिरेनां जायां साकल्येनादरयुक्तः पश्यति. किञ्च तयोक्तमर्थं हि शुश्राशृणोति, तथाऽयं चतुर्दशविद्यास्थानपरिशीलनोपेतः पुरुषो वेदार्थरहस्यं सम्यक् पश्यति, वेदोक्तञ्च धर्म्मं ब्रह्मरूपञ्चार्थं चित्तबुद्ध्यास्वीकरोति, सेयमुक्तवेदार्थाभिज्ञस्य प्रशंसेति। पुनरप्युगन्तरं यास्क उदाजहार, तस्योत्तराभूयसेनिर्वचनाय, उत त्वं सख्ये स्थिरपीतमा-

त्त्येनं हिन्वन्त्यपि वाजिनेषु। अधेन्वा चरति माययैषवाचं शुश्रुवां अफलामपुष्पामिति । अयमर्थः पूर्वोदाहृताया उतत्वः पश्यन्नित्यादिकाया ऋचोऽनन्तरमेषाम्नाता काचिदृक्, तस्य पूर्वोक्तमन्त्रार्थस्य भूयसे निर्वचनाय सम्पद्यते. तमर्थमतिशयेन प्रतिपादयितुं प्रभवति, कथमितिचेत्, तदुच्यते अपि चैकं चतुर्द्दशविद्यास्थानकुशलं पुरुषं वेदरूपाया वाचः सख्ये स्थित्वा, स्थिरार्थं वेदोक्तार्थामृतपानयुक्तमाहुः, अभिज्ञाः कथयन्ति, सक्तुमिव तितउना पुनन्तो इत्यत्र सखायमिति मन्त्रे वेदस्य साखित्वमुदाहृतं, यद्वा स्वर्गलोके देवानां सख्ये स्थित्वातिशयेन पीतामृतमाहुः, वाचामिना ईश्वराः सभासु प्रगल्भा वा वाजिनास्तेषु मध्ये ऽप्येनं वेदार्थकुशलं चोदयितुं न हिन्वन्ति, न कोऽपि प्राप्नुवन्ति, तेन सह विवदितुमसमर्थत्वात, यस्त्वन्यः पाठमात्रपरः, पुष्पफलरहितां वाचं शुश्रुवान् भवति, पूर्वकाण्डोक्तस्य धर्म्मस्य ज्ञानं पुष्पं, उत्तरकाण्डोक्तस्य ब्रह्मणो ज्ञानं फलं। यथा लोके पुष्पं फलस्योत्पादकं, तथा वेदानुवचनादिधर्म्मज्ञानं अनुष्ठानद्वारा फलात्मकब्रह्मज्ञानेच्छाञ्जनयति, तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति श्रुतेः। यथा च फलं तृप्तिहेतुः, तथा ब्रह्मज्ञानं कृतकृत्यत्वहेतुः, यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवतीति श्रुतेः। तादृशपुष्पफलरहितवेदपाठकः सएष पुमान् अधेन्वा मायया सह चरति, नवप्रसूतिका क्षीरदोग्ध्री गौः प्रीतिहेतुत्वाद्धिनोतीति व्युत्पत्त्या धेनुरित्युच्यते, पाठमात्रपरस्येति वेदरूपा वाक् धर्म्मब्रह्मज्ञानरूपं क्षीरं न दोग्ध्रीत्यधेनुः, अतएवासौ माया कपटरूपा ऐन्द्रजालिकनिर्म्मितगोसदृशगोरूपत्वात् तया मायया सह चरन्नयं परमपुरुषार्थो न लभ्यत इत्यर्थः, इत्थं यास्केन ज्ञानस्तुत्यज्ञाननिन्दादावरणस्य प्रपञ्चितत्वात्। यच्च स्मर्यते तद्विधीयत इति न्यायेनाध्ययनवदर्थज्ञानस्यापि विधिरप्युपगन्तव्यः, किञ्च नचत्रेष्टिकाण्डे प्रतीष्टिफलवाक्यं यागतद्वेदनयोः समानमेवाम्नायते, यथाह्वा अग्निर्द्देवानामन्नादः, एवं ह्वा एष मनुष्याणां भवति, य एतेन हविषा यजते, यउचैतदेवं वेदेति, अतो यागवत् फलाय स्ववेदनमपि विधीयते, अनेन न्यायेन सर्व्वेष्वपि ब्राह्मणेषु वेदनविधयो द्रष्टव्याः। ननु विद्याप्रशंसेति सूत्रे वेदनफलानां प्रशंसारूपत्वं जैमिनिना सूचितमितिचेत्, बाढं नाम विद्यमानेनापि फलेन प्रशंसितुं शक्यत्वात्

दर्शयागस्य पूर्णमासयागस्य * चातिपन्नस्य प्रायश्चित्तरूपां वैश्वानरेष्टिं विधातुं विद्यमानेनैव स्वर्गफलेन स्तुतिः क्रियते, सुवर्गाय लोकाय दर्शपौर्णमासाविज्येते, इत्येतच्चाचार्य्यैर्मन्त्रज्ञानफलवाक्यस्य स्वार्थेऽपि तात्पर्य्यं दर्शयितुमुदाहृतं। इच्छाम्येवार्थवादत्वं वचसो ऽन्यपरत्वतः। यथा वस्त्वभिधायित्वात्तत्त्वभूतार्थवादता। इज्यते स्वर्गलोकाय दर्शादर्शौ यथा तथा। नच भूतार्थवादत्वं पापश्लोका श्रुतिर्ययेति। नच वेदनमात्रेण फलसिद्धावनुष्ठानवैयर्थ्यमिति शङ्कनीयं। फलभूयस्त्वेन परिहृतत्वादुदाहृतं चात्र जैमिनिसूत्रं, फलस्य कर्म्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः सारतो वा फलविशेषः स्यादिति। एतच्चास्माभिः, तरति ब्रह्महत्यां योऽश्वमेधेन यजते, य उचैनमेवं वेदेत्युदाहरणेन व्याख्यातं। छन्दोगाश्च केवलादनुष्ठानाद्विधानसहिते ऽनुष्ठाने फलातिशयमामनन्ति। तेनासौ कुरुते, यश्चैतदेवं वेद, यश्च न वेद, नाना तु विद्या चाविद्या च, यदेव विद्यया करोति, श्रद्धयोपनिषदा, तदेव वीर्य्यवत्तरं भवतीति। यद्यप्युक्तावबोधोपास्तिरत्र विद्याशब्देन विवक्षिता, तथापि न्यायः सर्व्वास्वपि विद्यासु समानः, कुतस्तर्हि वेदने तवैषा भक्तिः, इति चेत्, कुतो वा तावान् तवैषोऽत्र द्वेषः, प्रशंसा त्वस्माभिर्भूयसी दर्शिता, निन्दान्तु न क्वाप्युपलभामहे, किन्तु कर्म्मजन्यमपूर्व्वं यथा मरणादूर्द्ध्वं जीवेन सह गच्छति, तथा विद्याजन्यमप्यपूर्व्वं गच्छति। तथाच वाजसनेयिन आमनन्ति, ते विद्याकर्म्मणी समन्वारभेते पूर्व्वप्रज्ञा चेति। तस्मादध्ययनवदर्थज्ञानस्यापि विहितत्वादर्थज्ञानाय वेदो व्याख्यातव्यः। विषयप्रयोजनसम्बन्धाधिकारिणामनन्तरेण श्रोतृप्रवृत्त्यभावात्, विषयादयो निरूप्यन्ते। व्याख्यानस्य व्याख्येयो वेदो विषयः तदर्थज्ञानं प्रयोजनं, व्याख्यानव्याख्येयभावः सम्बन्धः, ज्ञानार्थी चाधिकारी। यद्यप्येतावत् प्रसिद्धं, तथापि वेदस्य विषयाद्यभावे व्याख्यानस्यापि परमविषयादिकं न स्यात्; अतो वेदस्य तच्चतुष्टयमुच्यते, वेदेषु पूर्व्वोत्तरकाण्डयोः क्रमेण धर्म्मब्रह्मणी विषयस्तयोरनन्यलभ्यत्वात्। तथाच पुरुषार्थानुशासने सूचितं, धर्म्मब्रह्मणी वेदैकवेद्ये इति। जैमिनीये च द्वितीयसूत्रे चोदनैव धर्म्मे प्रमाणं, चोदनाप्रमाणमेवेति नियमद्वयं सम्प्रदायविद्भिरभिहितं, चोदनैवेत्यमुमर्थमुपपादयितुं चतुर्थसूत्रे प्रत्यक्षविषयत्वं धर्म्मस्य निराकृतं, प्रत्यक्ष-

* चातिपाते सति (कां भं)।

मनिमित्तं विद्यमानोपलम्भनत्वादिति। अनुष्ठानादूर्द्धमुत्पत्स्यमानस्य धर्म्मस्य पूर्व्वमविद्यमानत्वान्न प्रत्यक्षयोग्यतास्ति, उत्तरकालेऽपि रूपादिराहित्यान्नेन्द्रियैरवगम्यते, अतएवादृष्टमिति सर्व्वैरभिधीयते, लिङ्गराहित्यान्नानुमानविषयत्वमप्यस्ति। सुखदुःखे धर्म्माधर्म्मयोर्लिङ्गमिति चेत्, बाढं, अयमपि लिङ्गलिङ्गिभावो वेदेनैवावगम्यते; ततश्चोदनैव धर्म्मे प्रमाणं। वैयासिकस्य तृतीयसूत्रस्य द्वितीयवर्णके ब्रह्मणः सिद्धवस्तुनोऽपि शास्त्रैकविषयत्वं भाष्यकृद्भिर्व्याख्यातं, शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्राय इति। श्रुतिश्च भवति, नावेदविन्मनुते तं बृहन्तमिति। तत्रोपपत्तिः पूर्वाचार्य्यैरेवमुदीरिता, रूपलिङ्गादिराहित्यान्न मानान्तरयोग्यतेति, तस्मादनन्यलभ्यत्वादस्ति धर्म्मब्रह्मणोर्वेदविषयत्वं, तदुभयज्ञानं वेदस्य साक्षात् प्रयोजनं। नच तस्य ज्ञानस्य सप्तद्वीपावसुमती राजासौ गच्छति, इत्यादिज्ञानवदपुरुषार्थपर्य्यवसायित्वं शङ्कनीयं, धर्म्मप्रयुक्तस्य पुरुषार्थस्य स्तूयमानत्वात्। धर्म्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्म्मिष्ठं प्रजा उपसर्पन्ति, धर्म्मेण पापमपनुदति, धर्म्मे सर्वं प्रतिष्ठितं, तस्माद्धर्म्मं परमं वदन्तीति। उद्दण्डस्य राज्ञो नियामकत्वाद्विवदमानयोः पुरुषयोर्मध्ये दुर्ब्बलस्यापि राजसाहाय्यवज्जयहेतुत्वाच्च धर्म्मः पुरुषार्थः। तथाच वाजसनेयिनः सृष्टिप्रकरणे समामनन्ति, तच्छ्रेयो रूपमत्यसृजत धर्म्मं, तदेतत् क्षत्रस्य क्षत्रं, यद्धर्म्मः, तस्माद्धर्म्मात् परं नास्त्यथोऽबलीयान् बलीयांसमाशंसते, धर्म्मेण यथा राज्ञैवमिति। ब्रह्मविदाप्नोति परं, ब्रह्मविद्ब्रह्मैव भवति, तरति शोकमात्मविदित्यादिषु श्रुतिषु ब्रह्मज्ञानप्रयुक्तः पुरुषार्थः प्रसिद्धः। तदुभयज्ञानार्थी वेदेऽधिकारी, सच त्रैवर्णिकः पुरुषः। स्त्रीशूद्रयोस्तु सत्यामपि ज्ञानापेक्षायां उपनयनाभावेनाध्ययनराहित्याद्वेदेऽधिकारः प्रतिबद्धः; धर्म्मब्रह्मज्ञानन्तु पुराणादिमुखेनोपपद्यते; तस्मात् त्रैवर्णिकपुरुषाणां वेदमुखेनार्थज्ञानेऽधिकारः। सम्बन्धस्तु वेदस्य धर्म्मब्रह्मभ्यां सह प्रतिपाद्यप्रतिपादकभावः, तदीयज्ञानेन सह जन्यजनकभावः, त्रैवर्णिकपुरुषैः सहोपकार्य्योपकारकभावः, तदेवं विषयाद्यनुबन्धचतुष्टयमवगत्य समाहितधियः श्रोतारो वेदव्याख्याने प्रवर्त्तन्तां। अतिगम्भीरस्य वेदस्यार्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि; अतएव तेषामपरविद्यारूपत्वं मुण्डकोपनिषद्याथर्व्वणिका आमनन्ति, द्वे विद्ये वेदितव्ये इति ह स्म वै यद्ब्रह्मविदो वदन्ति परा चैवापरा च, तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्व्ववेदः, शिक्षा, कल्पो, व्याकरणं, निरुक्तं,

छन्दो, ज्योतिषमिति। अथ परा, यया तदक्षरमधिगम्यत इति साधनभूतधर्म्मज्ञानहेतुत्वात् षडङ्गसहितानां कर्म्मकाण्डानामपरविद्यात्वं परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वादुपनिषदां परविद्यात्वं। वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते, सा शिक्षा। तथाच तैत्तिरीया उपनिषदारम्भे समामनन्ति, शीक्षां व्याख्यास्यामः, वर्णः स्वरः, मात्रा बलं, साम सन्तानः, इत्युक्तः शीक्षाध्याय इति। वर्णोऽकारादिः स चाङ्गभूतशिक्षाग्रन्थे स्पष्टमुदीरितः, त्रिषष्टिश्चतुःषष्टिर्वा स्वराः स्वायम्भुवे मताः, प्राकृते संस्कृते चापि स्वराः प्रोक्ताः स्वयम्भुवेत्यादिना। स्वर उदात्तादिः, सोऽपि तत्रोक्तः, उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रय इति। मात्रा ह्रस्वादिः सापि तत्रोक्ता, ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचीति। बलं स्थानप्रयत्नौ, तत्राष्टौ स्थानानि वर्णानामित्यादिस्थानमुक्तं, अचोऽस्पृष्टाः, यणस्त्वीषदित्यादिना प्रयत्न उक्तः। सामशब्देन साम्यमुक्तं, अतिद्रुतातिविलम्बितगीत्यादिदोषराहित्येन माधुर्य्यादिगुणयुक्तत्वेनोच्चारणं साम्यं, गीतीशीघ्रीशिरःकम्पी तथा लिखितपाठकः, अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः। गीतीशीघ्रीशिरःकम्पीत्यादिनोपांशुत्वं दुष्टं, त्वरितमित्यादिना दोषा उक्ताः, माधुर्य्यमक्षरव्यक्तिरित्यादिना गुणा उक्ताः। माधुर्य्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः धैर्य्यं लयसमर्थं च षडेते पाठका गुणाः, इति गुणा उक्ताः। सन्तानः संहिता वायवायाहीत्यत्रावादेशः, इन्द्राग्नी आगतमित्यत्र प्रकृतिभावः, एतच्च व्याकरणेऽभिहितत्वात् शिक्षायामुपेक्षितं। शिक्ष्यमाणवर्णादिविकल्पे बाधस्तत्रोदाहृतः, मन्त्रो हीनः स्वरतो वर्णतो वा। मिथ्याप्रयुक्तो न तमर्थमाह स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधादिति। इन्द्रशत्रुर्वर्द्धस्वेत्यस्मिन्मन्त्रे इन्द्रस्य शत्रुर्घातक इत्यस्मिन्विवक्षितेऽर्थे तत्पुरुषसमासः, समासस्येति सूत्रेण समासत्वादन्तोदात्तेन भवितव्यं, आद्युदात्तस्तु प्रयुक्तः। तथा सति पूर्व्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वादिन्द्रो घातको यस्येति तात्पर्य्यार्थः सम्पन्नः, तस्मात् स्वरवर्णाद्यपराधपरिहाराय शिक्षाग्रन्थोऽपेक्षितः। कल्पश्चाश्वलायनापस्तम्बबोधायनादिसूत्रं कल्प्यते, समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्तेः। नन्वाश्वलायनः किं मन्त्रकाण्डमनुसृत्य प्रवृत्तः किं ब्राह्मणमनुसृत्य, नाद्यः, दर्शपूर्णमासौ व्याख्यास्याम इत्येवं तेनोपक्रान्तत्वात्, अग्निमीळ इत्यादयो मन्त्रा दर्शपूर्णमासयोः क्वचिद्विनियुक्ताः। न द्वितीयः, अमावास्यामेकादशकपालं निर्व्वपति दीक्षणीयायामित्येवं दीक्षणीयेष्टेः ब्राह्मणे प्रक्रान्तत्वात्।

अथोच्यते, मन्त्रकाण्डो ब्रह्मयज्ञादिजपक्रमेण प्रवृत्तो, न तु यागानुष्ठान-क्रमेण प्रवृत्तो ब्रह्मयज्ञस्यैवं * विहितः, यः स्वाध्यायमधीयीतैकामप्यृचं यजुःसाम वा तद्ब्रह्मयज्ञ इति, सोऽयं ब्रह्मयज्ञजपः अग्निमील इत्याम्नायक्रमेणानुष्ठेयः। तथा सर्वा ऋचः, सर्वाणि यजूंषि, सर्वाणि सामानि, वाचस्तोमे पारिप्लवं शंसन्तीति विधीयते, तथाश्विने शस्यमाने सूर्य्यो नोदियादपि सर्वा दाशतयीरनुब्रूयादिति विधीयते, तथा रिच्यत इव वा एष प्रेव रिच्यते, यो याजयति, यो वा प्रतिगृह्णाति, याजयित्वा-प्रतिगृह्य वा, अनश्नन् त्रिः स्वाध्यायं वेदमधीयीतेति प्रायश्चित्तरूपं वेदपारायणं विहितमित्यादिषु कृत्स्नमन्त्रकाण्डविनियोगेषु सम्प्रदाय-पारम्पर्य्यागतक्रम एवादरणीयः। विशेषविनियोगस्तु मन्त्रविशेषाणां श्रुतिलिङ्गवाक्यादिप्रमाणान्युपजीव्याश्वलायनो दर्शयति, अतो मन्त्र-काण्डक्रमाभावेऽपि न कश्चिद्विरोधः। इषेत्वेत्यादिमन्त्रास्तु क्रत्वनुष्ठान-क्रमेणैवाम्नाता, इत्यापस्तम्बादयस्तेनैव क्रमेण सूत्रनिर्म्माणे प्रवृत्ताः, आ-म्नातत्वादेव जपादिष्वपि स एव क्रमः। यद्यपि ब्राह्मणं दीक्षणीयेष्टि-वपक्रान्ता, तथापि तस्या इष्टेर्दर्शपूर्णमासविकृतत्वेन तदपेक्षत्वा-दाश्वलायनस्यादौ तद्व्याख्यानं युक्तं; अतः कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुद्दिश्योपकरोति, तर्हि प्रवो वाजा इत्यादीनां सामिधेनीना-मृचामेव विनियोगमाश्वलायनोऽब्रवीत् नमःप्रवक्त्र इत्यादयस्त्वना-म्नाताः कुतो विनियुज्यन्त, इति चेन्नायं दोषः, शाखान्तरसमाम्नातानां ब्राह्मणान्तरे सिद्धस्य विनियोगस्य गुणोपसंहारन्यायेनात्र वक्तव्यत्वात्, सर्वशाखाप्रत्ययमेकं कर्म्मेति न्यायविदः, तस्माच्छिक्षावत्कल्पोऽप्यपे-क्षितः। व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्च-यायोपयुज्यते, तथा चैन्द्रवायवग्रहब्राह्मणे समाम्नायते। वाग्वै पराच्य-व्याकृतावदत्, ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुर्व्विति, सोऽब्रवी-द्वरं वृणे, मह्यं चैवैष वायवे च सह गृह्याता इति, तस्मादैन्द्रवायवः सह गृह्यते, तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्, तस्मादियं व्याकृता वागु-द्यत इति। अग्निमीले पुरोहितमित्यादिवाक् पूर्व्वस्मिन् काले परा-चीसमुद्रादिध्वनिवदेकात्मिका सती अव्याकृता, प्रकृतिः प्रत्ययः पदं वाक्यमित्यादिविभागरहितासीत्, तदानीं देवैः प्रार्थित इन्द्र एक-स्मिन्नेव पात्रे वायोः स्वस्य च सोमरसग्रहणरूपेण तुष्टस्तामखण्डां वाचं

---

* ब्रह्मयागमेवं का, भ।

मध्ये विच्छिद्य ते प्रकृतिप्रत्ययादिविभागं सर्वत्राकरोत्; तस्मादियं वाक् इदानीमपि पाणिन्यादिमहर्षिभिर्व्याकृता सर्वैः पठ्यत इत्यर्थः। तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्त्तिके दर्शितः, रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति। एतानि रक्षादिप्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये पतञ्जलिना स्पष्टीकृतानि। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति, वेदार्थञ्चाध्यवस्यति; तस्माद्रक्षार्थं वेदानामध्येयं व्याकरणं। ऊहः खल्वपि न सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदमन्त्रा निगदिताः, ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्याः, तान्नावैयाकरणः शक्नोति विपरिणमयितुं, तस्मादध्येयं व्याकरणं। आगमः खल्वपि ब्राह्मणेन निःकारणो धर्म्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च, प्रधानञ्च षट्स्वङ्गेषु व्याकरणं, प्रधानेषु कृतो यत्नः फलवान् भवति, लघ्वर्थञ्चाध्येयं व्याकरणं। बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं शब्दाशब्दपरायणं प्रोवाच, बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः, अन्तञ्च न जगाम, अद्य तु पुनर्यदि परमायुर्भवति, स वर्षशतं जीवति, तत्र कुतः प्रतिपदपाठेन सकलपदागमः, कुतस्तरां प्रयोगेणासन्देहार्थं चाध्येयं व्याकरणं। याज्ञिकाः पठन्ति, पृषतीं स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति। तत्र न ज्ञायते किं स्थूलानि पृषन्ति यस्याः सा स्थूलपृषती, किं वा स्थूला चासौ पृषती च स्थूलपृषतीति, तान्नावैयाकरणः स्वरतोऽध्यवस्यति। यदि समासान्तोदात्तत्वं तदा कर्म्मधारयः; अथ पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिरिति, इमानि च भूयः शब्दानुशासनस्य प्रयोजनानीति। तेऽसुराः, दुष्टः शब्दः, यदधीतं, यस्तु प्रयुङ्क्ते, आहिताग्निरपशब्दं प्रयुज्य सारस्वतीमिष्टिं प्रायश्चित्तार्थं निर्वपेत् प्रायश्चित्तीयामाभूमेत्यध्येयं व्याकरणं। अविद्वांसो विभक्तिं कुर्व्वन्ति, यो वा इमां चत्वारि उतत्वः सक्तुमिव सारस्वता दशम्यां पुत्रस्य सुदेवो असिवरुण तेऽसुराः हेलयो हेलय इति कुर्व्वन्तः पराबभूवुः; तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः म्लेच्छा माभूमेत्यध्येयं व्याकरणं। दुष्टः शब्दः स्वरतो ह स वाग्वपराभाषिणः ते दुष्टान् शब्दान् मा प्रयुक्ष्महीत्यध्येयं व्याकरणं। यदधीतमविज्ञातं निगदेनैव शब्द्यते, अनग्नाविव शुष्कैन्धोऽनलो ज्वलति कर्हिचित्, अविज्ञातमनर्थकमाध्यगीष्महीत्यध्येयं व्याकरणं। यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले, सोऽनन्तमाप्नोति जयं परत्र। वाग्यो-

गवित्, दुष्यति चापशब्दैः, को वाग्योगवित् यो हि शब्दान् जानाति, अपशब्दानप्यसौ जानाति, यथैव शब्दज्ञाने धर्म्मः, एवमपशब्दज्ञाने ऽप्यधर्म्मः प्राप्नोति, अथवा भूयानधर्म्मः प्राप्नोति; भूयांसो ह्यपशब्दा अल्पीयांसः शब्दाः, एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः, गौरित्येतस्य शब्दस्य गावी गोणी गोतेत्येवमादयः* । अवाग्योगवित्, अज्ञानं तस्य शरणं, नात्यन्ताज्ञानाय शरणं भवितुमर्हतीति । यो ह्यजानन् ब्राह्मणं हन्यात्, सुरां वा पिबेत्, सोऽपि मन्ये पतितः स्यात्, एवं तर्हि कः अवाग्योगविदेव । अथ यो वाग्योगवित्, ज्ञानन्तस्य शरणं, अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः कामन्तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेदिति स्त्रीवन्माभूमेत्यध्येयं व्याकरणं । विभक्तिं कुर्व्वन्ति, याज्ञिकाः पठन्ति, प्रयाजाः सविभक्तिकाः कर्त्तव्या इति । नचान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्या कुर्व्वन्ति, † तस्मादध्येयं व्याकरणं । यो वा इमां पदशः स्वरशोऽक्षरशो वर्णशो वाचं विदधाति, स आर्त्विजीनो भवति, आर्त्विजीनाः स्यामेत्यध्येयं व्याकरणं । चत्वारिशृङ्गास्त्रयोऽस्य पादा, द्वे शीर्षे सप्तहस्तासो अस्य । त्रिधाबद्धो वृषभो रोरवीति महादेवो मर्त्यां आविवेश । चत्वारिशृङ्गा चत्वारिपदजातानि नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादाः, त्रयः काला, द्वे शीर्षे सुशब्दोऽपशब्दश्च, सप्तहस्तासः, सप्तविभक्तयः, त्रिधाबद्धः, त्रिषु स्थानेषु बद्धः उरसि कण्ठे शिरसि च । वृषभो वर्षणात् सर्व्वकामानां रोरवीति, रौतिः शब्दकर्म्मा, महादेवो मर्त्त्यां आविवेश, महता देवेन नस्सादात्म्यं स्यादित्यध्येयं व्याकरणं । अथवा चत्वारिवाक्परिमिता पदानि; तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहितानि नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति, ये मनीषिणो मनस ईषिणो मनीषिणो गुहायां त्रीणि निहितानि नेङ्गयन्ति, न चेष्टन्ते, तुरीयं वाचो मनुष्या वदन्ति, तुरीयं ह्वा एतद्वाचो यन्मनुष्येषु वर्त्तते । उतत्वः पश्यन्नददर्श, वाचमुतत्वः शृण्वन्न शृणोत्येनां । उतोत्वोऽस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः । अपि खल्वेकः पश्यन्नपि न पश्यति, शृण्वन्नपि न शृणोत्येनां अविद्वांसमाहार्थमन्तरोऽन्यस्मै तन्वं विसस्रे तनुं विवृणुते, जायेव पत्य उशती सुवासाः, यथा जायापत्यंकामयमाना सुवासाः स्वमात्मानं

* गोपोतलिका कां. गं । † कर्त्तुं कां. गं ।

विकृणुते, एवं वाग्विदेवमात्मानं विकृणुते, वाङ्नो विकृणुयादित्यध्येयं व्याकरणं। सक्तुमिव, सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि। सक्तुः सचते उद्धारो भवति * कसतेर्वा स्याद्विपरीतस्य विकसितो भवति, तित उपरि पवनं भवति, वाचमक्रत वाचमकृषत सख्यानि जानते भद्रास्येषां लक्ष्मीर्निहिताधिवाचि। दशम्यां पुत्रस्य, दशम्यां पुत्रजातस्य नाम विदध्यात्, घोषवदाद्यन्तरन्तस्थमभिनिष्ठान्तं * द्व्यक्षरं चतुरक्षरं वा कृतं नाम कुर्य्यात्। न तद्धितमिति न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुं, तस्मादध्येयं व्याकरणं। सुदेवो असि, सुदेवो असि वरुण यस्य ते सप्तसिन्धवः। अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव। सप्तसिन्धवः सप्तविभक्तयः, काकुद्जिह्वा सा अस्मिन्न्युद्यत इति काकुदं तालु सुर्म्मिसूर्मी लोहप्रतिमेति, एवं सिद्धे शब्दार्थसम्बन्ध इत्यादिवार्त्तिकोक्तान्यन्यान्यपि प्रयोजनान्यनुसन्धेयानि।

अथ निरुक्तप्रयोजनमुच्यते, अर्थावबोधनिरपेक्षतया पदजातं यत्रोक्तन्निरुक्तं, गौः, ग्मा, ज्मा, क्ष्मा, क्षेत्यारभ्य वसवः, वाजिनः देवपत्न्यो देवपत्न्य इत्यन्तो यः पदानां समाम्नायः समाम्नातः, तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते, एतावन्ति पृथिवीनामानि, एतावन्ति हिरण्यनामानि, इत्येवं तत्र तत्र विस्पष्टमभिहितत्वात्। तदेतन्निरुक्तं त्रिकाण्डं तच्चानुक्रमणिकाभाष्ये दर्शितं। आद्यं नैघण्टुकं काण्डं, द्वितीयं नैगमन्तथा, तृतीयन्दैवतञ्चेति समाम्नायस्त्रिधा मतः। गौराद्यपारे पर्य्यन्तमाद्यं नैघण्टुकं मतं। जहाद्युल्बणर्जीषान्तं नैगमं सम्प्रचक्षते। अग्न्यादिदेवपत्न्यन्तं दैवताकाण्डमुच्यते, अग्न्यादिदेवी उर्ज्जाहुत्यन्तः क्षितिगतो गणः। वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः, सूर्य्यादिदेवपत्न्यन्ता द्युस्थाना देवतागणा इति। गवादिदेवपत्न्यन्तं समाम्नाय मधीयत इति। एकार्थवाचिनां पर्य्यायशब्दानां सङ्घो * यत्र प्रायेणोपदिश्यते, तत्र निघण्टुशब्दः प्रसिद्धः। तादृशेष्वमरसिंहवैजयन्तीहलायुधादिषु दशनिघण्टव इति व्यवहारात्, एवमत्रापि पर्य्यायशब्दसन्ध्युपदेशादाद्यकाण्डस्य निघण्टुकत्वं; तस्मिन् काण्डे त्रयोऽध्यायाः; ते प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि

* दुर्द्धारो भवति का. मं।    * द्व्यक्षरमन्तस्थाभिनिष्ठानामं मं, का।
* संघोगा का, मं।

नामानि। द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि। तृतीये तदुभयद्रव्यगत * बहुत्वह्रस्वत्वादिधर्म्मविषयाणि। निगमशब्दो वेदवाची, यास्केन तत्र तत्रापि निगमो भवतीत्येवं वेदवाक्यानामवतारितत्वात्, तस्मिन्निगम एव प्रायेण वर्त्तमानानां शब्दानां चतुर्थाध्यायरूपेण द्वितीयेऽस्मिन् काण्ड उपदिष्टत्वात्। तस्य काण्डस्य नैगमत्वं। पञ्चमाध्यायरूपस्य तृतीयकाण्डस्य दैवतं विस्पष्टं, पञ्चमाध्यायरूपकाण्डत्रयात्मक एतस्मिन् ग्रन्थे परनिरपेक्षतया पदार्थस्योक्तत्वात्तस्य ग्रन्थस्य निरुक्तत्वं; तद्व्याख्यानञ्च समाम्नायः समाम्नात इत्यारभ्य तस्यास्तस्यास्तद्भाव्यमनुभवत्यनुभवतीत्यन्तै र्द्वादशभिरध्यायैर्यास्को निर्म्ममे, तदपि निरुक्तमित्युच्यते। एकैकस्य पदस्य सम्भाविता अवयवार्थास्तत्र निःशेषेणोच्यन्त इति व्युत्पत्तेः। तत्र हि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्चेति प्रतिज्ञायोच्चावचेष्वर्थेषु निपतन्तीति निपातस्वरूपं निरुच्यैवमुदाहृतं, नेति प्रतिषेधार्थीयो, भाषायामुभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीय इति, दुर्म्मदासो न सुरायामित्युपमार्थीय इतिच, तच्च लोके केवलप्रतिषेधार्थीयस्यापि नकारस्य वेदे प्रतिषेधोपमालक्षणोभयार्थोदाहरणं अस्मिन् ग्रन्थेऽवगम्यते; एवं ग्रन्थकारेणोक्तास्तत्तत्पदनिर्वचनविशेषाः, तत्तन्मन्त्रव्याख्यानावसर एवास्माभिरुदाहरिष्यन्ते, नच निर्वचनानां निर्म्मूलत्वं शङ्कनीयं; एतद्व्युत्पत्त्यर्थमेव ब्राह्मणेषु पदनिर्वचनानां केषामुक्तत्वात्तदाहुतीनामाहुतित्वमिति, तमिन्द्रं सन्तमिन्द्र इत्याचक्षते इति, यदप्रथयत्, तत् पृथिव्यै पृथिवीत्वमिति च। ग्रन्थकारोऽपि तत्र तत्र स्वोक्तनिर्वचनमूलीभूत ब्राह्मणान्युदाहरिष्यति, केषाञ्चिन्निर्वचनानां व्याकरणबलेन सिद्धावपि न सर्व्वेषां सिद्धिरस्ति, अतएव ग्रन्थकार आह तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्चेति, तस्माद्वेदार्थावबोधायोपयुक्तं निरुक्तं। तथा छन्दोग्रन्थोऽप्युपयुज्यते छन्दोविशेषाणां तत्र तत्र विहितत्वात्, तस्मात् सप्तचतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्त इति ह्याम्नातं, गायत्र्युष्णिगनुष्टुप् बृहती पङ्क्तिस्त्रिष्टुप् जगतीत्येतानि सप्तछन्दांसि। चतुर्व्विंशत्यक्षरा गायत्री, ततोऽपि चतुर्भिरक्षरैरधिकाष्टाविंशत्यक्षरोष्णिक्, एवमुत्तरोत्तराधिकानुष्टुबादयोऽवगन्तव्याः। अथान्यत्रापि श्रूयते गायत्रीभिर्ब्राह्मणस्यादध्यात,

* तनु इति का° म°।

त्रिष्टुभी राजन्यस्य, जगतीभिर्वैश्यस्येति। तत्र जगणयगणादिसाध्यो
गायत्र्यादिविवेकः छन्दोग्रन्थमन्तरेण न सुविज्ञेयः। किञ्च, यो ह वा
अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति, वाध्यापयति, वा,
स्थाणुं वर्च्छति गर्त्तं वा पद्यते प्रवामीयते पापीयान् भवति, तस्मादेतानि
मन्त्रे मन्त्रे विद्यादिति श्रूयते। तस्मात्तावद्वेदनाय छन्दोग्रन्थ उपयु-
ज्यते। ज्योतिषस्य प्रयोजनं तस्मिन्नेवग्रन्थेऽभिहितं, यज्ञकालार्थ-
सिद्धय इति। कालविशेषविधयः श्रूयन्ते। संवत्सरमेतद्व्रतं चरेत्, संव-
त्सरं पद्यं त्वित्येवमादयः संवत्सरविधयः। वसन्ते ब्राह्मणोऽग्निमाद-
धीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीतेत्याद्या ऋतु-
विधयः। मासि मासि * पृष्ठान्युपयन्ति, मासि मास्यतिग्राह्या
गृह्यन्ते, इत्याद्या मासविधयः। यं कामयेत वसीयान् स्यादिति तं पूर्व-
पक्षे याजयेदित्याद्याः पक्षविधयः। एकाष्टकाया दीक्षेरन्, फल्गु-
नीपौर्णमासे दीक्षेरन् इत्याद्यास्तिथिविधयः। प्रातर्जुहोति, सायं
जुहोतीत्याद्याः प्रातःकालादिविधयः। कृत्तिकास्वग्निमादधीतेत्याद्या
नक्षत्रविधयः। अतः कालविशेषानवगमयितुं ज्योतिषमुपयुज्यते। एते-
षाञ्च वेदार्थोपकारिणां षणां ग्रन्थानां वेदाङ्गत्वं शिक्षायामेवमुदी-
रितं। छन्दः पादौ तु वेदस्य, हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं
चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणन्तु वेदस्य, मुखं व्याकरणं स्मृतं।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयत इति। षडङ्गवत् पुराणा-
दीनामपि वेदार्थज्ञानोपयोगं दृष्ट्वा विद्यास्थानत्वं याज्ञवल्क्येन स्मर्य्यते,
पुराणन्यायमीमांसा धर्म्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां
धर्म्मस्य च चतुर्द्दशेति। इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति।
* बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति। अन्यत्रापि स्मर्य्यते।
ऐतरेयतैत्तिरीयकाठकादिशाखासूक्तानि हरिश्चन्द्रनाचिकेताद्युपाख्या-
नानि धर्म्मज्ञानावबोधोपयुक्तानि तेषु तेष्वितिहासग्रन्थेषु स्पष्टी-
कृतानि। उपनिषदुक्ताः सृष्टिस्थितिलयादयो ब्राह्मवैष्णवादिपुराणेषु
स्पष्टीकृताः। सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं
चेति पुराणं पञ्चलक्षणमिति। सृष्ट्यादेः पुराणप्रतिपाद्यतयावग-
मात्, न्यायशास्त्रे प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तादीनां षोडशपदा-
र्थानां निरूपणात् तदनुसारेणेदं वाक्यमस्मिन्नर्थे प्रमाणं भवति,

* पृष्ठानि, कां मं। * बिभेत्यपरन्त्वाद्येनतत्पादद्वयं काशिस्थपुस्तके प्राप्तं।

नेतरदिति निर्णयः कर्त्तुं शक्यते। पूर्व्वोत्तरमीमांसयोर्वेदार्थोपयोगितेति स्पष्ट एव। मन्वत्रिविष्णुहारीतादिप्रोक्तस्मृतिषु वेदोक्तसन्ध्यावन्दनादिविधयः प्रपञ्चिताः, तद्यथा एते ब्रह्मवादिनः पूर्व्वाऽभिमुखाः सन्ध्यायां गायत्रियाभिमन्त्रिता आपऊर्द्धं विक्षिपन्तीत्यादिकः सन्ध्यावन्दनविधिः। पञ्च वा एते महायज्ञा महान्त इति प्रतीयन्त इत्यादिको महायज्ञविधिः। एवं विध्यन्तराणि द्रष्टव्यानि। उक्तप्रकारेण पुराणादीनां वेदार्थज्ञानोपयोगाद्विद्यास्थानत्वं युक्तं। एतैः पुराणादिभिश्चतुर्दशविद्यास्थानैरुपबृंहिताया विद्याया ग्रहणमधिकारिविशेषेण शाखान्तरगतैश्चतुर्भिर्मन्त्रैरुपदर्शितं। तांश्च मन्त्रान् यास्क उदाजहार। तत्रायं प्रथमो मन्त्रः। विद्या ह वै ब्राह्मणमाजगाम, गोपाय मा शेवधिष्टेऽहमस्मि, असूयकायानृजवेऽयतायन मा ब्रूया वीर्य्यवती तथा स्यामिति। विद्याभिमानिनी देवता ब्राह्मणमुपदेष्टारमाचार्य्यमाजगाम, आगत्यैवं प्रार्थयामास, हे ब्राह्मण, अनधिकारिणेऽनुपदिश्य मां पालय, तवाहं निधिवत् पुरुषार्थहेतुरस्मि, तादृशीं मयि तदुपदेष्टरि त्वयि च योऽसूयां करोति, यश्चार्जवेन विद्यां नाभ्यस्यति, योऽपि स्नानाचमनाद्याचारनियतो न भवति, तादृशेभ्यः शिष्येभ्यो * न मां ब्रूयाः, * तथा सति त्वद्धृदये स्थित्वा फलप्रदा भवेयं। अथ द्वितीयो मन्त्रः। य आतृणत्त्यवितथेन कर्णावदुःखं कुर्व्वन्नमृतं सम्प्रयच्छन्, तं मन्ये पितरं मातरञ्च, तस्मै न द्रुह्येत् कतमच्चनाहेति। पूर्वस्मिन्मन्त्रे आचार्य्यस्य नियममभिधायास्मिन्मन्त्रे शिष्यस्य नियमो विधीयते। वितथमनृतमपुरुषार्थभूतं लौकिकं वाक्यं, तद्विपरीतं सत्यं वेदवाक्यं। तादृशेन वाक्येन य आचार्य्यः शिष्यस्य कर्णावातृणत्ति सर्वतस्तर्दनं पूरणं करोति, उपसर्गवशादेरिचित्याच तृणतिधातोरर्थान्तरे वृत्तिः, सर्वदा वदन् यः श्रावयतीत्यर्थः। किं कुर्व्वन्, अदुःखं कुर्व्वन्, मन्दप्रज्ञस्य माणवकस्यार्द्धर्चमृचं वा ग्रहीतुमशक्नुवतः यथा दुःखं न भवति, तथा पादं पादैकदेशं वा ग्राहयन्, किञ्चामृतं संप्रयच्छन्, अमृतस्य देवत्वजन्मनो मोक्षस्य वा प्रापकत्वादमृतं वेदार्थस्तस्य दानं कुर्व्वन्, तन्तादृशमाचार्य्यं सच्छिष्यो मुख्यमातापितृरूपं मन्येत, पूर्व्वसिद्धौ तु मातापितरावधमस्य मनुष्यस्य शरीरस्य प्रदानादमुख्यौ तस्मै मुख्यमातापितृरूपाचार्य्याय कथमपि द्रोहं न कुर्य्यात्। अथ तृतीयो मन्त्रः। अध्यापिता ये गुरुं नाद्रियन्ते

* १ शिष्याभ्यश्च इति पाठः का·सं। * २ माब्रूया इति का·सं।

विप्रा वाचा मनसा कर्म्मणा वा। यथैव ते न गुरोर्भोजनीयास्तथैव तान्नभुनक्ति श्रुतन्तदिति। ये त्वधमा विप्रा गुरुणाध्यापिताः सन्तो विनयोक्त्या तदपेक्षितचिन्तनेन शुश्रूषया वा गुरुं नाद्रियन्ते, आदररहितास्ते शिष्याभासा गुरोर्न भोजनीया अनुभवयोग्या न भवन्ति: नहि तेषु गुरुः कृपां करोति, यथैव गुरुणा ते न पालनीयाः, तथैव तानधमान् शिष्यान् तच्छ्रुतं गुरूपदिष्टं वेदवाक्यं न फलयति, फलप्रदं न भवतीत्यर्थः। अथ चतुर्थमन्त्रः। यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्य्योपपन्नं। यस्ते न द्रुह्येत् कतमच्चनाह, तस्मै मा ब्रूया निधिपाय ब्रह्मन्निति। हे आचार्य्य, यमेव मुख्यशिष्यं शुचित्वादिगुणोपेतं जानीयाः, किञ्च यो मुख्यशिष्यस्तुभ्यं कदाचिदपि न द्रुह्येत्, तस्मै मुख्यशिष्याय त्वदीयनिधिपालकाय ब्रह्म वेदरूपामिमां विद्यां ब्रूयाः। इत्थं विद्यादेवतया प्रार्थितेनाचार्य्येण मुख्यावेदविद्योपदेष्टव्या, तदर्थमृग्वेदोऽस्माभिः षडङ्गानुसारेण व्याख्यायते। तत्र मन्त्रब्राह्मणात्मके वेदे ब्राह्मणस्य मन्त्रव्याख्यानोपयोगित्वादादौ ब्राह्मणमारण्यककाण्डसहितं व्याख्यातं। अथ तत्र ब्राह्मणोदाहरणेन मन्त्रात्मकः संहिताग्रन्थो व्याख्यातव्यः; स चाग्निमील इत्यारभ्य, यथावस्सुसहासतीत्यन्तोऽष्टकाष्टकैर्दशमण्डलैश्चतुःषष्ट्यध्यायैरीषदधिकसहस्रसूक्तैरीषदधिकद्विसहस्रवर्गैरीषदधिकदशसहस्रसङ्ख्याभिर्ऋग्भिश्चोपेतः। तस्य च ग्रन्थस्य कृत्स्नस्याप्याम्नातक्रमेणैव सामान्यविनियोगो ब्रह्मयज्ञजपादौ पूर्वमेवाभिहितः। विशेषविनियोगस्तु तत्तत्कृतौ सूत्रकारेण प्रदर्शितः। स च त्रिविधः, सूक्तविनियोगः, * तृचादिविनियोगः, एकैकस्या ऋचो विनियोगश्चेति। तत्राग्निमील इति सूक्तं प्रातरनुवाके आग्नेयक्रतौ विनियुक्तं; स च विनियोग आश्वलायनेन चतुर्थाध्यायस्य त्रयोदशखण्डे सूत्रितः, * एवानो अग्न इति षट्, अग्निमीले, अग्निं दूतमिति द्वयं, तत्र हीनपादग्रहणात् सूक्तनिश्चयाय सूक्तं, सूक्तादौ हीनपाद इति परिभाषितत्वात्। तस्मिन् सूक्ते प्रथमाया ऋचो द्वितीयस्यां पवमानेष्टौ स्विष्टकृतो याज्यात्वेन विनियोगः, स च द्वितीयाध्यायस्य प्रथमखण्डे सूत्रितः, साक्षान् विश्वा अभियुजोऽग्निमीले पुरोहितमिति संयाज्ये इति। तत्र कृत्स्नपादपाठादृगित्यवगम्यते, ऋचं पादग्रहण इति परिभाषितत्वात्, तथा संयाज्य इत्युक्ते एते सौविष्ट-

* तृचादिविनियोगः सो। * एनानो अग्न इति का-मं।

ष्ठति प्रतीयादिति परिभाषितत्वात् खिङ्गात् सम्बन्धनिश्चयः, तथापि द्वितीयमन्त्रत्वेनोदाहृतत्वाद्याज्यात्वं। यद्यपि साक्षान्निर्दिष्टतया पुरो-वाक्ययैव देवताया अनुस्मरणरूपसंस्कारसिद्धिः, तथापि याज्यानु-वाक्ययोः समुच्चयो द्वादशाध्याये चतुर्थपादे मीमांसितः। पुरोऽनुवा-क्यायाज्ययोर्विकल्पो वा समुच्चितः। विकल्पोऽन्यतरयैव देवतायाः प्रकाशनात्। पुरोऽनुवाक्यासमाख्यानादचनाच्च समुच्चयः। देवता-प्रकाशनकार्य्यस्यैकत्वाद्युग्मयोर्यथा विकल्पः, तथैवैकयुग्मगतयोरेतयो-रिति चेत्, मैवं, पुरोऽनुवाक्येतिसमाख्याया उत्तरकालीनयाज्याम-न्तरेणानुपपत्तेः, किञ्च पुरोऽनुवाक्यामनूच्य याज्यया जुहोतीति प्रत्य-च्चवचनेन देवतोपलक्षणहविःप्रदानकार्य्ये भेदोक्तिपुरःसरं साहित्यं विधीयते, तस्मात् समुच्चय इति। एतच्चाग्निमीळ इत्यादि सूक्तं नवर्चं अग्निं नव मधुच्छन्दो वैश्वामित्र इत्यनुक्रमणिकायामुक्तत्वात्, विश्वामि-त्रपुत्रो मधुच्छन्दोनामकस्तस्य सूक्तस्य द्रष्टत्वादादावृषिः, ऋषगता-वितिधातुः सर्वधातुभ्यइन्, इगुपधेति कः प्रत्ययः, वेदप्राप्त्यर्थं तपो-निष्ठितपुरुषान् स्वयम्भुर्वेदपुरुषः प्राप्नोत्। तथाच श्रुतिः * अजातान् ह्वै एश्नीत तपस्यमानान् ब्रह्म स्वयम्भुरभ्यावर्षत तदृषयोऽभवन्निति। तथातीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनादृषित्वम-भिप्रेत्य स्मर्य्यते। युगान्ते तर्हिं तान् वेदान्महर्षयो लेभिरे तपसा पूर्व्वमनुज्ञातान् स्वयम्भुवेति। ऋष्यादिज्ञानाभावे प्रत्यवायः स्मर्य्यते, अविदित्वा ऋषिच्छन्दो दैवतं योगमेव च। योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः। ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि। अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यत इति। वेदनविधिश्च स्मर्य्यते। स्वरवर्णाक्षरं मात्रा विनियोगार्थमेव च। मन्त्रं जिज्ञासमानेन वेदि-तव्यं पदेपद इति। अग्निमित्यादिसूक्तस्य छन्दोऽनुक्रमणिकायां यद्य-प्यत्र नोक्तं, तथापि परिभाषायामेवमुक्तं, आदौ गायत्रं प्राक् हिरण्य-स्तूपादिति। हिरण्यस्तूपऋषिर्येषां मन्त्राणां वक्ष्यते, ततः प्राचीनेषु मन्त्रेषु सामान्येन गायत्रं छन्द इत्यर्थः। पुरुषस्य पापसम्बन्धं वारयितु-माच्छादकत्वाच्छन्द इत्युच्यते। तच्चारण्यकाण्डे समाम्नायते। छादयन्ति ह्वा एनं छन्दांसि पापात्कर्म्मण इति। अथवा चीयमानाग्निसन्तापस्य छादकत्वाच्छन्दस्त्वं तच्च तैत्तिरीया आमनन्ति, प्रजापतिरग्निं चिनुते,

* अजान् का·४।

*सन्तुरयाविर्भूत्वा तिष्ठन्, तं देवा बिभ्यतोपायन्, ते छन्दोभिरात्मानं छादयित्वोपायन्, तच्छन्दसां छन्दस्त्वमिति। यद्वा अपमृत्युं वारयितुमाच्छादयतीति छन्दस्तदपि छान्दग्योपनिनिषद्यामातं। देवा वै मृत्यो र्बिभ्यु स्त्रयीं विद्यां प्राविशन्, तेच्छन्दोभिरात्मानमाच्छादयन्, यदेभिराच्छादयंस्तच्छन्दसाञ्छन्दस्त्वमिति। तथा द्योतनार्थदीव्यतिधातुनिमित्तो देवशब्दः, एतदाम्नायते दिवा वै नो भूदिति तद्देवानां देवत्वमिति अतो दीव्यतीति देवः मन्त्रेण द्योत्यत इत्यर्थः॥

---

* पुरपद्दि कां, सं।

## ॥ ऋग्वेदसंहिता ॥ १

॥ प्रथममण्डलं ॥

॥ प्रथमानुवाकः ॥

॥ प्रथमाष्टकः ॥

### ॥ प्रथमाध्यायः ॥

प्रथमसूक्तं

ऋक्

१ १ १ अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजं ।
होतारं रत्नधातमं ॥

तत्र प्रथमे मण्डले प्रथमेऽनुवाके त्रीणि सूक्तानि, तत्राद्यं नवर्चं सूक्तं। अस्मिन् सूक्ते स्तूयमानत्वादग्निर्देवः। तथा चानुक्रमणिकायामुक्तं मण्डलादिष्वाग्नेयमैन्द्रमिति (अनुं पं। १२) तस्य सूक्तस्य प्रथमामृचं भगवान् वेदपुरुष आह अग्निमिति, अग्निनामकदेवमीळे स्तौमि, ईडस्तुताविति-धातुः डकारस्य लकारो बह्वृचाध्येतृसम्प्रदायप्राप्तः। मन्त्रस्य होत्रा प्रयोज्यत्वादहं होता स्तौमीति लभ्यते। कीदृशमग्निं यज्ञस्य पुरोहितं, यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति, तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति, यद्वा यज्ञस्य सम्बन्धिनि पूर्व्वभागे आहवनीयरूपेणावस्थितं। पुनः कीदृशं, देवं, दानादिगुणयुक्तं, पुनरपि कीदृशं, होतारमृत्विजं, देवानां यज्ञेषु होतृनामकऋत्विग्भिरेव, तथाच श्रुतिः अग्निर्देवानां होतेति। पुनरपि कीदृशं रत्नधातमं, यागफलरूपाणां रत्नानामतिशयेन धारयितारं, पोषयितारं वा। अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति, अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति,

संनममानोऽक्नोपनो भवतीति (नि ७।३।१)॥ *स्थौलाष्ठीविर्न क्नोपयति, न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति। *शाकपूणिः, इता दक्ताद्दग्धाद्वानीतात्, स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवतीति। अग्निमीळ इत्यस्यायमर्थः, सामान्येन सर्वदेवतानां लक्षणस्याभिहितत्वात्, अनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकाङ्क्षितमतोऽनुक्रमेण वक्ष्यामः। तत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यास्यते, कस्मात् प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयत इति प्रश्नस्याग्रणीरित्यादिकमुत्तरं, देवसेनामग्रे स्वयं नयतीति अग्रणीः, एतदेकमग्निशब्दस्य प्रवृत्तिनिमित्तं, तथाच ब्राह्मणान्तरं अग्निर्वै देवानां सेनानीरिति, एतदेवाभिप्रेत्य बह्वृचो मन्त्रब्राह्मणे चामनन्ति, अग्निर्मुखं प्रथमो देवतानामिति मन्त्रः। अग्निर्वै देवानामवम इति ब्राह्मणं। तथा तैत्तिरीयाश्चामनन्ति, अग्निरग्रे प्रथमो देवतानामिति मन्त्रः। अग्निरवमो देवतानामिति ब्राह्मणं। वाजसनेयिनस्त्वेवमामनन्ति, स एव वा एषोऽग्रे देवतानामजायत, तस्मादग्निर्नामेति। यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेष्वग्रस्य पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात् प्रणीयत इति द्वितीयं प्रवृत्तिनिमित्तं। सन्नममानः सम्यङ्नम्यमानोऽङ्गं भवन् स्वं स्वकीयशरीरं नयति, काष्ठदाहे हविः पाके च प्रेरयतीति तृतीयम्प्रवृत्तिनिमित्तम्। स्थूलाष्ठीविनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिदक्नोपन इत्यग्निशब्दं निर्वक्ति, तत्र न क्नोपयतीत्युक्ते न स्नेहयति, किन्तु काष्ठादिकं रूक्षयतीत्युक्तं भवति। शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते। इत इण्गताविति धातुः। अक्तः, अञ्जुव्यक्तिम्रक्षणकान्तिगतिष्विति धातुः। दग्धः दह भस्मीकरण इति धातुः। नीतः नीञ्प्रापण इति धातुः। अग्निशब्दो ह्यकारगकारनिशब्दानपेक्ष्यमाण इति धातोरुत्पन्नादयनशब्दादकारमादत्ते, अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते, यद्वा दहतिधातुजन्याद्दग्धशब्दाद्गकारमादत्ते। नीरिति नयति धातुः, स च ह्रस्वो भूत्वा परो भवति, ततो धातुत्रयं मिलित्वाग्निशब्दो भवति, यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति, काष्ठदाहे हविः पाके च प्रेरयतीति समुदायार्थः। तस्याग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिप्रदर्शनायैषाग्निमीळ इति ऋग्भवतीति, तामेतामृचं यास्क एवं व्याख्यातवान्, अग्नि-

---

* स्थौलाष्ठीविः कश्चिन्निरुक्तकारः  * शाकपूणिः कश्चिन्निरुक्तकारः

मीळेऽग्निं याचामीति। अग्निरध्येषणाकर्म्मा पूजाकर्म्मा वा पुरोहितो व्याख्यातो, यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः, सा देवता। होतारं देवानामाह्वातारं जुहोतेर्ह्वयतोत्यौर्णनाभः। रत्नधातमं, रमणीयानां धनानां दातृतममिति। अस्यायमर्थः ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धं, धातूनामनेकार्थत्वमिति न्यायमाश्रित्य यास्का अध्येषणा पूजाह्यप्यत्रोचितत्वात्तदर्थतया व्याख्यातः। पुरोहितशब्दो द्वितीयेऽध्याये यद्देवापिः शन्तनवे पुरोहित इत्येतामृचमुदाहृत्य पुर एनन्दधातीति व्याख्यातः। तैत्तिरीयाश्च पौरोहित्ये स्पर्द्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन पुर एनन्दधत इत्यामनन्ति। देवशब्देन दानदीपनद्योतनानामन्यतममर्थमाचष्टे। यज्ञस्य दाता, दीपयिता, द्योतयिता, अयमग्निरित्युक्तम्भवति, दीपनद्योतनयोरेकार्थत्वेऽप्यस्ति धातुभेदः। यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान् प्रति हविर्वहनाद् द्युस्थानो देवदेवताशब्दयोरेकपर्य्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया। होतृशब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवतानामाह्वातारमित्यौर्णनाभनामकस्तु मुनिर्जुहोतिधातोरुत्पन्नो होतृशब्द इति मन्यते। अग्नेर्होतृत्वं होमाधिकरणत्वेन द्रष्टव्यं। रत्नशब्दो द्वितीयाध्याये मघमित्यादिष्वष्टाविंशतौ धननामसु पठितः, रमणीयत्वाद्रत्नत्वं, दधातिधातुरत्र दानार्थवाचीति, तदिदं निरुक्तकारस्य यास्कस्य मन्त्रव्याख्यानं। अथव्याकरणप्रक्रियोच्यते, अगिधातोर्गत्यर्थात् वीन्याज्वरिभ्यो निरित्यनुवृत्तत्वात्, अङ्गेर्नलोपश्चेत्यौणादिकसूत्रेण नि प्रत्ययः, इदित्वान्नुमागमेन प्राप्तस्य नकारस्य लोपश्च भवति, अङ्गति स्वर्गं गच्छति हविर्नेतुमित्यग्निः, तत्र धातोः ( पां ६। १।१६२ ) इत्यकार उदात्तः, आद्युदात्तश्च ( पां ३।१।३ ) इति प्रत्ययगत इकारोऽप्युदात्तः। अनुदात्तं पदमेकवर्जं ( पां ६।१।१५८ ) इति द्वयोरन्यतरमुदात्तमवशिष्येतरस्यानुदात्तत्वं प्राप्तं; तत्र धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरोऽवशिष्यते सतिशिष्टस्वरो बलीयानिति हि न्यायः, ततोनुदात्तमग्निप्रातिपदिकं, अनुदात्तौ सुप्पितौ ( पां ३।१।४ ) इत्यमित्यत द्वितीयैकवचनमनुदात्तं, तस्यामिपूर्व्वः ( पां ६।१।१०७ ) इतियत् पूर्वरूपं तदुदात्तं, एकादेश उदात्तेनोदात्तः ( पां ८।२।५ ) इति सूत्रितत्वादग्निशब्दो धातुजन्मा इति मते सेयं प्रक्रिया सर्वापि द्रष्टव्या। मतद्वयं यास्केन प्रदर्शितं। नामान्याख्यातजानीति शाकटायनः, नैरुक्तसमयश्च न सर्वा-

णोति, गार्ग्यो वैयाकरणानामेक इति गार्ग्यस्य मते अग्निशब्दस्याखण्ड-प्रातिपदिकत्वात्, फिषोऽन्तोदात्त इति फिट्सूत्रेणान्तोदात्तत्वं। पूर्वोक्तेष्वग्रणीरित्यादिनिर्वचनेषु प्रकृतिप्रत्ययाद्यशेषप्रक्रिया यथोचितं कल्पनीया। एतदेवाभिप्रेत्य यास्क आह, अथ निर्वचनं, तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां, तथा तानि निर्ब्रूया * दथानन्वितेऽर्थे प्रादेशिके विकारेऽर्थनित्यः परीक्षेत, केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्नत्वेव न निर्ब्रूयादिति। अस्यायमर्थः तत्र निर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याकरणसिद्धौ स्यातां, स्वर उदात्तादिः, संस्कारो निप्रत्ययादिः, किञ्च तौ स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्यातां, शब्दस्यैकदेशः पूर्वोक्तोऽणिधातुः प्रदेशः; तत्र भवो गुणो गतिरूपोऽर्थस्तेनान्वितौ, तान्यग्न्यादिपदानि तथा व्याकरणानुसारेण निर्ब्रूयात्, तत्र निर्वचनमस्माभिः प्रदर्शितं। अथ पूर्वोक्तवैलक्षण्येन कश्चित् स्वेन विवक्षितोऽर्थोऽनन्वितस्तस्मिञ्छब्देऽनुगतो न भवेत् तस्यैव व्याख्यानमप्रादेशिके विकार इति। अग्रनयनादिरूपः क्रियाविशेषो विकारः, स च प्रदेशेनाग्निशब्दैकदेशेनात्र नाभिधीयत इत्यप्रादेशिकः, एवं सति यः पुमानर्थनित्यः स्वविवक्षितेऽर्थे नियतो निर्बन्धवान्, शास्त्रमानुसारेण वा देवतास्तवविशेषणत्वेन वा योजयितुं वा † स निर्बन्धः। तदानीं स पुमान् केनचिद्वृत्तिसाम्येन स्वविवक्षितमर्थं परीक्षेत, तस्मिञ्छब्दं योजयेत्, वृत्तिः क्रिया, तद्रूपेण साम्यं सादृश्यं, अस्माभिरग्रनयनादिरूपं क्रियात्वसाम्यमुपजीव्याग्रणीत्वाद्यर्थो योजितः, तदिदं यास्काभिमतं निर्वचनं। स्थौलाष्ठीविरक्षरसाम्यान्निर्वक्ति, अक्नोपनशब्दस्यादौ निषेधार्थमकाररूपमक्षरं विद्यते, अग्निशब्दस्यादावकारोऽस्ति, तदिदमक्षरसाम्यं। शाकपूणिस्तु वर्णसाम्यान्निर्ब्रूते, तदग्रशब्दाग्निशब्दयोर्गकारेण वर्णेन साम्यं सर्व्वथापि निर्वचनं न त्याज्यमिति। ईळे इत्येतत्पदं कृत्स्नमप्यनुदात्तं, तिङङ्ङतिङः (पा ८।१।२८) इत्यतिङन्तादग्निशब्दात् परस्य ईळे इत्यस्य तिङन्तस्य निघातविधानात् पदद्वयं, संहिताकाले ईकारस्य धातुगतस्य, उदात्तादनुदात्तस्य स्वरितः (पा ८।४।६६) इति स्वरितत्वं, तस्मादूर्ध्वभाविन एकारस्य तिङ्प्रत्यय-

---

* यथानन्वितौ स्यातां, तथा तानि निर्ब्रूयात् का. मं अधिकः पाठः। मूलनिरुक्तेऽप्युपलम्भेन। † निर्बन्धमान् का।

ऽपस्य, स्वरितात् संहितायामनुदात्तानां (पां १। २। ३९) इत्येकश्रुतिप्रचयनामकं भवति। पुरःशब्दोऽन्तोदात्तः, अयं पुरोभुव इत्यत्र तथैवाम्नातत्वात्, पूर्वाधरावराणामसि पुरधवश्चैषां (पां ५। ३। ३९) इति पूर्वशब्दादसिप्रत्ययः, पुर आदेशश्च, ततोऽत्रप्रत्ययस्वरः, धातोर्निष्ठायां, दधातेर्हिः (पां ७। ४। ४२) इति धाधातोर्हि आदेशे सति प्रत्ययस्वरेणान्तोदात्तो हितशब्दः, तत्र समासान्तोदात्तत्वे प्राप्ते, तदपवादत्वेन, तत्पुरुषे तुल्यार्थ (पां ६। २। २) इत्यादिनाव्ययपूर्वपदप्रकृतिस्वरत्वं, यद्वा, पुरोऽव्ययं (पां १। ४। ६७) इति गतिसंज्ञायां, गतिरनन्तरः (पां ६। २। ४९) इति पूर्वपदप्रकृतिस्वरत्वं, तत ओकार उदात्तः, अवशिष्टानामनुदात्तस्वरितप्रचयाः पूर्ववद्द्रष्टव्याः। यद्यपि पदकाले हितशब्दान्तर्गतस्यैकारस्य स्वरितत्वं दुर्लभं उदात्तपरत्वाभावात्, मात्राकालावदवग्रहान्तरमिति प्रातिशाख्येऽवसानविधानात्, अतएव तैत्तिरीया अनुदात्तमेवाभिधीयन्ते, तथापि यथा सन्धीयमानानामनेकीभवतां स्वरोऽवग्रह इति प्रातिशाख्येऽतिदेशादिष्टसिद्धिः। उपदिष्टस्तथा विद्यादक्षराणामवग्रह इत्याद्याक्षरस्य संहितायां प्रचयप्राप्तत्वात्, उदात्तस्वरितपरस्य सन्नतरः (पां १। २। ४०) इत्यतिनीचोऽनुदात्तः। यजयाचयतविच्छ० (पां ३। ३। ९०) इत्यादिना यजतेर्नङ्प्रत्यये सत्यन्तोदात्तो यज्ञशब्दः, विभक्तेः सुप्स्वरेणानुदात्तत्वे सति पश्चात् स्वरितत्वं। देवशब्दः पचाद्यजन्तः, स च फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण चान्तोदात्तः। ऋत्विक् शब्द, ऋतौ यजतीति विग्रहे सति, ऋत्विगदधृक्० (पां ३। २। ५९) इत्यादिना निपातितः, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः, विभक्तिस्वरः पूर्ववत्। होतृशब्दस्तृन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः, स्वरितप्रचयौ पूर्ववत्। रत्नशब्दो नब्विषयस्यानिसन्तस्येति फिट्सूत्रेणाद्युदात्तः। तथाचाम्नायते रत्नंधातेति। रत्नानि दधातीति विग्रहः, समासत्वादन्तोदात्तो रत्नधाशब्दः, यद्वा कृदुत्तरप्रकृतिस्वरः, तमप्प्रत्ययस्य पित्स्वरेणानुदात्ते सति स्वरितप्रचयौ, संहितायामाद्याक्षरस्य प्रचयः, द्वितीयाक्षरस्य सन्नतरत्वमिति वेदावतार आद्याया ऋचोऽर्थश्च प्रपञ्चितः। विद्वानं वेदगाम्भीर्यमथ संक्षिप्य वर्ण्यते॥ १॥

१ २ १ अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।
स देवां एह वक्षति ॥

आग्नेयसूक्तस्य द्वितीयामृचमाह, अग्निः पूर्व्वेभिरिति । अयमग्निः पुरातनैर्भृग्वङ्गिरःप्रभृतिभिर्ऋषिभिरीड्यः स्तुत्यः, इदानीन्तनैरस्माभिरपि स्तुत्यः, सोऽग्निः स्तुतः सन्, इह यज्ञे देवान् हविर्भुज आवक्षति, वह प्रापणे इति धातुः, आवहत्वित्यर्थः । पूर्व्वेभिरित्यत्र, बहुलं छन्दसि (पां ७।१।१०।) इति भिस ऐसादेशाभावः, बहुवचने झल्येत् (पां ७।३।१०३। इति आकारस्य एकारः। पूर्वपर्वखर्वपूरण इति धातुः, पूर्वतिधातोरन्प्रत्यय औणादिकः। ऋषिभिः, इन्प्रत्ययान्त ऋषिशब्दः, ऋष्यन्धकवृष्णिकुरुभ्यश्च (पां ४।१।११४।) इति निपातनाल्लघूपधगुणाभावः, किन्प्रत्ययो वात्र ज्ञेयः; तौ शब्दौ नित्स्वरेणाद्युदात्तौ। ईड्यः, ईड्यशब्दस्य ण्यत्प्रत्ययान्तत्वात्, तित्स्वरितं (पां ६।१।१८५) इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेन, ईड वन्द वृ शंसदुहां ण्यतः (पां ६।१।२१४) इत्याद्युदात्तत्वं। नूतनैः, नवस्य नूतनप्तनखाश्चेति सूत्रवार्त्तिकेन नवशब्दस्य नू इत्यादेशस्तन्प्रत्ययश्च महावार्त्तिके विहितः, ततो नित्स्वरेणाद्युदात्तः, अवशिष्टाः स्वरा अग्न्यादिषु नूतनान्तेषु पूर्ववदुन्नेयाः।उतशब्दो यद्यपि विकल्पार्थः प्रसिद्धः, तथापि निपातत्वेनानेकार्थत्वात्, औचित्येनात्र समुच्चयार्थो द्रष्टव्यः।उच्चावचेष्वर्थेषु निपतन्तीति निपातत्वं, तर्हि निपाता आद्युदात्ता इतिफिट्सूत्रेण उकारस्योदात्तः प्राप्त इति चेन्न, प्रातः शब्दवदन्तोदात्तत्वात्, यथा प्रातः शब्दोऽन्तोदात्तत्वेनैव स्वरादिषु पठितः, एवमुतशब्दस्यापि पाठो द्रष्टव्यः, स्वरादेराकृतिगणत्वात् । यद्वा, एवमादीनामन्त इतिफिट्सूत्रेणान्तोदात्तः । स इत्यत्र फिट्स्वरः । देवान्, देवशब्दः पूर्ववत्, देवानित्यस्य नकारस्य संहितायां, दीर्घादटि समानपादे (पां ८।३।९) इति रुत्वं, अत्रानुनासिकः पूर्वस्य तु वा (पां ८।३।२) इति आकारः सानुनासिकः । भो भगो अघो अपूर्वस्य योऽशि (पां ८।३।१७) इति रोर्यत्वं, स च, लोपः शाकल्यस्य (पां ८।३।१९) इति लुप्यते, तदसिद्धत्वान्न पुनः सन्धिकार्य्यं। आङो निपातत्वादाद्युदात्तत्वं । इदमो ह प्रत्यये सति निष्पन्नत्वात्, इहशब्दे प्रत्ययस्वरः। वक्षति, वहतिधातोर्लाडर्थे छान्दसो लुट्, स्यप्रत्ययगतस्य यकारस्य लोपोऽपिच्छान्दसः, यद्वा लेटि, सिब्बहुलं लेटि (पां ३।१।

१ ३ १ अग्निना रयिमश्नवत् पोषमेव दिवे दिवे ।
यशसं वीरवत्तमं ॥

१ ४ १ अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।
स इद्देवेषु गच्छति ॥

९४) इति सिप्, लेटोऽडाटौ (पां ३।४।९४) इत्यडागमश्च, ततो वक्षसीति सम्पद्यते, तस्य तिङन्तत्वान्निघातः, संहितास्वरः ॥ २ ॥

पूर्ववदाधाने तृतीयेऽष्टौ प्रथमाज्यभागस्यानुवाक्या सूक्तगता तृतीया तामेतां तृतीयामृचमाह अग्निनेति। योऽयं होता स्तुतोऽग्निः, तेनाग्निनाभिमतभूतेन यजमानो रयिं धनं अश्नवदश्नोत् प्राप्नोत्। कीदृशं रयिं, दिवे दिवे पोषमेव, प्रतिदिनं पुष्यमाणतया वर्द्धमानमेव, नतु कदाचिदपि क्षीयमाणं। पुनः कीदृशं, यशसं दानादिना यशोयुक्तं। पुनरपि कीदृशं वीरवत्तमं, अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतं, सति हि धने पुरुषाः सम्पद्यन्ते। रयिशब्दो मघमित्यादिधननामसु पठितः, अत्र फिट्स्वरः। अश्नवत्, अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप्, इतश्च लोपः परस्मैपदेषु (पां ३।४।९७।) इतीकारलोपः, लेटोऽडाटौ (पां ३।४।९४) इत्यडागमः, ततोऽश्नवदिति भवति, तस्य निघातः। घञन्तत्वात् पोषशब्द आद्युदात्तः। एवशब्दस्य निपातत्वेऽपि एवादित्वादन्तोदात्तत्वं। वकारान्ताद्दिवशब्दात् परस्याः सप्तम्याः, सुपांसुलुक् पूर्वसवर्णाच्छेयाडाड्याजालः (पां ७।१।३९।) इति शे भावे सति, सावेकाचस्तृतीयादिः (पां ६।१।१६८।) इत्यादिना, ऊडिदं पदाद्यप्पुम्रैद्युभ्यः (पां ६।१।१७१।) इति सूत्रेण वा तस्योदात्तत्वं, नित्यवीप्सयोः (पां ८।१।४।) इति द्विर्भावे सति उत्तरभागस्य, अनुदात्तञ्च (पां ८।१।३।) इत्यनुदात्तत्वं। यशसं, यशोऽस्यास्तीति विग्रहे सति, अर्श आदिभ्योऽच् (पां ५।२।१२७।) इत्यच्प्रत्ययः, चित्स्वरेणान्तोदात्तत्वं व्यत्ययेन बाधित्वा मध्योदात्तं। फिट्स्वरेणान्तोदात्ताद्वीरशब्दान्मतुप्तमपोः पित्त्वादनुदात्तत्वं, ह्रस्वनुड्भ्यां मतुप् (पां ६।१।१७६।) इत्युदात्तत्वं न भवति, सो ह्रवर्णान्तत्वात्, नगोऽश्वन्सावर्वर्णाराडङ्क्रुङ्कृद्भ्यः (पां ६।१।१८२।) इति निषेधात् ॥ ३ ॥

अभिप्लवषडहस्य मध्यवर्त्तिपृष्ठ्येषु तृतीयसवने मैत्रावरुणस्य अग्नेयं

ऋक्

१ ५ १ अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरागमत् ॥ १ ॥ वर्गः ॥———————

यज्ञमित्यादिको वैकल्पिकोऽनुरूपस्तृचः, एतच्च सप्तमाध्याये एह्यग्ने इत्यादिखण्डे सूत्रितं, अग्निं वो वृधन्तममग्ने यं यज्ञमध्वरमिति । तस्मिंस्तृचे या प्रथमा सा सूक्ते, तामेतां चतुर्थीमृचमाह अग्ने यमिति । हे अग्ने, त्वं, यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः, परितः प्राप्तवानसि, स इत् स एव यज्ञो देवेषु तृप्तिं प्रापयितुं स्वर्गं गच्छति, प्राच्यादिचतुर्दिक्ष्वतेषु आहवनीयमार्ज्जालीयगार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति, परिशब्देन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता । कीदृशं यज्ञं, अध्वरं हिंसारहितं, नहि अग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति । अग्निशब्दस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वं । न विद्यतेऽध्वरो ऽस्मिन्निति बहुव्रीहौ, नञ्सुभ्यां ( पां ६ । २ । १७२ । ) इत्यन्तोदात्तत्वं । विश्वत इत्यत्र तसिलः प्रत्ययस्वरं बाधित्वा पूर्ववर्णस्य, लिति ( पां ६ । १ । १९० । ) इत्युदात्तत्वं । परिभूरित्यत्राव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वं । असीत्यत्र निघाताभावो यच्छब्दप्रयोगात् ॥ ४ ॥

पञ्चमीमृचमाह अग्निर्होतेति । अयमग्निर्देवो ऽन्यैर्देवैः हविर्भोजिभिः सहागमत्, अस्मिन् यज्ञे समागच्छतु । कीदृशोऽग्निः, होता होमनिष्पादकः । पुनः कीदृशः, कविक्रतुः, कविशब्दोऽत्र क्रान्तवचनो* नतु मेधावी नाम, क्रतुः प्रज्ञानस्य कर्म्मणो वा नाम, ततः क्रान्तप्रज्ञः क्रान्तकर्म्मा वा † । पुनः कीदृशः, सत्यः, अन्तरहितः, फलमवश्यं प्रयच्छतीत्यर्थः । पुनरपि कीदृशः चित्रश्रवस्तमः, श्रूयत इति श्रवः कीर्त्तिः, अतिशयेन चित्रकीर्त्तियुक्तः । कविक्रतुश्चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वं । सत्सु साधुः सत्यः, सत्यादशपथे ( पां ५ । ४ । ६६ । ) इत्यत्रान्तोदात्तो हरदत्तेन निपातितः । लोडन्तस्य गच्छत्विति शब्दस्य छत्वाभाव उकारलोपश्छान्दसः, ततो रूपमागमदिति भवति, स्पष्टमन्यत् ॥ ५ ॥ इत्यृक्संहितायां वेदार्थप्रकाशे प्रथमकाण्डस्य प्रथमाध्याये प्रथमो वर्गः ॥ १ ॥

---

* क्रान्तवचनो का॰ सं॰ । † क्रान्तप्रज्ञः क्रान्तकर्म्मा वा का॰ सं॰ ।

आक्

१ ६ १ यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।
तवेत्तत् सत्यमङ्गिरः ॥
१ ७ १ उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयं ।
नमो भरन्त एमसि ॥

आग्नेयसूक्ते षष्ठीमृचमाह, यदङ्गदाशुष इति । अङ्गेत्यभिमुखीकरणार्थो निपातः, अङ्गाग्ने हे अग्ने त्वं, दाशुषे हविर्दत्तवते यजमानाय, तत्प्रीत्यर्थं यद्भद्रं, वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि, तद्भद्रं तवेत्, तवैव सुखहेतुरिति शेषः । हे अङ्गिरोऽग्ने तच्च सत्यं, न त्वत्र विसम्वादोऽस्ति, यजमानस्य वित्तादिसम्पत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति । भद्रशब्दार्थं शाट्यायनिनः समामनन्ति, यद्वै पुरुषस्य वित्तं, तद्भद्रं, गृहा भद्रं, प्रजा भद्रं, पशवो भद्रमिति । अङ्गशब्दस्य निपातत्वेऽपि अर्शआदित्वादन्तोदात्तत्वं, दाश्वान् साह्वान् मीढ्वांश्च (पां ६ । १ । १२ । इति सूत्रेण दाशृदान इति धातोः क्वसुप्रत्ययो निपातितः, तत्र प्रत्ययस्वरः । आमन्त्रितस्याग्निशब्दस्य पदपरत्वेनाष्टमिकानुदात्तत्वं न शङ्कनीयं, अनुदात्तं सर्वमपादादौ ( पां ८ । १ । १८ । ) इत्यपादादाविति पर्युदस्तत्वात् षाष्ठिकमाद्युदात्तत्वमेव, भद्रशब्दस्य नब्विषयत्वेनानुदात्तत्वप्रसक्तावपि, भदिकल्याणे इतिधातोरुपरि रक्प्रत्ययेन निपातनादन्तोदात्तत्वं, अस्मिन् वाक्ये यच्छब्दप्रयोगात्, निपातैर्यद्यदिहन्त ( पां ८ । १ । ३० । ) इत्यादिना निघाते प्रतिषिद्धेऽस्य प्रत्ययस्वरेण सतिशिष्टेन करिष्यसीतिशब्द उपान्तोदात्तः । तव इत्यत्र, युष्मदस्मदोर्ङसि ( पां ६ । १ । २११ । ) इत्याद्युदात्तत्वं । अङ्गिरः, अङ्गिरा अङ्गारा इति यास्कः । ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति, येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्निति, तस्मादङ्गिरोनामकमुनिकारणत्वादङ्गाररूपस्याग्नेरङ्गिरस्त्वं, अत्र पदात्परत्वेनाष्टमिकानुदात्तत्वं ॥ ६ ॥

अग्नीषोमप्रणयने उपत्वाग्न इत्याद्यनुवचनीयस्तृचः, एतच्च ब्राह्मणे समाम्नातं । उप त्वाग्ने दिवे दिव उपप्रयं पतिप्रतमिति* तिस्रस्वैकां वान्वा-

* पनिप्रतमिति क्वां

ऋक्

। ८ । राजन्तमध्वराणां गोपामृतस्य दीदिविं ।
वर्धमानं स्वे दमे ॥

। ९ । स नः पितेव सूनवेऽग्ने सूपायनो भव ।
सचस्वा नः स्वस्तये ॥ २ ॥

द्येति, तस्मिंस्तृचे या प्रथमा सा सूक्ते सप्तमी, तामेतां सप्तमीमृचमाह, उपत्वाग्न इति । हे अग्ने, वयमनुष्ठातारो दिवे दिवे प्रतिदिवं दोषावस्तोरात्रावहनि च धिया बुद्ध्या नमोभरन्तो नमस्कारं सम्पादयन्तः, उप समीपे, त्वा एमसि त्वामागच्छामः । उपशब्दस्य निपातस्वरः । त्वा, त्वामौ द्वितीयायाः (पां १ । ८ । २३ ।) इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः । दोषाशब्दो रात्रिवाची, वस्त इत्यहर्वाची, द्वन्द्वसमासे, कार्त्तकौजपादयश्च ( पां ६ । २ । ३७ ) इति कार्त्तकौजपादित्वादाद्युदात्तः । सावेकाचस्तृतीयादिर्विभक्तिः ( पां ६ । १ । १६८ । ) इति धियो विभक्तिरुदात्ता । नम इति निपातः, भरन्त, इत्यत्र शपः पित्त्वाच्छतुर्लसार्वधातुकत्वाच्चानुदात्तत्वे सति धातुस्वरः शिष्यते । इमसि इत्यत्र, इदन्तोमसिः ( पां ७ । १ । ४६ । ) इति इदन्तावयवको मसादेशो निघातश्च । ७ ॥

अष्टमीमृचमाह राजन्तमध्वराणामिति । पूर्वमन्त्रे त्वामुपेम इत्यभिमुखीकृत्योक्तं । कीदृशं त्वां, राजन्तं दीप्यमानं । अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानां गोपां रक्षकं । ऋतस्य सत्यस्यावश्यम्भाविनः कर्म्मफलस्य दीदिविं, पौनःपुन्येन भृशं वा द्योतकं, आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्म्मफलं स्मर्य्यते । स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिर्वर्द्धमानं । राजन्तं वर्द्धमानमित्यत्रोभयत्र पूर्ववद्धातुस्वरः शिष्यते । दीदिविं, दीदिविशब्दस्य, अभ्यस्तानामादिः ( पां ६ । १ । १८९ ।) इत्याद्युदात्तत्वं । दमे, दमशब्दो, वृषादीनाञ्च ( पां ६ । १ । २०३ ।) इति वृषादित्वादाद्युदात्तः । ८ ॥

नवमीमृचमाह स नः पितेवेति । हे अग्ने, स त्वं नोऽस्मदर्थं सूपायनः शोभनप्राप्तियुक्तो भव, तथा नोऽस्माकं स्वस्तये, विनाशराहित्यार्थं सचस्व समवेतो भव, तत्रोभयत्र दृष्टान्तः, पितेव सूनवे, यथा सूनवे पुत्रार्थं पिता सूपायनः प्रायेण समवेतो भवति तद्वत् । अस्मच्छब्दादेशस्य

## द्वितीयसूक्तं।

तृचः १।

१ १ १ वायवायाहि दर्शतेमे सोमा अरंकृताः।
तेषां पाहि शुधी हवं ॥

न इत्येतस्य, अनुदात्तं सर्वमपादादौ (पां ८।१।१८।) इत्यनुदात्तत्वं। चादयोऽसत्त्वे (पां १।४।५७।) इति चादीनामनुदात्तत्वादिवशब्दोऽनुदात्तः। इवेन नित्यसमासः, पूर्वपदप्रकृतिस्वरत्वञ्च वक्तव्यमिति वार्त्तिकेन समस्तः पितेवेतिशब्दो मध्योदात्तः। शोभनमुपायनं यस्येति बहुव्रीहौ, नञ् सुभ्यां (पां ६।२।१७२।) इत्यन्तोदात्तत्वं। सचस्वेत्यत्र पदात् परत्वं नास्तीति न निघातः, लसार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः। इतिप्रथमस्य प्रथमे द्वितीयो वर्गः॥२॥ इत्यग्निसूक्तं॥

---

अग्निमीळ इत्यादिसूक्तमग्निष्टोमस्य प्रातरनुवाके यथा विनियुक्तं, तथा वायवायाहीत्यादयस्तृचाः प्रउगे विनियुक्ताः, तत्रेदञ्चिन्त्यन्ते। शस्त्रं किं देवतास्मरणरूपं संस्कारकर्म्म, किं वा प्रधानकर्म्मेति, अत्र पूर्वपक्षं जैमिनिः सूत्रयामास, स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वादिति। आज्यैः स्तुवते, पृष्ठैः स्तुवते, प्रउगं शंसति, निष्केवल्यं शंसतीति श्रूयते, अत्र स्तुतिः शंसनञ्च गुणिनिष्ठगुणाभिधानं, इन्द्रस्य नु वीर्य्याणि प्रवोचमित्यत्र दृष्टत्वात्, एवं सति याज्यान्यायेन गुणिन्या देवताया अभिधायकत्वेन स्तुतशस्त्रयोः संस्काररूपत्वमभ्युपेयं, याज्यायास्तद्रूपत्वं दशमाध्यायस्य चतुर्थपादे दृष्टार्थत्वलाभेन निर्णीतं, तद्वदत्रापि तुशब्दः प्रधानकर्म्मत्वं व्यावर्त्तयति। सिद्धान्ती तं पक्षं दूषयति, अर्थेनत्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वादिति। तुशब्देन संस्कारत्वं वारयति, संस्कारपक्षे प्रयोजनवशेन मन्त्रः, स्वस्थानादपकृष्येत, कुतः, मन्त्रगतं देवतावाचकं यदिन्द्रादिनामास्ति तच्चोदनया मन्त्ररूपया प्रतिपाद्यस्य देवतारूपस्यार्थस्य गुणभूतं, तस्माद्यत्र प्रधानभूतदेवतास्ति तत्र गुणभूतमन्त्रो नेतव्यः, तद्यथा, माहेन्द्रग्रहसन्निधौ

अभित्वाशूरेत्ययं प्रगाथ आम्नातः, स चैन्द्रं प्रकाशयति, नतु माहेन्द्रं, ततो यत्रैन्द्रं कर्म्म तत्रायं प्रगाथोऽपकर्षणीयः, तथा सति क्रमसन्निधी बाध्येयातां। तदेतत् सिद्धान्तिनाभिहितं दूषणं पूर्वपक्षी समाधत्ते, वशावद्वागुणार्थं स्यादिति। वाशब्दः प्रगाथस्यान्यत्र नयनं वारयति, यदेतदिन्द्रशब्दाभिधानं तदेतन्महत्त्वगुणोपलक्षणार्थं, यथा सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेतेत्यत्राजावशाशब्देन चोदिते कर्म्मणि छागशब्देन केवलेन युक्ता निगमा वशात्वगुणमप्युपलक्षयन्ति तद्वत्। तस्मान्महत्त्वगुणयुक्ते चोदिते कर्म्मणि निर्गुणेन्द्रशब्देनाभिधानमविरुद्धं, लोकेऽपि महाराजे केवलराजशब्दप्रयोगमपि पश्यामः। तदेतत् समाधानं सिद्धान्ती दूषयति, न श्रुतिसमवायित्वादिति। यदुक्तं वशान्यायेन राजन्यायेन वास्य प्रकृतस्येन्द्रो देवता युज्यत इति तन्न, देवता त्वस्य तद्धितश्रुतिसमवायित्वात्, माहेन्द्रं पय इत्यत्र, सास्य देवतेत्यस्मिन्नर्थे महेन्द्राद्घाणौ चेति महेन्द्रशब्दादण्प्रत्ययो विहितः, तस्मान्महेन्द्र एव देवता न त्विन्द्रः। विपक्षे बाधमाह गुणश्चानर्थकः इति। यदीन्द्रो देवता स्यात्तदानीमैन्द्रं पय इत्येतावतैवार्थावगतौ महेन्द्र इति महत्त्वगुणोऽनर्थकः स्यात्, चकारः पूर्वहेतुना समुच्चयार्थः। हेत्वन्तरमाह. तथा याज्यापुरोरुचोरिति। इन्द्रमहेन्द्रयोर्भेदे यथा महेन्द्रगुणः सार्थकस्तथा याज्यापुरोऽनुवाक्ययोर्भेदोऽप्यस्मिन्नेव पक्ष उपपद्यते। ऐन्द्रसानसिमित्यादिके इन्द्रस्य याज्यापुरोऽनुवाक्ये, महाँ इन्द्रो य ओजसेत्यादिके महेन्द्रस्य पूर्वपक्षिणोक्ते वशादृष्टान्ते वैषम्यमाह वशायामर्थसमवायादिति। या वशा विधिवाक्ये श्रुता, तस्या एव निगमेषु छागशब्देन व्यवहारो न विरुद्धः, छागत्वलक्षणस्यार्थस्य वशायां समवेतत्वात्, तच्च प्रत्यक्षेणोपलभ्यते, इन्द्रमहेन्द्रयोस्तु भेद उपपादितः, तस्माद्विषमो दृष्टान्तः। एवं संस्कारपक्षे प्रगाथस्यैन्द्रकर्म्मण्यपकर्षप्रसङ्गात्, तद्वारयितुं स्तोत्रशस्त्रयोः प्रधानकर्म्मत्वमिति सिद्धान्तिनो मतं। पुनरपि पूर्वपक्षी तदेतन्मतं निराचष्टे, यत्रेतिवार्थवत्स्यादिति। वाशब्दः सिद्धान्तिमतव्यावृत्त्यर्थः, यत्रैन्द्रं कर्म्म तत्र प्रगाथो नेतव्य इत्ययमेव पक्षः स्यात्, कुतः, अर्थवत्त्वात्, ऐन्द्रो मन्त्र इन्द्रमेव प्रकाशयितुं समर्थ इत्यर्थवान् स्यादिति, महेन्द्रन्तु प्रकाशयितुमसमर्थत्वादानर्थक्यं प्रगाथस्य प्रसज्येत, तस्माद्देवताप्रकाशनरूपसंस्कारकर्म्मत्वमेव स्तोत्रशस्त्रयोर्युक्तमिति स्थितः पूर्वपक्षः। अथ सिद्धान्तमाह, अपि वा श्रुतिसंयोगात् प्रकरणे स्तौति शंसति क्रियोत्पत्तिं विदध्यातामिति। अपि वेत्यनेन संस्कार-

कर्म्मत्वं व्यावर्त्त्यते, स्तौतिधातुः शंसतिधातुश्चेत्येतावुभावपि स्वप्रकरण एव कस्याश्चित्प्रधानक्रियाया उत्पत्तिं विदध्यातां, कुतः, श्रुतिसंयोगात्, तयोर्धात्वोर्वाच्योऽर्थः श्रुतिरित्युच्यते। तत्संयोगः प्रधानकर्म्मत्वे सिद्ध्यति। तथाहि गुणिनमुपसर्ज्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनं स्तुतिः, यो देवदत्तश्चतुर्वेदाभिज्ञ इत्युक्ते सर्वे जनाः स्तुतिमवगच्छन्ति, गुणस्योपसर्ज्जनत्वे तु स्तुतिर्न प्रतीयन्ते, यश्चतुर्वेदाभिज्ञस्तमाकारये-त्युक्ते स्तुतिं न मन्यन्ते, किन्त्वाह्वानप्राधान्यमेव बुद्ध्यन्ते। एवं मन्त्रेष्वपि या देवता सेयमीदृशैर्गुणैरुपेतेति गुणप्राधान्यं विधीयते, तत्पक्षेतु येयमीदृग्गुणयुक्ता, सेयं देवतेति देवतास्मरणस्य प्राधान्यादियं स्तुति-र्न स्यात्, ततः श्रुतिवशादेते प्रधानकर्म्मणी। तथा सति देवताप्रकाशने तात्पर्य्याभावादैन्द्रोऽपि प्रगाथः स्वप्रकरणगते माहेन्द्रकर्म्मण्येवावति-ष्ठते। यदि देवतानुस्मरणरूपं दृष्टं प्रयोजनं न लभ्येत तर्ह्यदृष्टमस्तु, प्रधानकर्म्मत्वे हेत्वन्तरमाह, शब्दपृथक्त्वाच्चेति। द्वादशाग्निष्टोमस्य स्तोत्राणि द्वादश शस्त्राणीत्यत्र द्वादशशब्देन स्तोत्राणां पृथक्त्वमवगम्यते, देवताप्रकाशनपक्षे सर्वैरपि मन्त्रसंघैः कृतस्य प्रकाशनस्यैकत्वेन द्वाद-शसङ्ख्या न स्यात्, प्रधानकर्म्मणान्त्वाज्यस्तोत्रपृष्ठस्तोत्रादिनामकानां भिन्नत्वात् द्वादशत्वसङ्ख्योपपद्यते, एवं शस्त्रवाक्येऽपि योज्यं। विपक्षे बाधमाह अनर्थकञ्च तद्वचनमिति। अग्निस्तुतिः श्रूयते, आग्नेया ग्रहा भवन्तीति। तत्रैव पुनरप्यन्यदुच्यते, आग्नेयीषु स्तुवन्ते आग्नेयीः शंस-न्तीति, त्वत्पक्षे तद्वचनमनर्थकं स्यात्, चोदकप्राप्तेषु स्तोत्रशस्त्रमन्त्रेषु आग्नेयग्रहानुसारेण देवतापदस्योहे सत्याग्नेयत्वसिद्धिः, प्रधानकर्म्म-पक्षेतु देवताप्रकाशनरूपत्वाभावेनोहाभावादाग्नेयमन्त्रान्तरविधिव-चनमर्थवद्भवति। पुनरपि हेत्वन्तरमाह, अन्यश्चार्थः प्रतीयत इति। सम्बद्धे वै स्तोत्रशस्त्रे इति ह्याम्नातं, सम्बन्धश्च द्वयोर्भवति नत्वेकस्य, तस्मात् स्तोत्रशस्त्रयोरर्थभेदः प्रतीयते, स च संस्कारपक्षे न सम्भवति, देवताप्रकाशनरूपस्यार्थस्यैकत्वात्, प्रधानकर्म्मपक्षेतु स्तोत्रकर्म्म शस्त्र-कर्म्म चेत्यर्थभेद उपपद्यते। यद्यपि ष्टुस्तुतौ शंसस्तुतावित्येकार्थौ, तथापि प्रगीतमन्त्रसाध्यं स्तोत्रं, अप्रगीतमन्त्रसाध्यं शस्त्रमिति तयो-र्विवेकः। हेत्वन्तरमाह अभिधानञ्च कर्म्मवदिति। यथा प्रधान-कर्म्मणि अग्निहोत्रं जुहोतीति द्वितीयासंयोगेनाभिहितं, तथा प्रउगं शंसतीत्यभिधीयते, अतस्तत्सादृश्यात् प्रधानकर्म्मत्वं। हेत्वन्तरमाह फलनिर्वृत्तेश्चेति। स्तुतस्य स्तुतमसीति स्तोत्रानुमन्त्रणमाम्नाय वाक्य-

मन्त्रे लोकफलमेवाम्नातं, इन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिष-
मिति, न तु देवताप्रयुक्तं फलमाम्नातं, अतो न देवता संस्कारः, किन्तु
प्रधानकर्म्मेति स्थितं। अनेन तु निर्णयेन प्रयोजनविकृतिषूहाभावः,
संस्कारपक्षे तु यस्यां विकृतौ देवतान्तरं, तत्र तद्वाचकं पदमूहनीयं
स्यात्, तन्माभूदिति प्रधानकर्म्मत्वमुक्तं। एतच्च दशमाध्याये सूचितं,
यद्वाच्यां देवतान्यत्वे स्तुतशस्त्रयोः कर्म्मत्वादविकारः स्यादिति। अत्र
संग्रहश्लोकौ। प्रउगं शंसतीत्यादौ गुणता न प्रधानता। दृष्टादेव स्तुति-
स्तेन गुणता स्तोत्रशस्त्रयोः॥ स्तुत्यर्थत्वे स्तौतिशंसत्योर्धात्वोः श्रौता-
र्थबाधनं। तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतमिति। अग्निष्टोम-
सुत्यादिने सूर्य्योदयात् पूर्वं प्रेषितो होता प्रातरनुवाकमनुब्रूयात्,
एतच्चैतरेयब्राह्मणे प्रपञ्चितं, देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहीत्या-
हाध्वर्य्युरित्यादिब्राह्मणं, तस्मिंश्च प्रातरनुवाकेऽग्निमील इत्यादिसूक्त-
मन्तर्भूतं, तच्च व्याख्यातं, प्रातःसवने वैश्वदेवग्रहादूर्द्ध्वं प्रउगशस्त्रं
होत्रा शंसनीयं, तच्च शस्त्रं वायवायाहीत्यादि सप्ततृचात्मकं, एतच्च
ब्राह्मणे यद्वाक्थमित्यादिखण्डे प्रपञ्चितं, तथा पञ्चमाध्याये स्तोत्रमग्रे
शस्त्रादित्यादिखण्डे सूचितञ्च। अथेयमनुक्रमणिका, वायो वायव्ये-
न्द्रवायवमैत्रावरुणास्तृचाः, अश्विनावाश्विनैन्द्रावैश्वदेवसारस्व-
तास्तृचाः, सप्तैताः प्रउगदेवता इति, अस्यायमर्थः, वायवायाहीत्या-
दिकं नवर्चं सूक्तं, ऋषिं नवेत्यतो नवशब्दस्यानुवृत्तेः, तत्राद्यस्तृचो
वायुदेवताकः, द्वितीय इन्द्रवायुदेवताकः, तृतीयो मित्रावरुणदेव-
ताकः, अश्विनेत्यादिकं द्वादशर्चं सूक्तं, तत्राद्यस्तृच आश्विनः, द्वितीय
ऐन्द्रः, तृतीयो वैश्वदेवः, चतुर्थः सारस्वतः, तेषु तृचेषु प्रतिपाद्यवा-
य्वादयः सारस्वतान्ताः सप्तसङ्ख्याकाः प्रउगशस्त्रस्य देवता इति, मधुच्छ-
न्दसोऽनुवर्त्तनात् स एव ऋषिस्तथैवानुवृत्त्या गायत्रं छन्दः, वायव्ये
तृचे प्रथमा, यद्वस्येन्द्रवायवस्यैकापुरोऽनुवाक्या, एतच्च ब्राह्मणे समाम्नातं,
वायव्या पूर्वापुरोऽनुवाक्यैन्द्रवायव्युत्तरेति, तथा सूचितञ्च वायवायाहि
दर्शतेन्द्रवायू इमे सुता इत्यनुवाक्ये इति वायव्येतृचे प्रथमामृचमाह
वायवायाहीति। दर्शत हे दर्शनीय वायो कर्म्मण्येतस्मिन् आयाहि
आगच्छ, त्वदर्थमिमे सोमा अरंकृताः, अभिषवादिसंस्कारोऽलङ्कार-
स्तेषां तान् सोमान् पाहि पिब, यद्वा तेषामेकदेश इत्यध्याहारः, तत्
पानार्थं हवमस्मदीयमाह्वानं श्रुधि शृणु। अत्र यास्कः, वायवायाहि
दर्शनीयेमे सोमा अरङ्कृता अलङ्कृतास्तेषां पिब शृणु नो ह्वानमिति।

१ २ १ वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः।
सुतसोमा अहर्विदः॥

दर्शत, भृमृदृशीत्यादिसूत्रेणातच्प्रत्यय औणादिकः। चित्त्वादन्तोदात्तस्यामन्त्रितानुदात्तत्वं। अर्त्तिस्तुसुहु इत्यादिना मन्प्रत्ययान्तस्य सोमशब्दस्य नित्स्वरः। अरमित्यत्र छान्दसो रेफादेशः। अरंकृतशब्दे समासान्तोदात्तं बाधित्वा अनेन पूर्वपदप्रकृतिस्वरत्वप्राप्तौ; भूषणेऽलं (पा १। ४। ६४।) इत्यलंशब्दस्य गतिसंज्ञायां, गतिकारक (पां ६। २। १३९।) इत्यादिना कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन, गतिरनन्तरः (पा ६। २। ४९।) इति पूर्वपदप्रकृतिस्वरत्वं, निपातत्वादलंशब्द आद्युदात्तः। पाहीत्यत्र पिबादेशाभावश्छान्दसः। श्रुधीत्यत्र, श्रुशृणु (पां ६। ४। १०२।) इत्यादिना हेर्धिभावः, तिङन्तादुत्तरस्य निघातो नास्ति, सेर्ह्यपिच्च (पा ३। ४। ८७।) इति पित्त्वनिषेधादनुदात्ते निवारिते प्रत्ययस्वरः। हवमित्यत्र ह्वयतिधातोर्बहुलं छन्दसि (पां ६। १। ३४।) इति सम्प्रसारणे सत्युकारान्तत्वात्, ऋदोरप् (पा ३। ३। ५७।) इत्यप्प्रत्ययः, तस्य पित्त्वादनुदात्तत्वे सति धातुस्वरः शिष्यते। संहितायां श्रुधीत्यस्य, अन्येषामपि दृश्यते (पा ६। ३। १३७।) इति दीर्घत्वं ॥ १ ॥

द्वितीयामृचमाह वाय उक्थेभिरिति। हे वायो जरितारः स्तोतार ऋत्विग्यजमानास्त्वामच्छ त्वामभिलक्ष्य उक्थेभिराज्यप्रउगादिशस्त्रैर्जरन्ते स्तुवन्ति। कीदृशास्ते सुतसोमा अभिषुतेन सोमेनोपेताः। अहर्विदः, अहःशब्द एकेनाह्ना निष्पाद्येऽग्निष्टोमादिक्रतौ वैदिकव्यवहारेण प्रसिद्धः, तदभिज्ञ इत्यर्थः। अर्चति गायतीत्यादिषु चतुश्चत्वारिंशत्स्वर्चतिकर्मसु जरते ह्वयतीति पठितं। स्तुतेरप्यर्चनविशेषत्वात् औचित्येनात्र स्तुत्यर्थो जरतिधातुः। अच्छशब्दस्य संहितायां, निपातस्य च (पा ६। ३। १३६।) इति दीर्घः। सुतसोमा इत्यत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरः। अहर्विद इत्यत्र समासस्वरं बाधित्वा, तत्पुरुषे तुल्यार्थतृतीया (पा ६। २। २।) इति द्वितीयापूर्वपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन, गतिकारक (पा ६। २। १३९।) इत्यादिना कृदुत्तरपदप्रकृतिस्वरः ॥ २ ॥

१ ३ १ वायो तव प्रपृञ्चती धेना जिगाति दाशुषे ।
उरूची सोमपीतये ॥

(तृचः २)

१ १ १ इन्द्रवायू इमे सुता उप प्रयोभिरागतं ।
इन्दवो वामुशन्ति हि ॥

तृतीयामृचमाह वायो तवेति। हे वायो, तव धेना वाक् सोमपीतये सोमपानार्थं दाशुषे दाश्वांसं दत्तवन्तं यजमानं जिगाति गच्छति, हे यजमान, त्वया दत्तं सोमं पास्यामीत्येवं वायुर्ब्रूत इत्यर्थः। कीदृशी धेना प्रपृञ्चती प्रकर्षेण सोमसम्पर्कं कुर्वती, सोमगुणं वर्णयन्तीत्यर्थः। उरूची, उरून् बहून् यजमानान् गच्छन्ती, ये ये सोमयाजिनस्तान् सर्वान् वर्णयन्तीत्यर्थः। प्रपृञ्चतीत्यत्र, शतुरनुमो नद्यजादी (पां ६।१।१७३।) इति ङीबुदात्तः। श्लोकाधारेत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु मध्ये धेना ग्ना इति पठितं वर्त्तते। वयत इत्यादिषु द्वाविंशत्यधिकशतसंख्याकेषु गतिकर्म्मसु गाति जिगातीति पठितं। दाशुष इत्यत्र, गत्यर्थकर्म्मणि (पां २।३।१२।) इति चतुर्थी। उरूचीत्यत्र गौरादित्वेन ङीषि सति प्रत्ययस्वरः। सोमपीतय इत्यत्र बहुव्रीहित्वाभावेऽपि व्यत्ययेन पूर्वपदप्रकृतिस्वरः॥ ३ ॥

ऐन्द्रवायवे तृचे प्रथमामृचमाह, इन्द्रवायू इमे सुता इति। एतस्या ऋच ऐन्द्रवायवग्रहे द्वितीयपुरोनुवाक्यारूपेण विशेषविनियोगः पूर्वमेवोक्तः, हे इन्द्रवायू भवदर्थमिमे सोमाः सुता अभिषुतास्तस्माद्युवां प्रयोभिरन्नैरस्मभ्यं दातव्यैः सहोपागतं अस्मत्समीपं प्रत्यागच्छतं, हि यस्मादिन्दवः सोमा वां युवामुशन्ति कामयन्ते, तस्मादागमनमुचितं। इन्द्रवायूशब्दस्यामन्त्रिताद्युदात्तत्वं। प्रीणयन्ति भोक्तॄनिति प्रयांस्यन्नानि, प्रीधातोरन्तर्भावितण्यर्थादसुन्प्रत्यये सति नित्स्वरः। गमिधातोर्लोण्मध्यमपुरुषद्विवचने, बहुलं छन्दसि (पां २।४।७१।) इति शपो लुकि सति, अनुदात्तोपदेश (पां ६।४।३७।) इत्यादिना मकारलोपे सति गतमिति भवति। इन्दवः, उन्दी क्लेदने इति धातोः, उन्देरिच्चादेरित्युप्रत्यय आद्यक्षरस्येकारादेशश्चौणादिकत्वात् इन्दुशब्दस्य नित्स्वरः, तिङन्तेः सोमरसस्य द्रवत्वात् क्लेदनं सम्भवति। युष्मच्छब्दा-

१ २ १ वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू ।
तावायातमुपद्रवत् ॥ ३ ॥
१ ३ १ वायविन्द्रश्च सुन्वत आयातमुप निष्कृतं ।
मक्ष्वित्था धिया नरा ॥

देशस्य वामित्येतस्य, अनुदात्तं सर्वमपादादौ ( पां ८ । १ । १८ । )इत्यनुदात्तः । उशन्तीत्यस्य निघाते, हि च ( पां ८ । १ । ३४ । ) इति सूत्रेण निघाते प्रतिषिद्धे सति प्रत्ययस्वरः । हिशब्दस्य निपातस्वरः ॥ १ ॥

द्वितीयामृचमाह वायविन्द्रश्चेति । अत्र चकारेण नान्यः समुच्चीयते सन्निहितत्वाद्वायुरेव, हे वायो, त्वमिन्द्रश्च युवामुभौ सुतानामभिषुतान् सोमान् चेतथो जानीथः, यद्वाभिषुतानां सोमानां विशेषमित्यध्याहारः । कीदृशौ युवां, वाजिनीवसू, वाजिनीशब्दो यद्यप्युषोनामसु पठितस्तथाप्यत्रासम्भवादन्नं उच्यते, वाजोऽन्नं तद्यस्यां हविःसन्ततावस्ति सा वाजिनी, तस्यां वसतइति तौ वाजिनीवसू, आमन्त्रितत्वादनुदात्तः, तौ तथाविधौ युवां द्रवत् क्षिप्रमुप समीपे आयातं आगच्छतं । षड्विंशतिसङ्ख्यकेषु क्षिप्रनामसु क्षिपं मक्षु द्रवदिति पठितं, तत्र फिटस्वरः ॥ २ ॥ इति प्रथमस्य प्रथमे तृतीयो वर्गः ॥

ऐन्द्रवायवे तृचे तृतीयामृचमाह वायविन्द्रश्च सुन्वतइति । हे वायो, त्वमिन्द्रश्च सुन्वतः, सोमाभिषवं कुर्वतो, यजमानस्य निष्कृतं संस्कृतं सोममुपायातं आगच्छतं । नरा, हे नरौ पुरुषौ पौरुषेण सामर्थ्येनोपेतौ, युवयोरागतयोश्च सतोर्धियामुना कर्म्मणा मक्षु त्वरया संस्कारः सम्पत्स्यते इत्था सत्यं । वायो इत्यस्य, आमन्त्रितस्य च ( पां ६ । १ । १९८ । ) इति षाष्ठिकमाद्युदात्तत्वं । इन्द्रः, इदि परमैश्वर्य्ये इति धातुः, इदितो नुम्धातोः ( पां ७ । १ । ५८ । ) इति नुमागमः, ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरभेत्यादिना औणादिक रन्प्रत्ययान्तो निपातितः, ञ्नित्यादिर्नित्यं ( पां ६ । १ । १९७ । ) इत्याद्युदात्तः । चशब्द आदयोऽनुदात्ता इतिफिट्सूत्रेणानुदात्तः । सुन्वत इत्यत्र, शतुरनुमो नद्यजादी ( पां ६ । १ । १७३ । ) इति विभक्तेरुदात्तत्वं । निष्कृतं, निरित्यस्य समित्येतस्य स्थाने इति यास्कः । कृतशब्दः, आदिकर्म्मणि क्तः कर्त्तरि च ( पां ३ । ४ । ७१ । ) इति कर्त्तरि क्तः, संस्कर्त्तुं प्रवृत्त

( ऋचः १ )

। १ । मित्रं हुवे पूतदक्षं वरुणं च रिशादसं ।
धियं घृताचीं साधन्ता ॥

इत्यर्थः, कुगतिप्रादयः ( पां २ । २ । १८ । ) इति समासेऽव्ययपूर्वपद-प्रकृतिस्वरत्वे प्राप्ते, थाथघञ्क्ताजबित्रकाणां ( पां ६ । २ । १४४ । ) इत्यन्तोदात्तः, गतिरनन्तरः ( पां ६ । २ । ४९ । ) इति नित्य उदात्तत्वं न भवति, तद्धि कर्म्मणि क्ते विहितं, निष्करोतीति निष्कृदिति क्विबन्तव्याख्यानेतु, गतिकारकोपपदात् कृत् ( पां ६ । २ । १३९ । ) इत्युकार उदात्तः स्यात्। धिया, सावेकाचस्तृतीयादि ( पां ६ । १ । १६८ । ) इत्यादिना विभक्तिरुदात्ता। नरा, सुपांसुलुक् ( पां ७ । १ । ३९ । ) इत्यादिना सम्बोधनद्विवचनस्य डादेशः, पदात्परत्वात्, आमन्त्रितस्य च ( पां ८ । १ । १९ । ) इत्याष्टमिको निघातः ॥ १ ॥

मित्रं हुव इति मैत्रावरुणस्तृचो गवामयने आरम्भणीये चतुर्विंशे ऽहनि प्रातःसवने मैत्रावरुणस्य स्तोत्रियः, तत्रैवाभिप्लवषडहेऽपि विनियुक्तः, तथाचाश्वलायनेन चतुर्विंशे होताजनिष्टेत्यादिखण्डे मित्रं वयं हवामहे, मित्रं हुवे पूतदक्षमित्यादिसूचितं, तथैवाभिप्लवप्रथा-हानीतिखण्डे परिशिष्टानावापाननुकृत्य मित्रं वयं हवामहे मित्रं हुवे पूतदक्षमिति च, तस्य मैत्रावरुणतृचस्य प्रथमामृचं मित्रं हुव इति। अहमस्मिन् कर्म्मणि हविःप्रदानाय पूतदक्षं पवित्रबलं मित्रं हुवे, तथा रिशादसं, रिशानां हिंसकानामदनं सम्भोक्तारं वरुणं हुवे आह्वयामि। कीदृशौ मित्रावरुणौ, घृतमुदकमञ्चति भूमिं प्राप-यति या धीर्वर्षणकर्म्म तां घृताचीं धियं साधन्ता साधयन्तौ कुर्वन्तौ। मित्रशब्दः पुंलिङ्गः, प्रातिपदिकस्वरेणान्तोदात्तः। हुवे, ह्वयतेर्बहुलं छन्दसीति शपो लुकि सति, ह्वः सम्प्रसारणं ( पां ६ । १ । ३२ । ) इत्यनुवृत्तौ, बहुलं छन्दसि ( पां ६ । १ । ३४ । ) इति सम्प्रसारणे उवादेशः, तिङ्ङतिङः ( पां ८ । १ । २८ । ) इति निघातः। पूत-दक्षं, पूतशब्दः प्रत्ययस्वरेणान्तोदात्तः, बहुव्रीहौ पूर्वपदप्रकृतिस्व-रत्वं। वरुणशब्दः कृवृदारिभ्य उनन्नित्युनन्प्रत्ययान्तो नित्वादाद्यु-दात्तः। रिशन्ति हिंसन्तीति रिशाः शत्रवः, इगुपधज्ञाप्रीकिरः कः ( पां ३ । १ । १३५ । ) इति कः प्रत्ययः, प्रत्ययस्वरेणोदात्तत्वमन्तीति

१ २ १ ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।
क्रतुं बृहन्तमाशाथे ॥

रित्याद्युदात्तं सर्वधातुभ्योऽसुन्नित्यसुन्प्रत्यय औणादिकः, नित्स्वरेणोत्तरपदमाद्युदात्तं, तदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते, शेषनिघाते सति, एकादेश उदात्तेनोदात्तः ( पां ८ । २ । ५ । ) इति सवर्णदीर्घोऽप्युदात्त एव । धीरिति, अप इत्यादिषु षड्विंशतिसङ्ख्यकेषु कर्म्मनामसु पठितः प्रातिपदिकस्वरेणान्तोदात्तः । घृतमञ्चतीति घृताची, ऋत्विग्दधृक् ( पां ३ । २ । ५९ । ) इत्यादिना क्विनि, अनिदितां ( पां ६ । ४ । २४ । ) इत्यादिना न लोपः, अञ्चतेश्चोपसङ्ख्यानमिति वार्त्तिकेन ङीप्, अचः ( पां ६ । ४ । १३८ । ) इत्यकारलोपे, चौ ( पां ६ । ३ । १३८ । ) इति दीर्घत्वं, घृतशब्दो, नब्विषयस्यानिसन्तस्येत्याद्युदात्तं बाधित्वा घृतादीनाञ्चेत्यन्तोदात्तः, समासस्य ( पां ६ । १ । २२३ । ) इत्यन्तोदात्तस्यापवादकं, तत्पुरुषे तुल्यार्थतृतीया ( पां ६ । २ । २ । ) इति पूर्व्वपदप्रकृतिस्वरं बाधित्वा, गतिकारकोपपदात् कृत् ( पां ६ । २ । १३९ । ) इत्युत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य धात्वकारस्य लोपे सति, अनुदात्तस्य च यत्रोदात्तलोपः ( पां ६ । १ । १६१ । इति ङीप उदात्तत्वे प्राप्ते, चौ ( पां ६ । १ । २२२ । ) इति पूर्वपदान्तोदात्तत्वं । साधन्ता, राध साध संसिद्धावित्यस्मादन्तर्भावितण्यर्थाल्लटः शत्रादेशे श्नमं बाधित्वा व्यत्ययेन शप्, अदुपदेशादुपरि शतृप्रत्ययस्य लसार्वधातुकानुदात्तत्वं, द्वितीयाद्विवचनस्य, शपश्च, अनुदात्तौ सुप्पितौ ( पां ३ । १ । ४ । ) इत्यनुदात्तत्वं, धातोः ( पां ६ । १ । १६२ । ) इति धातुस्वर एव शिष्यते । सुपां सुलुक् ( पां ७ । १ । ३९ । ) इति विभक्तेराकारादेशः ॥ १ ॥

द्वितीयामृचमाह ऋतेन मित्रावरुणाविति । हे मित्रावरुणौ, युवां क्रतुं प्रवर्त्तमानमिमं सोमयागं आशाथे व्यानशाथे व्याप्तवन्तौ, केन निमित्तेन, ऋतेन अवश्यम्भावितया सत्येन फलेनास्मभ्यं फलं दातुमित्यर्थः । कीदृशौ युवां ऋतावृधौ, ऋतमित्युदकनाम, सत्यं वा यज्ञं वेति यास्कः, उदकादीनामन्यतमस्य वर्द्धयितारौ, अतएव ऋतस्पृशा, उदकादीन् स्पृशन्तौ । कीदृशं क्रतुं बृहन्तं, अङ्गैरुपाङ्गैश्चातिप्रौढं । ऋतशब्दो घृतादित्वादन्तोदात्तः । मित्रावरुणावित्यत्र मित्रश्च वरुणश्चेति मित्रावरुणौ, देवताद्वन्द्वे च ( पां ६ । ३ । २६ । ) इतिपूर्वपदस्या

ङादेशः। ऋतस्य वर्द्धयितारावित्यर्थेऽन्तर्भावितण्यर्थादृधेः क्विप्, अन्येषामपि दृश्यते (पां ६।३।१३७।) इति पूर्वपदस्य दीर्घः, ऋतस्पृशा, सुपां सुलुक् ( पां ७।१।३९। ) इति डादेशः। मित्रावरुणावित्याद्यामन्त्रितत्रयस्य स्वस्वपूर्वपदात् परत्वात्, आमन्त्रितस्य च ( पां ८।१।१९।) इत्याष्टमिको निघातः। ननु ऋतेनेत्येतस्य, सुबामन्त्रिते पराङ्गवत्स्वरे (पां २।१।२।) इति पराङ्गवद्भावेनामन्त्रितानुप्रवेशात्, पादादित्वेन पदादपरत्वेन चाष्टमिकनिघाताभावात्, आमन्त्रितस्य च ( पां ६।१।१९८।) इत्याद्युदात्तेन भवितव्यमिति चेन्न, पराङ्गवद्भावस्य सुबामन्त्रिताश्रयत्वेन पदविधित्वात्, समर्थः पदविधिः (पां २।१।१।) इति नियमात्, इह च ऋतेन मित्रावरुणावित्येतयोराशात इत्याख्यातेनैवान्वयेन परस्परमसामर्थ्यात्, यत्र पुनः परस्परान्वयेन सामर्थ्यं तत्र पराङ्गवद्भावात् पादादेराद्युदात्तत्वं भवत्येव, यथा मरुतां पितस्तदहं गृणामीति, ऋग्रेवतिरित्युतिप्रत्ययान्तत्वेन, पृश्नियै वै पयसो मरुतो जाता इत्यादावन्तोदात्तोऽपि हि मरुच्छब्दो मरुतां पितरित्यत्र सामर्थ्यात् पराङ्गवद्भावादेवाद्युदात्तो जातः, प्रकृते तु ऋतेनेत्यस्यासामर्थ्यादेव न पराङ्गवद्भाव इति, ऋतावृधावित्यत्र द्वितीयामन्त्रितस्य निघाते कर्त्तव्ये, आमन्त्रितं पूर्वमविद्यमानवत् (पां ८।१।७२।) इति प्रथमामन्त्रितेनाविद्यमानवद्भावेन भवितव्यमिति चेत्, भवतु, अत एव तस्याव्यवधायकत्वात्, ऋतेनेति प्रथमपदात् परत्वेनैव द्वितीयामन्त्रितं निहन्यते। यथा इमं मे गङ्गे यमुने सरस्वतीत्यादौ, गङ्गेशब्दस्याविद्यमानवद्भावेऽपि तस्याव्यवधायकत्वादेव मे इत्येव पदमुपजीव्य यमुनेशब्दस्य निघातः, किञ्च प्रकृतेन च मित्रावरुणावित्यामन्त्रितं सामान्यवचनं, तस्य विशेषणतया विशेषवचनमृतावृधाविति, अतो नामन्त्रिते समानाधिकरणे सामान्यवचनं (पां ८।१।७३) इति पूर्वस्याविद्यमानवद्भावप्रतिषेधादपि निरन्तरायो द्वितीयनिघातः। नन्वेवमप्यपादादावित्यनुवृत्तेः ऋतावृधेत्यस्य द्वितीयपादादित्वान्न भवितव्यन्निघातेन, अतएव हि इमं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमं सचता इत्यत्र शुतुद्रिपदस्य पदात् परस्यापि पादादित्वादेव निघाताभावादाद्युदात्तं जातं, तद्वदत्रापि भवितव्यं, वक्तव्यो विशेष इति चेत्, उच्यते, मित्रावरुणस्य, सुबामन्त्रित इति पराङ्गवद्भावेन परानुप्रवेशादेव ऋतावृधेत्यस्य न पादादित्वं, शुतुद्रिपदमपि तर्ह्येवमेव पूर्वस्य सरस्वतीपदस्य पराङ्गवद्भावेन न पादादिरिति निहन्येतेति चेत्, न,

१ ३ १ कवी नो मित्रावरुणा तुविजाता उरुक्षया ।
दक्षं दधाते अपसं ॥ ४ ॥

पराङ्गवद्भावस्तावत्सुबन्तमामन्त्रितं वाश्रित्य प्रवृत्तः पदविधिः, अत-स्तयोः सत्येव परस्परान्वये पराङ्गवद्भावेन भवितव्यं, समर्थः पदविधि-रिति नियमात्, शुतुद्रिसरस्वतिपदयोश्च न परस्परेणान्वयः। किन्तु सचतेत्यनेनासामर्थ्यान्न पराङ्गवद्भावः, प्रकृते तु मित्रावरुणावृतावृधा इति द्वयोरपि सामानाधिकरण्येन परस्परान्वयादस्ति सामर्थ्यमिति भवितव्यं पराङ्गवद्भावेन, यथा मरुतां पितरित्यत्र विशेषः। नन्वतएव तर्हि मित्रावरुणपदस्य पराङ्गवद्भावेन पादादित्वादपादादाविति पर्य्यु-दासादामन्त्रितनिघातो न स्यादिति चेन्न, पूर्वं सुबन्तं परञ्चामन्त्रित-माश्रित्य यः स्वरः प्रवर्त्तते, तत्र सुबामन्त्रित इति पराङ्गवद्भावः, भवति चैवंविधे ऋतावृधपदनिघात इति। तत्र पूर्वस्य पराङ्गवद्भावेन पदादित्वात् संप्रवर्त्तते, मित्रावरुणपदनिघातस्तु पूर्वमेव पदमुपजी-वति न परमामन्त्रितमिति न पराङ्गवद्भाववन्निघातोऽपि पदविधि-रिति, ऋतेनेत्यनेनासामर्थ्यात्, ततः पदात्परस्य मित्रावरुणपदस्य न स्यादिति चेन्न, समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या इति निघाते पदविधावपि समानवाक्यत्वमेव पर्य्याप्तं न पराङ्गवद्भाववत् परस्परान्वयोऽपीत्यर्थः। क्रतुं, कृञः क्रतुरित्यौणादिकः कृञः क्रतुरादेशः। प्रत्ययस्वरेणाद्युदात्तः। आशाथे, आनशाथे, छन्दसि लुङ् लङ् लिटः (पां ३। ४। ६।) इति वर्त्तमाने लिट्, नुडभावश्छान्दसः। २॥

तृतीयामृचमाह कवी न इति। मित्रावरुणावेतौ देवौ नोऽस्माकं दक्षं बलं, अपसं कर्म्म च दधाते पोषयतः। कीदृशावेतौ कवी मेधा-विनौ, तुविजातौ बहूनामुपकारकतया समुत्पन्नौ, उरुक्षया बहुनि-वासौ। विप्रो धीर इत्यादिषु चतुर्विंशतिसङ्ख्यकेषु मेधाविनामसु कविर्मनीषीति पठितं। उरुतुवीत्येतौ द्वादशसु बहुनामसु पठितौ। व्रजः पाज इत्यादिष्वष्टाविंशतिसङ्ख्यकेषु बलनामसु दक्षो विदिति पठितं। अपस्शब्दः षड्विंशतिसङ्ख्यकेषु कर्म्मनामसु पठितः। मित्रा-वरुणा, मित्रशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, वरुणशब्दो नित्त्व-स्वरेणाद्युदात्तः, द्वन्द्वे देवताद्वन्द्वे चेत्युभावेव शिष्येते। तुविजातौ, बहू-नामुपकारकतया तत्सम्बन्धित्वेन जाताविति षष्ठीसमासे समासान्तो-

## तृतीयसूक्तं ।

ऋचः ॥ १ ॥

११ अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती ।
पुरुभुजा चनस्यतं ॥

दात्तत्वं, चतुर्थीसमासे, चि (पां ८ । १ । ३४) चेति पूर्वपदप्रकृतिस्वरः स्यात् । उरुक्षया, उरुषु बहुषु क्षयावुरुक्षयौ, क्षि निवासगत्योरिति धातोः क्षयत्यस्मिन्निति क्षय इत्यधिकरणे, एरच् (पां ३ । ३ । ५६ ।) इत्यच् प्रत्ययान्तस्य, चितः (पां ६ । १ । १६३ ।) इत्यन्तोदात्तत्वे प्राप्ते, क्षयो निवासे (पां ६ । १ । २०१ ।) इत्याद्युदात्तत्वं विहितं, समासे तु समासस्येत्यन्तोदात्तत्वं बाधित्वा तत्पुरुषप्रकृतिस्वरेण प्राप्तमुत्तरपदाद्युदात्तत्वं, यद्यपि, थाथघञ (पां ६ । २ । १४४ ।) इति थाथादिस्वरेणान्तोदात्तेन बाध्यते, तथापि, परादिश्छन्दसि बहुलं (पां ६ । २ । १९९ ।) इत्युत्तरपदाद्युदात्तत्वं द्रष्टव्यं । दक्षं, दक्षतेर्वृद्ध्यर्थकर्मणो घञ्, ञित्वादाद्युदात्तः । अपसं, आप्यते फलमनेनेत्यपः कर्म्म, आपः कर्म्माख्यायां ह्रस्वो नुट् चेत्यसुनन्तस्य, अपसस्पार इत्यादौ ञित्वादाद्युदात्तस्याप्यपस्शब्दस्यात्र व्यत्ययेन प्रत्ययाद्युदात्तत्वं ॥ ९ ॥ इति प्रथमस्य प्रथमे चतुर्थो वर्गः ॥ ४ ॥

---

आश्विनस्तृचः प्रातरनुवाकस्य आश्विने क्रतौ विनियुक्तः, तथाच सूत्रितं, अथाश्विन एषो उषाः प्रातर्युजेति चतस्रोऽश्विना यज्वरीरिष इति, तत्र प्रथमामृचमाह अश्विना यज्वरीरिष इति । हे अश्विनौ युवामिषो हविर्लक्षणानि अन्नानि चनस्यतं इच्छतं भुञ्जाथामित्यर्थः, यद्यपि चनःशब्दोऽन्नवाची, तथापीषइत्यनेन सह नास्ति पुनरुक्तिदोषः, इच्छामुपलक्षयितुं प्रयुक्तत्वादस्याप्यनुवाद, समूलकाषं कषतीत्यादौ यथा पुनरुक्त्यभावस्तद्वत् । कीदृशीरिषः, यज्वरीः यागनिष्पादिकाः । कीदृशावश्विनौ द्रवत्पाणी, हविर्ग्रहणाय द्रवद्भ्यां धावद्भ्यां पाणिभ्यामुपेतौ । शुभस्पती, शोभनस्य कर्म्मणः पालकौ । पुरुभुजा, पुरुभुजौ विस्तीर्ण-

भुजौ बहुभोजिनौ वा। अश्विना, आमन्त्रितस्य च (पां ६।१।१९८।) इति षाष्ठिकमाद्युदात्तत्वं। यज्वरीः, यागकरणानामप्यन्नानामसि-भिन्नत्तीतिवत् स्वव्यापारे कर्त्तृत्वविवक्षया, सुयजोर्ङ्वनिप् (पां ३।२।१०३।) इति ङ्वनिप् प्रत्ययः, वनोरच (पां ४।१।७।) इति ङीप्, तत्संनियोगेन रेफादेशः, प्रत्ययत्रयस्य, अनुदात्तौ सुप्पितौ (पां ३।१।४।) इत्यनुदात्तत्वाद्धातुस्वर एवावशिष्यते। इषःशब्दे शसो ऽनुदात्तत्वात् प्रातिपदिकस्वर एव शिष्यते। द्रवत्पाणी, द्रवन्तौ धावन्तौ पाणी ययोस्तयोः सम्बोधनं द्रवत्पाणी, तस्यामन्त्रिताद्युदात्तत्वं, न पुनराष्टमिको निघातः, अपादादाविति प्रतिषेधात्। इषइति पूर्वपदस्य, सुबामन्त्रिते पराङ्गवत्स्वरे (पां २।१।२।) इति पराङ्गवद्भावेन मित्रावरुणावृतावृधाविविवदपादादित्वमिति चेन्न, तत्र सामानाधिकरण्येन परस्परान्वयात्, इहत्विषो द्रवत्पाणीइत्यनयोः सरस्वतिशुतुद्रिपदसामर्थ्येन प्रयुक्तत्वात्, शुभइति, शुभशुम्भदीप्ताइत्यस्य सम्पदादित्वात् भावे क्विबन्तस्य षष्ठ्येकवचनं, षष्ठ्याः पतिपुत्र (पां ८।३।५३।) इति विसर्ज्जनीयस्य षत्वं, तस्य पती इत्यामन्त्रिते परतः पराङ्गवद्भावात् आमन्त्रिताद्युदात्तत्वं, न पुनराष्टमिको निघातः, तस्मिन् कर्त्तव्ये द्रवत्पाणीतिपूर्वस्यामन्त्रितस्य, आमन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानवद्भावेन पादादित्वादपादादाविति प्रतिषेधात्। ननु मित्रावरुणावृतावृधाविविवत्, नामन्त्रिते समानाधिकरणे (पां ८।१।७३।) इत्यविद्यमानवद्भावप्रतिषेधेन भवितव्यमिति चेन्न, मित्रावरुणपदं हि सामान्यवचनमिति युक्तस्याविद्यमानवत्त्वप्रतिषेधः, द्रवत्पाणीपदन्तु न तथेति वैषम्यात्। पुरु विस्तीर्णौ भुजौ ययोस्तौ आमन्त्रिताद्युदात्तत्वं, सुपांसुलुगिति डादेशः, पुरु बहु भुञ्जातइति वा। चनस्यतमित्यत्र, चायेरन्ने ह्रस्वश्चेति चायृपूजानिशामनयोरित्यस्यासुन्प्रत्यये, आकारस्य ह्रस्वे चानुङ्गरनुडागमे च, लोपो व्योर्वलि (पां ६।१।६६।) इति यकारलोपे चनस्शब्दोऽन्ननामसु पठितस्तदात्मन इच्छतीति, सुप आत्मनः क्यच् (पां ३।१।८।) इतिक्यच्, सनाद्यन्तेन धातुत्वात्लोण्मध्यमपुरुषद्विवचनं, क्यचः प्रत्ययस्वरेणोदात्तत्वं, शप, एकादेश उदात्तेनोदात्तः (पां ८।२।५।) इत्युदात्तः, उपर्य्याख्यातस्य लसार्वधातुकानुदात्तत्वे स्वरितत्वं, नच, तिङ्ङतिङः (पां ८।१।२८।) इति निघातः, पूर्वस्यामन्त्रितस्याविद्यमानवद्भावेन पदात् परत्वात् पादादित्वाद्वा तदप्राप्तेः॥१॥

१ २ १ अश्विना पुरुदंससा नरा शवीरया धिया ।
धिष्ण्या वनतं गिरः ॥

द्वितीयामृचमाह अश्विनापुरुदंससेति । अश्विना हे अश्विनौ, युवां गिरोऽस्मदीयाः स्तुतीर्धिया आदरयुक्तया बुद्ध्या वनतं सम्भजतं स्वीकुरुतं । कीदृशावश्विनौ पुरुदंससा बहुकर्माणौ, षड्विंशतिसङ्ख्यकेषु कर्मनामसु दंस इति पठितं । नरा नेतारौ, धिष्ण्या धार्ष्ट्ययुक्तौ बुद्धिमन्तौ वा । कीदृश्या धिया शवीरया गतियुक्तया अप्रतिहतप्रसरयेत्यर्थः । अश्विनेत्याद्यामन्त्रितचतुष्टयस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वं, पादादित्वादाष्टमिको निघातः, पुरुदंससेत्यपि हि पादादिरेव, आमन्त्रितं पूर्वमविद्यमानवदिति पूर्वस्याविद्यमानवत्त्वान्नामन्त्रिते समानाधिकरण इति पर्वस्य सामान्यवचनत्वेनास्य विशेषवचनत्वेन नाविद्यमानवत्त्वमिति चेन्न, अश्विशब्दवत् पुरुदंसस्शब्दस्यापि अश्विनाविव रूढ्या प्रयुज्यमानतया. सामान्यशब्दत्वात् सामान्यवचनं, नाविद्यमानवदित्युक्तेऽर्थात् परस्य विशेषवचनत्वावगमादुभयोः सामान्यवचनत्वे पर्य्यायत्वेन पौनरुक्त्यात् सहाप्रयोग इति चेन्न, गुणविशेषसङ्कीर्त्तनवत् प्रसिद्धानेकनामविशेषसम्बन्धसङ्कीर्त्तनस्यापि स्तुत्युपयोगेन सप्रयोजनत्वान्निष्प्रयोजनपुनर्वचनस्यैव पुनरुक्तत्वात्, अश्विपुरुदंसस्शब्दयोरेकार्थत्ववृत्तित्वेऽपि पर्य्यायत्वादेव प्रवृत्तिनिमित्तभेदाभावेनासामानाधिकरण्यादपि नाविद्यमानवत्त्वप्रतिषेधः, भिन्नप्रवृत्तिनिमित्तानामेव हि एकस्मिन्नर्थे वृत्तिसामानाधिकरण्यं, अश्विशब्दस्याश्विसम्बन्धो निमित्तं, पुरुदंसस्शब्दस्य तु बहुकर्मसम्बन्ध इति प्रवृत्तिनिमित्तभेद इति चेन्न, तद्धि द्वयं व्युत्पत्तिमात्रनिमित्तं न प्रवृत्तिनिमित्तं व्युत्पत्तिनिमित्तभेदमात्रेणापि सामानाधिकरण्याभिधाने इन्द्रमहेन्द्रशब्दयोरपि तथात्वप्रसङ्गः, अतएव इडेरन्तेदिते सरस्वतिप्रिये प्रेयसि महिविश्रुते इत्येतानि ते अघ्निये नामानीत्यत्र सहयुतमीप्रशंसोपयोगित्वेनेडादिशब्दानामेतानि अघ्निये नामानि इति वचनेन पर्य्यायाणामप्यनेकविशिष्टनामसम्बन्धनिबन्धस्तुत्यर्थत्वेनैव सहप्रयोगः, स्तुत्युपयोगेनैव व्युत्पत्तिनिमित्तभेदविवक्षायामपि पर्य्यायत्वेनासामानाधिकरण्यादेव, नामन्त्रिते (पा ८ । १ । ७३) इति निषेधाभावादामन्त्रितं पूर्वमविद्यमानवदिति पूर्वपूर्वस्याविद्यमानवत्त्वात् सर्वेषां षाष्ठि-

। ३ । दस्रा युवाकवः सुता नासत्या वृक्तवर्हिषः ।
आयातं रुद्रवर्तनी ॥

त्वमाद्युदात्तत्वं, तद्वत् प्रकृतेऽपि, शॄ स्तॄ पॄ कटि पटि शौटिभ्य ईरन्नित्यनुवृत्तौ, बहुलवचनादन्यत्रापीत्यनेन शुभ शुम्भ दीप्तावितिधातोरीरन्प्रत्यये कृते सति नित्त्वाच्छवीरया शब्द आद्युदात्तः। धियेत्यत्र, सावेकाचः (पां ६। १। १६८) इति विभक्तिरुदात्ता। वनतमित्यत्र शपः पित्त्वात्थो-थमध्यमद्विवचनस्य लसार्वधातुकत्वाच्च, वन षन संभक्ताविति धातूदात्तत्वमेवावशिष्यते, नच, तिङ्ङतिङः (पां ८। १। २८) इति निघातः, पूर्वामन्त्रितस्याविद्यमानत्वेन पदादित्वात्। गिरः, सुपोऽनुदात्तत्वे प्रातिपदिकस्वरः शिष्यते ॥ २॥

तृतीयामृचमाह दस्रा युवाकव इति। अत्राश्विनेत्यनुवर्त्तते, हे अश्विनौ, आयातं अस्मिन् कर्म्मण्यागच्छतं, किमर्थमिति तदुच्यते, सुता युष्मदर्थं सोमा अभिषुतास्तान् स्वीकर्त्तुमिति शेषः। कीदृशावश्विनौ दस्रा शत्रूणामुपक्षयितारौ, यद्वा देववैद्यत्वेन देवानामुपक्षयितारौ, अश्विनौ वै देवानां भिषजाविति श्रुतेः। पुनः कीदृशौ, नासत्या असत्यमनृतभाषणं तद्रहितौ। अत्र यास्कः, सत्यावेव नासत्याविति उर्णनाभः। सत्यस्य प्रणेतारावित्याग्रायण इति। रुद्रवर्त्तनी, रुद्रशब्दस्य रोदनं प्रवृत्तिनिमित्तं, यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति तैत्तिरीयाः। यद्रोदयन्ति तस्माद्रुद्रा इति वाजसनेयिनः। रुद्राणां शत्रुरोदनकारिणां शूरभटानां वर्त्तनिर्मार्गो धाटीरूपो ययोस्तौ रुद्रवर्त्तनी, यथा धाटीमुखेन शत्रून् रोदयन्ति तद्वदेतावित्यर्थः। युवाकव इति अभिषुतसोमानां विशेषणं, वसतीवरीभिरेकधनाभिरद्भिर्मिश्रिता इत्यर्थः। वृक्तानि मूलवर्जितानि वर्हींषि आस्तरणरूपाणि येषां सोमानां ते वृक्तवर्हिषः। यदा भरता इत्यादिष्वृक्षु ऋत्विङ्नामसु वृक्तवर्हिष इति पठितं, तदानीं तृतीयार्थे प्रथमा, ऋत्विग्भिरभिषुता इत्यन्वयः। दस्रा, आमन्त्रितस्य च (पां ६। १। १५८) इत्याद्युदात्तः, युवाकवः, यु मिश्रणे, युवन्ति मिश्रीभवन्ति वसतीवरीप्रभृतिभिः अयवाद्रव्यैरिति युवाकवः, कटिकुषादिष्वगणितस्यापि यौतेर्बहुलग्रहणात् काकुप्रत्ययः, तस्य कित्त्वेन गुणाभावादुवङादेशः, प्रत्ययस्वरेणाकार उदात्तः। न विद्यते असत्यमनयोरिति नासत्यौ, नभ्रा-

॥ तृचः २ ॥

१ १ १ इन्द्रायाहि चित्रभानो सुता इमे त्वायवः ।
अण्वीभिस्तना पूतासः ॥

न्नपान्नवेदानासत्या (पा ६।३।७५।) इत्यादिना प्रकृतिवद्भावान्न लोपाभावः, पादादित्वेनानिघातादामन्त्रिताद्युदात्तत्वं । वृक्तबर्हिषः, वृक्तं मुनिर्वर्जितं बर्हिरास्तीर्णं येषां सोमानां ते वृक्तबर्हिषः पूर्वपदप्रकृतिस्वरेण क्तप्रत्ययस्वर एव शिष्यते। आ इत्यत्र उपसर्गाश्चाभिवर्जमित्युदात्तः। रुद्रवर्तनी, आमन्त्रितस्य च (पा ८।१।१९।) इत्यामन्त्रितनिघातः ॥ ३ ॥

ऐन्द्रे तृचे प्रथमामृचमाह इन्द्रायाहीति। चित्रभानो विचित्रदीप्त इन्द्र अस्मिन् कर्मणि आयाहि आगच्छ, सुता अभिषुता इमे सोमाः त्वायवस्त्वां कामयमाना वर्त्तन्ते, अण्वीभिः, अथर्य्युव इत्यादिषु द्वाविंशतिसङ्ख्याकेषु अङ्गुलिनामसु अण्वीति पठितं, ऋत्विजामङ्गुलीभिः सुता इत्यन्वयः, किञ्च एते सोमास्तना नित्यं पूतासः शुद्धाः, दशापवित्रेण शोधितत्वात्। इन्द्रशब्दं यास्को बहुधा निर्वक्ति, इन्द्र इरां दृणातीति वा इरां ददातीति वा इरां दधातीति वा इरां दारयतीति वा इरां धारयतीति वा इन्दवे द्रवत इति वा इन्दौ रमत इति वा इन्धे भूतानीति वा, तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते। इदं करणादित्याग्रायणः। इदं दर्शनादित्यौपमन्यवः। इन्दतेर्वैश्वर्य्यकर्म्मणः इन्दञ्छत्रूणां दारयिता वा द्रावयिता वा दरयिता वा यज्वनामिति। अस्यायमर्थः। दॄ विदारणे इति धातुः, इरामन्नमुद्दिश्य तन्निष्पादकजलसिद्ध्यर्थं दृणाति मेघं विदारयतीति इन्द्रः। डुदाञ् दाने इति धातुः इरामन्नं वृष्टिनिष्पादनेन ददातीति इन्द्रः। धञ् पोषणार्थः इरामन्नं तन्निष्कारणं सस्यं दधाति जलप्रदानेन पुष्णातीति इन्द्रः। इरामुत्पादयितुः कर्षकमुखेन भूमिमवदारयतीति इन्द्रः। पूर्वोक्तपोषणमुखेन इरां धारयतीति विनाशराहित्येन स्थापयतीति इन्द्रः। इन्दुः सोमवल्लीरसस्तदर्थं यागभूमौ द्रवति धावतीति इन्द्रः। इन्दौ यथोक्ते सोमे रमते क्रीडतीति इन्द्रः। ञिइन्धी दीप्ताविति धातुः, भूतानि प्राणिदेहानिन्धे जीवचैतन्यरूपेणान्तः प्रविश्य दीपयतीति इन्द्रः । एतदेवाभिप्रेत्य वाजसनेयिनमाममनन्ति, इन्धो ह वै नामैषः, योऽयं दक्षिणेऽक्षन् पुरुष

न्धं वा एतमिन्द्रं सन्तं तमिन्द्रमित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष इति । तद्यदित्यादिकं ब्राह्मणान्तरवाक्यं, तत्रेन्द्र-विषये निर्वचनमुच्यत इति शेषः । यद्यस्मात् कारणादेनं परमात्मरूप-मिन्द्रदेवं प्राणैर्वाक्चक्षुरादीन्द्रियैः प्राणापानादिवायुभिश्च सहितं समैन्धत, उपासका ध्यानेन सम्यक्प्रकाशितवन्तस्तस्मात् कारणात् इन्द्नाम सम्पन्नं, अस्मिन् पक्षे इन्ध्यते दीप्यत इति कर्म्मणि व्युत्पत्तिः । आग्रायणनामको मुनिरिदंकरणादिन्द्र इति निर्वचनं मन्यते । इन्द्रो हि परमात्मरूपेणेदं जगत् करोतीति, औपमन्यवनामको मुनिरिदन्दर्शना-दिन्द्र इतिनिर्वचनमाह । इदमितीदमित्यपरोक्षमुच्यते, विवेकेन हि परमात्मानमपरोक्षेण पश्यति । एतदेवाभिप्रेत्यारण्यकाण्डे समाम्नायते, स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्शमिति, तस्मादिदंद्रो नामेदं द्रोह वै नाम तमिदं द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इवहि देवा इति । इदि परमैश्वर्य्ये इति धातुः, स्वमायया जगद्रूपत्वं परमैश्वर्य्यं तद्योगादिन्द्रः, अनेनाभिप्रायेण श्रूयते इन्द्रो मायाभिः पुरुरूप ईयत इति । इनशब्दस्येश्वरवाचकस्याकारलोपे सति नकारान्तं इन्पदं भवति । दृभय इतिधातुः, सच परमेश्वरः, शत्रूणां दारयिता भीषयि-तेति इन्द्रः । द्रुगताविति धातुः, शत्रूणां द्रावयिता पलायनं प्रापयिता इतीन्द्रः । यज्वनां यागानुष्ठायिनामादरयिता भयस्य परिहर्त्ता, एवमे-तानि निर्वचनानि द्रष्टव्यानि । इन्द्र इत्यत्र आमन्त्रिताद्युदात्तत्वं । आ इत्यत्र निपातत्वेनाद्युदात्तः । चित्रभानो, पदात्परत्वादामन्त्रित निघा-तः । त्वामिच्छन्तीत्यर्थे युष्मच्छब्दात्, सुप आत्मनः क्यच् (पां ३ । १ । ८) इति क्यच् । प्रत्ययोत्तरपदयोश्च (पां ७ । २ । ९८ ।) इति मपर्य्यन्तस्य त्वा-देशः, क्याच्छन्दसि (पां ३ । २ । १७० ।) इति क्यजन्तादुप्रत्ययः । त्वयव इति प्राप्ते, युष्मदस्मदोरनादेशे (पां ७ । २ । ८६ ।) इति अविभक्तावपि हलादौ व्यत्ययेनात्वं, उकारः प्रत्ययस्वरेणाद्युदात्तः । अणुशब्दः सौक्ष्मवा-चकस्तद्योगात्प्रकृत अङ्गुलीषु वर्त्तते, वोतो गुणवचनात् (पां ४ । १ । ४४ ।) इति ङीषि प्राप्ते व्यत्ययेन ङीन्, नित्त्वादाद्युदात्तः । तना इत्ययं निपातो नित्यमित्यर्थः, निपातत्वादाद्युदात्तः । पूतासः, आज्जसेरसुक् (पां ७ । १ । ५० ।) इत्यसुक् प्रत्ययः ॥ १ ॥

। २ । इन्द्रायाहि धियेषितो विप्रजूतः सुतावतः ।
उप ब्रह्माणि वाघतः ॥

। ३ । इन्द्रायाहि तूतुजान उप ब्रह्माणि हरिवः ।
सुते दधिष्व नश्चनः ॥ ५ ॥

द्वितीयामृचमाह इन्द्रायाहि धियेति। हे इन्द्र, त्वमायाहि अस्मिन् कर्म्मण्यागच्छ, किमर्थं वाघतऋत्विजो ब्रह्माणि वेदरूपाणि स्तोत्राणि उपैतुं। कीदृशस्त्वं धियास्मदीयया प्रज्ञया इषितः प्राप्तः, अस्मद्भक्त्या प्रेरित इत्यर्थः। विप्रजूतः, यथा यजमानभक्त्या प्रेरितस्तथान्यैरपि विप्रैर्मेधाविभिरृत्विग्भिः प्रेरितः। कीदृशस्य वाघतः, सुतावतः अभिषुतसोमयुक्तस्य। केतइत्यादिषु एकादशसु प्रज्ञानामसु धीरिति पठितं। चतुर्विंशतिसङ्ख्यकेषु मेधाविनामसु विप्रोधीरइति पठितं। भरताइत्यष्टसु ऋत्विङ्नामसु वाघत इति पठितं। इषित इत्यत्र इषगतावित्यस्मान्निष्ठायामिडागमः, आगमा अनुदात्ता इति इटोऽनुदात्तत्वात् क्तस्वरः शिष्यते। टुवप्बीजतन्तुसन्तान इति धातोः, ऋज्रेन्द्राग्रवज्रविप्रेत्यादिना रन् प्रत्ययान्तो विप्रशब्दो निपातितः। निपातनादुपधाया इकारो लघूपधगुणाभावश्च, नित्त्वादाद्युदात्तः, तैर्जूतः प्राप्तः। ज्वर इति सौत्रोधातुर्गत्यर्थः, श्र्युकः किति ( पां ७ । २ । ११ । ) इति इट्प्रतिषेधः, तृतीया कर्म्मणि ( पां ६ । २ । ४८ । ) इति पूर्वपदप्रकृतिस्वरत्वं। सुतावतइत्यत्र छान्दसं दीर्घत्वं, मतुपउदात्तत्वात् क्तप्रत्ययस्वरएव शिष्यते। ब्रह्माणि, नब्विषयानिसन्तस्येत्याद्युदात्तः। वाघच्छब्द ऋत्विङ्नामसु पठितः प्रातिपदिकस्वरः ॥ २ ॥

तृतीयामृचमाह इन्द्रायाहीति। हरिशब्द इन्द्रसम्बन्धिनोरश्वयोर्नामधेयं, हरी इन्द्रस्य लोहितोऽग्नेरिति तदीयाश्वनामत्वेन पठितत्वात्। हे हरिवः, अश्वयुक्तेन्द्र, त्वं ब्रह्माण्युपैतुमायाहि। कीदृशस्त्वं तूतुजानस्त्वरमाणः, आगत्य चास्मिन् सुते सोमाभिषवयुक्ते कर्म्मणि नोऽस्मदीयं चनोऽन्नं हविर्लक्षणं दधिष्व धारय स्वीकुर्व्वित्यर्थः। तूतुजानस्तुजेर्लिटि, लिटः कानज्वा ( पां ३ । २ । १०६ । ) इति कानजादेशः, तुजादीनां दीर्घोऽभ्यासस्य ( पां ६ । १ । ७ । ) इत्यभ्यासस्य दीर्घत्वं, अभ्यस्तानामादिः ( पां ६ । १ । १८९ । ) इत्याद्युदात्तत्वं।

( ३ )

१ १ १ ओमासश्चर्षणीधृतो विश्वे देवास आगत ।
दाश्वांसो दाशुषः सुतं ॥

हरिवइत्यत्र हरयोऽस्य सन्तीत्यस्मिन्नर्थे, तदस्यास्त्यस्मिन्निति मतुप् (पां ५ । २ । ९४ ।) इति मतुप्, छन्दसीरः (पां ८ । २ । १५ ।) इति मकारस्य वत्वं, सम्बुद्धौ, उगिदचां (पां ७ । १ । ७० ।) इति नुम्, संयोगान्तलोपो, नकारस्य, मतुवसोरुसम्बुधौ छन्दसि (पां ८ । ३ । १ ।) इति नकारस्य रुत्वं, आष्टमिको निघातः । ब्रह्माणीत्यस्य हरिवइत्यनेनासामर्थ्यात्, समर्थः पदविधिः (पां २ । १ । १ ।) इति नियमात्, सुबामन्त्रिते पराङ्गवत्स्वरे (पां २ । १ । २ ।) इति पराङ्गवद्भावेनामन्त्रितनिघाताभावादाद्युदात्तत्वे सति, उपेत्यकारस्य, नोदात्तः स्वरितोदय (पां ८ । ४ । ६७ ।) इति स्वरितो न सन्नतरः । दधिष्वेत्यत्र दधातेर्लोटि थास्, थासः से (पां ३ । ४ । ८० ।) इति सेआदेशः, सवाभ्यां वामौ (पां ३ । ४ । ९१ । ) इति एकारस्य वादेशः, छन्दस्युभयथा (पां ३ । ४ । ११७ ।) इति सार्वधातुकार्द्धधातुकसंज्ञयोः सत्योः सार्वधातुकत्वेन शपि, तस्य, श्लौ (पां ६ । १ । १० ।) इति द्विर्भावः, आर्द्धधातुकत्वेनेडागमस्य, आतो लोप इटि च (पां ६ । ४ । ६४ ।) इत्याकारलोपः । चनः, चायेरन्ने ह्रस्वश्चेत्यसुन्नन्तस्वकाराद्गडागमे यलोपः ॥ ३ ॥ इति प्रथमस्य प्रथमे पञ्चमो वर्गः ॥ ५ ॥

वैश्वदेवतृचं प्रथमामृचमाह ओमासइति । हे विश्वेदेवास, एतन्नामका देवविशेषाः दाशुषो हविर्दत्तवतो यजमानस्य सुतं अभिषुतं सोमं प्रति आगत आगच्छत, ते च देवा ओमासो रक्षकाः । चर्षणीधृतो मनुष्याणां धारकाः । दाश्वांसः फलस्य दातारः । मनुष्या इत्यादिषु पञ्चविंशतिसङ्ख्याकेषु मनुष्यनामसु चर्षणीशब्दः पठितः । अश्विनावित्यादिष्वेकत्रिंशत्सङ्ख्याकेषु देवविशेषनामसु विश्वेदेवाः साध्या इति पठितं । एतामृचं यास्क एवं व्याख्यातवान्, अवितारो वावनीया वा मनुष्याधृतः सर्वे च देवा इहागच्छत, दत्तवन्तो दत्तवतः सुतमिति । तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते, यत्तु किञ्चिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिरिति । अत्र विश्वशब्दः सर्वशब्दपर्य्यायइति यास्कस्य मतं, तदेव

विशेषस्यैवासाधारणं लिङ्गमिति शाकपूणेर्मतं । अवन्ता।योमासो देवाः, मन्निन्यनुवृत्तौ, अवि सिवि सि षु शुभ्यः किदिति मन्प्रत्ययः, ज्वरत्वरस्रिव्यविमवामुपधायाश्च ( पां ६ । ४ । २० । ) इत्यूठ्, मनः कित्त्वेऽपि बाहुलकाद्गुणः, आज्जसेरसुक् ( पां ७ । १ । ५० । ) इति जसेरसुगागमः, आमन्त्रिताद्युदात्तत्वं। चर्षणयो मनुष्यास्तान् कृषि-दानादिना धारयन्तीति चर्षणीधृतो देवाः, पूर्वस्यामन्त्रितस्य सामान्यवचनस्य, विभाषितं विशेषवचने बहुवचनं ( पां ८ । १ । ७४ । ) इत्यविद्यमानवत्त्वप्रतिषेधादपादादित्वेन निघातः । नन्वत एव विद्यमानत्वात्, सुबामन्त्रिते इति पराङ्गवत्त्वेनैकपदीभावात् पादपरत्वेन कथं निघात इति चेन्न, तत्करणं स्वाश्रयमपि यथा स्यादिति वचनात्, पदभेदप्रयुक्तस्य निघातस्याऽप्युपपत्तेः, एकपद्येऽप्याद्युदात्तत्वे, अनुदात्तं पदमेकवर्जमिति सुतरामेव निघातो भविष्यति, इत्थमेव तर्हि द्रवत्पाणी शुभस्पती इत्यत्रापि पराङ्गवत्त्वेनैकपद्यादुत्तरस्य विशेषनिघातप्रसङ्ग इति चेन्न, तत्र पराङ्गवद्भावस्य परेणामन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानवद्भावेन बाधितत्वात्, इह पुनर्विभाषितं विशेषवचने बहुवचनमित्यविद्यमानवत्त्वनिषेधात् पूर्वस्याप्यामन्त्रितस्य विद्यमानवत्त्वात् पराङ्गवत्त्वं स्वीकृतमिति वैषम्यं। विश्वे, पादादित्वादाद्युदात्तः, गणदेवतावचनश्चात्र विश्वशब्दो न सर्वशब्दपर्याय इति विशेष्यपरतया सामान्यवचनत्वादोमास इत्यनेन न सामानाधिकरण्यं, सामानाधिकरण्ये हि पूर्वस्य पादस्य पराङ्गवद्भावे सति मित्रावरुणावृतावृधेत्यादाविवात्राप्यामन्त्रिताद्युदात्तता न स्यात्, विश्व इत्यस्य विशेषणं देवास इति, दीव्यन्तीति देवाः प्रकाशवन्तः, नन्ववयवप्रसिद्धेः समुदायस्य प्रसिद्धिर्बलीयसीति रूढएवार्थो देवशब्दस्य ग्राह्यो न यौगिकः, यौगिकत्वे हि अवयवार्थानुसन्धानव्यवधानेन प्रतिपत्तिर्विच्छिन्ना स्यात्, समुदायप्रसिद्धौ तु न विक्षेप इति चेन्न, समुदायप्रसिद्धौ हि देवशब्दस्य सामान्यपरतया विशेषवचनत्वाभावात्. विभाषितं विशेषवचने बहुवचनमित्यनेनासिद्धत्वाद्विश्व इत्यस्याविद्यमानवत्त्वेन शुभस्पतीतिपदवद्देवा इत्यस्याप्याद्युदात्तत्वं स्यात्, स्वरानुसारेणच रूढित्यागेनापि देवशब्दस्य योगस्वीकारो युक्त एव। आगत आगच्छत, बहुलं छन्दसीति शपो लुकि सति, अनुदात्तोपदेश ( पां ६ । ४ । ३७ । ) इत्यादिना मकारलोपः । आङः पदात् परत्वेन निघातः । दाश्वांसः, दाशृदान इत्यस्य क्वसौ, दाश्वान्

१ २ १ विश्वे देवासो अप्तुरः सुतमागन्तु तूर्णयः।
उस्रा इव स्वसराणि॥

साह्वान् मीढ्वांश्च ( पां ६।१।१२। ) इति निपातनात् क्वादिनियमप्राप्त इडागमो द्विर्वचनञ्च न भवति, प्रत्ययस्वरेण क्वसोरुदात्तत्वं, दाश्वषइत्यत्र, वसोः सम्प्रसारणं ( पां ६।४।१३१। इति सम्प्रसारणं, सम्प्रसारणाच्च ( पां ६।१।१०८।) इति पूर्वरूपत्वं, शासिवसिघसीनाञ्च ( पां ८।३।६०।) इति षत्वं॥१॥

द्वितीयामृचमाह विश्वेदेवासइति। विश्वेदेवास एतन्नामका गणरूपा देवविशेषाः सुतं सोममागन्तु आगच्छन्तु। कीदृशाः अप्तुरः तत्तत्काले वृष्टिप्रदा इत्यर्थः। तूर्णयस्त्वरायुक्ता यजमानमनुग्रहीतुमालस्यरहिता इत्यर्थः। विश्वेषां देवानां सोमं प्रत्यागमने उस्रा इत्यादिषु दृष्टान्तः, उस्राः सूर्य्यरश्मयः स्वसराण्यहानि प्रत्यालस्यरहिता यथा गच्छन्ति तद्वत्। खेदयइत्यादिषु पञ्चदशसु रश्मिनामसु उस्रावसव इति पठितं। वस्तोरित्यादिषु द्वादशस्वहर्नामसु स्वसराणि घ्रंस घर्म्म इति पठितं। तच्च पदं यास्केन व्याख्यातं, स्वसराण्यहानि भवन्ति स्वयं सारीण्यपि वा स्वरादित्यो भवति स एतानि सारयति उस्रा इव स्वसराणीत्यपि निगमो भवतीति। देवासः, पचाद्यजन्तश्चित्त्वादन्तोदात्तः। अप्तुरः, तुरत्वरणे शुविकरणी, तुरति त्वरयतीत्यर्थ, क्विप्च ( पां ३।२।७६।) इति क्विप्, गतिकारकोपपदात् कृत् ( पां ६।२।१३९) इति उत्तरपदप्रकृतिस्वरत्वं। आगन्तु, आगच्छन्त्वित्यर्थे व्यत्ययेन मध्यमपुरुषबहुवचनं, बहुलं छन्दसीति शपो लुक् तस्य, तप्तनप्तनथनाश्च ( पां ७।१।४५।) इत्यवादेशेऽपिदिति निषेधादङित्वादनुनासिकलोपाभावः, तिङ्ङतिङ इति निघातः। तूर्णयः, ञित्वरासम्भ्रमइति धातोस्त्वरन्तइति तूर्णयः, निरित्यनुवृत्तौ, वहि श्रिश्रुयुद्रुग्लाहात्वरिभ्यो निदिति निप्रत्ययः, नित्त्वादाद्युदात्तः। उस्राइवेत्यत्र इवेन विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरत्वञ्चेति समासे पूर्वपदप्रकृतिस्वरत्वं नित्यं। सरतीति सरः सूर्य्यः, पचाद्यच्, स्वः सरो येषान्तानि स्वसराणि, बहुव्रीहौ प्रकृत्या पूर्वपदं ( पां ६।२।१।) इति स्वर्शब्द आद्युदात्तः॥२॥

१ ३ १ विश्वे देवासो अस्रिध एहिमायासो अद्रुहः ।
मेधं जुषन्त वह्नयः ॥

( ४ )

१ १ १ पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ॥

तृतीयामृचमाह विश्वेदेवासइति। विश्वे देवास एतन्नामका देवविशेषा मेधं हविर्यज्ञसम्बन्धं जुषन्तसेवन्तां। कीदृशास्ते अस्रिधः क्षयरहिताः शोषरहिता वा। एहिमायासः सर्वतोव्याप्तप्रज्ञाः, यद्वा सौचीकमग्निमप्सु प्रविष्टमेहि मायासीरिति यदवोचत् तदनुकारणहेतुकोऽयं विश्वेषां देवानां व्यपदेश एहिमायास इति। अद्रुहो द्रोहरहिताः। वह्नयो वोढारः, धनानां प्रापयितारः। स्रिधः क्षयार्थस्य शोषणार्थस्य वा सम्पदादिभ्यो भावे क्विपि नञा बहुव्रीहिः, पूर्वपदप्रकृतिस्वरं बाधित्वा, नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं। एहिमायासः, ईह चेष्टायां, आसमन्तादीहत इत्येहि, इन्निति सर्वधातुसाधारण इन्प्रत्यये नित्त्वादाद्युदात्तः, एहिर्माया प्रज्ञा येषामिति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं, अथवा आङ उदात्तादुत्तरस्य एहीतिलोण्मध्यमैकवचनस्य, तिङ्ङतिङ इति निघाते, एकादेश उदात्तेनोदात्तः (पां ८।२।५) इत्येकार उदात्तः, एहीत्येतत् पदयुक्तं मायासीत्यत्र मायेत्यक्षरद्वयं येषां ते एहिमायासः, पूर्वपदप्रकृतिस्वरः। अद्रुहः, द्रुह जिघांसायां, सम्पदादित्वाद्भावे क्विपि बहुव्रीहौ, नञ्सुभ्यां (पां ६।२।१७२) इत्युत्तरपदान्तोदात्तत्वं। मेधं, मेधृ सङ्गमे च, मेध्यते देवैः संगम्यत इति मेधं हविः, कर्म्मणि घञ्, ञित्त्वादाद्युदात्तः। जुषन्त, सेवन्तामित्यर्थे, छन्दसि लुङ्लङ्लिटः ( पां ३।४।६।) इति धातुसम्बन्धे लङ्। एत उक्तरूपा विश्वेदेवा अतो जुषन्तेति दुहादिधात्वर्थसम्बन्धात्, बहुलं छन्दस्यमाङ्योगेऽपि ( पां ६।४।७५।) इत्यडागमाभावः। वह्नयः, निरित्यनुवृत्तौ, वहिश्रीत्यादिना विहितस्य नित्प्रत्ययस्य नित्त्वादाद्युदात्तत्वं ॥ १ ॥

सारस्वते तृचे या प्रथमा साऽन्वारम्भणीयेष्टौ सरस्वत्याः पुरोनुवाक्या, तथा दर्शपूर्णमासावारभ्यमाण इत्यस्मिन् खण्डे पावकानः सरस्वती पावी-

१ २ १ चोदयित्री सूनृतानां चेतन्ती सुमतीनां ।
यज्ञं दधे सरस्वती ॥

एवी कन्या चित्रापूरिति सूचितं, तामेतामृचमाह पावका न इति । सरस्वती देवी वाजेभिर्हविर्लक्षणैरन्नैर्निमित्तभूतैः, यद्वा यजमानेभ्यो दातव्यैरन्नैर्निमित्तभूतैर्नोऽस्मदीयं यज्ञं वष्टु कामयतां, कामयित्वा च निर्वहत्वित्यर्थः । तथाचारण्यकाण्डे श्रुत्यैवं व्याख्यातं यज्ञं वष्टिति यदाह यज्ञं वहत्वित्येव तदाहेति । कीदृशी सरस्वती पावका शोधयित्री । वाजिनीवती अन्नवत्क्रियावती । धियावसुः कर्म्मप्राप्यधननिमित्तभूता । वाग्देवतायास्तथाविधधननिमित्तत्वमारण्यकाण्डे श्रुत्या व्याख्यातं, यज्ञं वष्टु धियावसुरिति वाग्वै धियावसुरिति । श्येनः सोम इत्यादिषु षट्त्रिंशत्सङ्ख्याकेषु देवताविशेषवाचिषु पदेषु सरमा सरस्वतीति पठितं । एतामृचं यास्क एवं व्याचष्टे, पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्म्मवसुरिति । पवनं पावः शुद्धिस्तां कायतीति पावका, कै गै रै शब्दइति धातोः, आतोऽनुपसर्गे कः ( पां ३ । २ । ३ । ) इति क प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वेनोदात्तत्वं, यद्वा पुनातीत्यर्थे ण्वुलि कृते, प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ( पां ७ । ३ । ४४ । ) इतीत्वस्याभावोऽन्तोदात्तत्वं छान्दसं द्रष्टव्यं । सरःशब्दः सर्त्तेरसुन्नन्तत्वादाद्युदात्तः, मतुप्ङीपोः पित्त्वादनुदात्तत्वं । वाजेभिः, वाजशब्दो वृषादित्वादाद्युदात्तः, अद्यवत्कृत्वादाकृतिगणः, वाजोऽन्नमास्विति वाजिन्यः क्रियाः, अतइनिठनौ ( ५ । २ । ११५ । ) इति इनिप्रत्ययः, ताः क्रिया यस्याः सन्ति सा वाजिनीवती, छन्दसीरः ( पां ८ । २ । १५ । ) इति मतुपो वत्त्वं, मतुप्ङीपोः पित्त्वेनानुदात्तत्वमेव शिष्यते । यज्ञं, यज याच यत विच्छ प्रच्छ ( पां ३ । ३ । ९० । ) इत्यादिना नङ् प्रत्ययस्वरेणान्तोदात्तः । वष्टु, वशकान्तौ, कान्तिरभिलाषः, अदिप्रभृतिभ्यः शपः ( पां २ । ४ । ७२ । ) इति शपो लुक्, निघातः । धिया कर्म्मणा वसु यस्याः सकाशाद्भवति सा धियावसुः, सावेकाचः ( पां ६ । १ । १६८ । ) इति विभक्तिरुदात्ता, बहुव्रीहौ, प्रकृत्या पूर्वपदं ( पां ६ । २ । १ । ) इति विभक्तिस्वर एव शिष्यते, छान्दसस्तृतीयाया अलुक् ॥ १ ॥

द्वितीयामृचमाह चोदयित्रीति । या सरस्वती, सेयमिमं यज्ञं

१ ३ १ महो अर्णः सरस्वती प्रचेतयति केतुना ।
धियो विश्वा विराजति ॥ ६ ॥

दधे धारितवती । कीदृशी, सूनृतानां प्रियाणां सत्यवाक्यानां चोदयित्री प्रेरयित्री । सुमतीनां शोभनबुद्धियुक्तानामनुष्ठातॄणां चेतन्ती तदीयमनुष्ठेयं ज्ञापयन्ती । चोदयित्री, चुद् प्रेरणे ण्यन्तात्तृच्, चित्त्वादन्तोदात्तः, ऋन्नेभ्यो ङीप् (पां ४ । १ । ५ ।) इति ङीप्, तस्य, उदात्तयणो हल्पूर्वात् (पां ६ । १ । १७४ ।) इत्युदात्तत्वं । सूनृतानां, ऊन् परिहाण इत्यतः, क्विप् च (पां ३ । २ । ७५ ) इति क्विपि, सु सुतरामूनयत्यप्रियमिति सून् इति प्रियमुच्यते । तच्च तदृतं सत्यञ्चेति सूनृतं, परादिश्छन्दसि बहुलं (पां ६ । २ । १९९ ।) इत्युत्तरपदाद्युदात्तत्वं । चेतन्ती, चिती संज्ञाने अत्र शपो ङीपश्च पित्त्वादनुदात्तत्वं, शतुश्चादुपदेशाल्लसार्वधातुकस्वरेणानुदात्तत्वं धात्वन्तरस्वर एव शिष्यते । सुमतिशब्दस्य मतुपि ह्रस्वत्वात्, नामन्यतरस्यां (पां ६ । १ । १७७ ।) इति विभक्तेरुदात्तत्वं ॥ २ ॥

तृतीयामृचमाह महो अर्ण इति । द्विविधा हि सरस्वती विग्रहवद्देवता, नदीरूपा च, तत्र पूर्वाभ्यामृग्भ्यां विग्रहवती प्रतिपादिता, अनया तु नदीरूपा प्रतिपाद्यते, तादृशी सरस्वती केतुना कर्म्मणा प्रवाहरूपेण महो अर्णः प्रभूतमुदकं प्रचेतयति प्रकर्षेण ज्ञापयति । किञ्च स्वकीयेन देवतारूपेण विश्वा धियः सर्वाण्यनुष्ठातृप्रज्ञानानि विराजति विशेषेण दीपयति, अनुष्ठानविषया बुद्धीः सर्वदोत्पादयतीत्यर्थः । सरस्वत्या द्विरूपत्वं यास्को दर्शयति, तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्तीति । एकशतसङ्ख्यकेषूदकनामस्वर्णः क्षोद इति पठितं । एतामृचं यास्को व्याचष्टे, महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्म्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभिविराजतीति । महो अर्णः, महदिति तकारस्य व्यत्ययेन सकारस्तस्य रुत्वोत्वगुणाः, प्रातिपदिकस्वरेणान्तोदात्तः, एङः पदान्तादति (पां ६ । १ । १०९ ।) इति पूर्वरूपे प्राप्ते, प्रकृत्यान्तः पादमव्यपरे (पां ६ । १ । ११५ ।) इति प्रकृतिभावः, उदके नुट् चेत्यसुनप्रत्ययो नुडागमश्च । केतुना प्रातिपदिकस्वरेणान्तोदात्तः । विश्वाः, विश्वशब्दः क्वन्प्रत्ययान्त आद्युदात्तः । इति प्रथमस्य प्रथमे षष्ठो वर्गः ॥ प्रथमोऽनुवाकः समाप्तः ॥

## द्वितीयानुवाकः ।

### चतुर्थसूक्तं ।

१ १ १ सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
जुहूमसि द्यवि द्यवि ॥

प्रथमे मण्डले द्वितीयानुवाके चत्वारि सूक्तानि, तेषु सुरूपेत्यादिकं दशर्चं सूक्तं, सुरूपकृत्नुं दशेत्यनुक्रान्तत्वात्, पूर्ववन्मधुच्छन्दसो गायत्रस्य चानुवृत्तेस्तएव ऋषिच्छन्दसी, इन्द्र एह्येति चतुर्थ्यामृचि लिङ्गदर्शनादिन्द्रो देवता। अभिप्लवषडहे ब्राह्मणाच्छंसिनः प्रातःसवने स्तोमवृद्धावावापार्थानि सुरूपकृत्नुमूतय इत्यादीनि षट् सूक्तानि। सूचितञ्च अभिप्लवएषाहानीतिखण्डे ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति षट् सूक्तानीति। आद्यानि त्रीणि सूक्तानि महाव्रते निष्केवल्ये औष्णिहतृचाशीतौ शस्तव्यानि। उक्तञ्च शौनकेन सुरूपकृत्नुमूतय इति त्रीण्येन्द्रसानसिं रयिमिति सूक्ते इति, चतुर्विंशेऽहनि माध्यन्दिने सवने ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति वैकल्पिकस्तोत्रियस्तृचः। होत्रकाणामितिखण्डे मदे मदे हि नो ददिः सुरूपकृत्नुमूतय इति सूचितत्वात्। अग्निष्टोमे वैश्वदेवशस्त्रे सुरूपकृत्नुमूतय इति धाय्या, सुरूपकृत्नुमूतये तच्चनृथमिति सूचितत्वात्, तामेतां सूक्तगतां प्रथमामृचमाह सुरूपकृत्नुमिति। सुरूपकृत्नुं शोभनरूपोपेतस्य कर्म्मणः कर्त्तारमिन्द्रमूतयेऽस्मद्रक्षार्थं द्यवि द्यवि प्रतिदिनं जुहूमसि आह्वयामः। आह्वाने दृष्टान्तः, गोदुहे गोधुगर्थं सुदुघामिव सुष्ठु दोग्ध्रीं गामिव, यथा लोके गोर्या दोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयति तद्वत्। वस्तोरित्यादिषु द्वादशसु अहर्नामसु द्यवि द्यवीति पठितं। सुरूपकृत्नुं, करोतीति कृत्नुः, कृहनिभ्यां क्नुः, कित्त्वाद्गुणाभावः, तकारोपजनश्छान्दसः, समासान्तोदात्त। ऊतये, अवतेर्धातोरुदात्त इत्यनुवृत्तौ, ऊति यूति जूति साति हेति कीर्त्तयश्च (पां ३।३।९७।) इति क्तिन्नुदात्तो निपातितः। सुष्ठुदुग्ध इति सुदुघा, दुहः कप् घश्च (पां ३।२।७०।) इति कप्प्रत्ययो हकारस्य च घकारः, कित्त्वाद्गुणाभावः, कपः पित्त्वादनुदात्तत्वे धातु-

१ २ १ उप नः सवनागहि सोमस्य सोमपाः पिब ।
गोदा इद्रेवतो मदः ॥

स्वरेणोकार उदात्तः। सुशब्देन गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव स्वरः, इवेन विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरत्वञ्चेति, इवसमासे स एव। गां दोग्धीति गोधुक्, सत्सूद्विष द्रुह दुह युज ( पां ३। २। ६१। ) इत्यादिना क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वं। जुहूमसि, ह्वयतेर्लडुत्तमपुरुषबहुवचनेन, बहुलं छन्दसि ( पां २। ४। ७६। ) इति शपः श्लुः, अभ्यस्तस्य च ( पां ६। १। ३३। ) इत्यभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात् सम्प्रसारणं, सम्प्रसारणाच्च ( पां ६। १। १०८। ) इति परपूर्वत्वं, हलः ( पां ६। ४। २। ) इति दीर्घः, ततः, श्लौ ( पां ६। १। १०। ) इति द्विर्वचनं, अभ्यासस्य ह्रस्वत्व, चुत्वजश्त्वे, इदन्तो मसि ( पां ७। १। ४६। ) इतीकारागमः, प्रत्ययस्वरेण मकारस्योदात्तत्वं। द्यवि द्यवि, द्योशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, नित्यवीप्सयोः ( पां ८। १। ४। ) इति द्विर्भावः, तस्य परमाम्रेडितं ( पां ८। १। २। ) इत्याम्रेडितं, अनुदात्तञ्च ( पां ८। १। ३। ) इति द्वितीयस्यानुदात्तत्वं ॥ १ ॥

द्वितीयामृचमाह उप न इति। हे सोमपा इन्द्र, सोमं पातुं नोऽस्मदीयानि सवनानि त्रीणि सवनानि प्रत्युप समीपे आगहि आगच्छ, आगत्य च सोमस्य सोमं पिब, रेवतो धनवतस्तव मदो हर्षो गोदा। इत् गोप्रद एव, त्वयि हृष्टे सत्यस्माभिर्गावो लभ्यन्त इत्यर्थः। उप, निपातत्वादाद्युदात्तः। सवना, सूयते सोम एष्विति सवनानि, अधिकरणे ल्युट्, सुपां सुलुगिति डादेशः, लिति ( पां ६। १। १९३। ) इति प्रत्ययात् पूर्वस्याकारस्योदात्तत्वं, गहि, बहुलं छन्दसि ( पां २। ४। ७३। ) इति शपो लुक्, छेर्ङित्वात्, अनुदात्तोपदेश ( पां ६। ४। ३७। ) इत्यादिना मकारलोपः, अतो हेः ( पां ६। ४। १०५। ) इत्याभाच्छास्त्रीये लुकि कर्त्तव्ये, असिद्धवदत्राभात् ( पां ६। ४। २२। ) इत्याभाच्छास्त्रीयो मकारलोपोऽसिद्धवद्भवति। सोमपाः, आमन्त्रितस्य च ( पां ८। १। १९। ) इति निघातः, तस्याविद्यमानवत्त्वेऽपि पूर्वापेक्षया, तिङ्ङतिङः ( पां ८। १। २८। ) इति पिबेत्यस्य निघातः। न च पूर्वस्यापि पराङ्गवद्भावेनाविद्यमानवत्त्वं, असाम-

। ३ । अथा ते अन्तमानां विद्याम सुमतीनां ।
मा नो अति ख्य आगहि ॥

र्थेन तदभावात्। गान्ददातीति गोदाः, क्विप् च (पां ८।२।७६।) इति क्विपं परमप्यसरूपं बाधित्वा प्रतिपदविधेयत्वात्, आतो मनिन् क्वनिप् वनिपश्च (पां ३।२।७४।) इति विच्, क्विपि हि, घुमास्थागापा (पां ६।४।६६।) इत्यादिना धातोराकारस्य ईत्वं स्यात्। रेवान्, रयिर्धनमस्यास्तीति मतुप्, ह्रस्वनुड्भ्यां मतुप् (पां ६।१।१७६।) इति मतुबुदात्तः, छन्दसीरः (पां ८।२।१५।) इति मस्य वत्वं, रयेर्मतौ, बहुलं छन्दसीति सम्प्रसारणपरपूर्वत्वे, गुणश्च। मदः, मदोऽनुपसर्गे (पां ३।३।६७।) इत्यप्, पित्त्वादनुदात्तः ॥ २ ॥

तृतीयामृचमाह अथा त इति। अथ सोमपानानन्तरं, हे इन्द्र, ते तवान्तमानां अतिशयेन समीपवर्त्तिनां सुमतीनां शोभनमतियुक्तानां पुरुषाणां मध्ये स्थित्वा विद्याम वयं त्वां जानीमः, यद्वा सुमतीनां शोभनबुद्धीनां कर्म्मानुष्ठानविषयाणां लाभार्थमित्यध्याहारः, बुद्धिलाभाय त्वां स्मराम इत्यर्थः। त्वमपि नोऽति माख्यः अस्मानतिक्रम्यान्येषां त्वत्स्वरूपं मा प्रकथय, किन्त्वागहि अस्मानेवागच्छ। अथ, निपात आद्युदात्तः, निपातस्य च (पां ६।३।१३६।) इति दीर्घत्वं। अन्तमानां, अतिशयेनान्तिका इत्यस्मिन्नर्थे, अतिशायने तमबिष्ठनौ (पां ५।३।५५।) इति तमप्, तमे तादेश्चेति तादिलोपः। अन्तोऽस्यास्तीत्यन्तिकः समीपः, अत इनिठनौ (पां ५।२।११५।) इति इनिः प्रत्ययः, नित्त्वादाद्युदात्तः, दूरोत्कर्षस्य ह्यवसानं नास्ति, सामीप्योत्कर्षस्य पुनर्यो यस्य समीपः सएव तस्यान्त इत्यन्तरत्वात् समीपमन्तिकमुच्यते। विद्याम, वेत्तेर्लिङि, यासुट् परस्मैपदेषूदात्तो ङिच्च (पां ३।४।१०३।) इति यासुडुदात्तः, पादादित्वात्तिङ्ङतिङ इति निघातः। सुमतीनां, मतिशब्दे क्तिन्नन्तेऽपि, मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः (पां ३।३।९६।) इतीकार उदात्तः, शोभना मतिर्येषान्ते सुमतयः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरापवादो, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तः। शोभना मतयः सुमतय इति कर्म्मधारयेऽपि अव्ययपूर्वपदप्रकृतिस्वरापवादः कृदुत्तरपदप्रकृतिस्वरेणा-

। ४ । परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितं ।
यस्ते सखिभ्य आ वरं ॥
। ५ । उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत ।
दधाना इन्द्र इद्दुवः ॥ ७ ॥

न्तोदात्तत्वेव मतौ, मतुपि कृत्वादन्तोदात्तत्वाच्च सुमतिशब्दात् परस्य नामो, नामन्यतरस्यां ( पां ६ । १ । १७७ ) इत्युदात्तत्वं । ख्यः, ख्या प्रकथन इत्यस्य लुङि सिपि, अस्यति वक्ति ख्यातिभ्योऽङ् ( पां ३ । १ । ५२ । ) इति च्लेरङादेशः, आतो लोप इटि च ( पां ६ । ४ । ६४ । ) इत्याकारलोपः, इतश्च ( पां ३ । ४ । १०० । ) इतीकारलोपोरुत्वविसर्गौ, नमाङ् योगे ( पां ६ । ४ । ७४ । ) इत्यडभावः । गहि, गमेर्बहुलं छन्दसीति शपो लुकि, हेर्ङित्त्वात्, अनुदात्तोपदेशे ( पां ६ । ४ । ३७ । ) इति मकारलोपस्य, असिद्धवदत्राभात् ( पां ६ । ४ । २२ । ) इत्यसिद्धत्वात्, अतो हेः ( पां ६ । ४ । १०५ । ) इति हेर्लुङ्न भवति ॥ ३ ॥

चतुर्थीमृचमाह परेहीति । अत्र यजमानं प्रति होता ब्रूते, हे यजमान, त्वमिन्द्रं परेहि इन्द्रस्य समीपं गच्छ, गत्वा च विपश्चितं मेधाविनं होतारमापृच्छ, असौ होता सम्यक् स्तुतवान् नवेत्येवं प्रश्नं कुरु । य इन्द्रस्ते तव यजमानस्य सखिभ्य ऋत्विग्भ्यो वरं श्रेष्ठं धनपुत्रादिकमासमन्तात् प्रयच्छतीति शेषः, तादृशमिति पूर्वत्रान्वयः । पुनरपि कीदृशं, विप्रं मेधाविनं । अस्तृतमहिंसितं । विप्रइत्यादिषु चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु विप्रविपश्चिच्छब्दौ पठितौ । विप्रं, वृषादित्वादाद्युदात्तः, अव्ययपूर्वपदप्रकृतिस्वरत्वं । इन्द्रशब्दः, ऋज्रेन्द्राग्र इत्यादिना रन् प्रत्ययान्तो नित्त्वादाद्युदात्तः । सखिभ्यः, समाने ख्यः सचोदात्त इति समाने उपपदे ख्यातेरिन्, डिदित्यनुवृत्तेस्तस्य डित्त्वाट्टिलोपश्च, तत्सन्नियोगेन यलोपः, उपपदस्योदात्तत्वं, समानस्य, छन्दस्यमूर्धप्रभृत्युदर्केषु ( पां ६ । ३ । ४८ । ) इति सभावः, अतः सखिशब्द आद्युदात्तः । व्रियत इति वरः, ग्रहवृदृनिश्चिगमश्च ( पां ३ । ३ । ५८ । ) इत्यप्, पित्त्वाद्धातुस्वर एव ॥ ४ ॥

पञ्चमीमृचमाह उतब्रुवन्त्विति । नोऽस्माकं सम्बन्धिन ऋत्विज इति शेषः, ते ब्रुवन्तु इन्द्रं स्तुवन्तु, उत अपि च, हे निदः, निन्दि-

१ ६ १ उत नः सुभगां अरिर्वोचेयुर्दस्म कृष्टयः ।
स्यामेदिन्द्रस्य शर्म्मणि ॥

तारः पुरुषा निरारत इतो देशान्निर्गच्छत, अन्यतश्चिदन्यस्मादपि देशान्निर्गच्छत। कीदृशा ऋत्विज इन्द्रवः परिचर्य्यान्दधानाः कुर्वाणाः। इच्छब्दोऽवधारणे सर्वदा परिचर्य्यां कुर्वन्त एव तिष्ठन्त्वित्यर्थः। निन्दन्तीति निदः, निदिकुत्सायां क्विप्, नुमभावश्छान्दसः, सुपोऽनुदात्तत्वाद्धातुस्वरः, आमन्त्रितत्वेऽपि वाक्यान्तरत्वेन स्ववाक्यगतपदादपरत्वान्न निघात इत्याद्युदात्तत्वमेव। अन्यतः, लिति (पां ६।१।१९३।) इति प्रत्ययात् पूर्वस्योदात्तत्वं। चिदित्यपि शब्दार्थे, तेन न केवलमितः, इतो निर्गत्यान्यतोऽपि निर्गच्छतेति गम्यते, स एव धात्वर्थयोः सम्बन्धो लुङा द्योत्यते, सहि धातुसम्बन्धाधिकारे विधीयते। आरत, ऋर्त्तः, छन्दसि लुङ् लङ् लिटः (पां ३।४।६) इति लोडर्थे लुङ्, मध्यमपुरुषबहुवचनस्य तादेशः, सर्त्तिशास्त्यर्त्तिभ्यश्च (पां ३।१।५६।) इति च्लेरङादेशः, ऋदृशोऽङि गुणः (पां ७।४।१६।) इति गुणः, आडागमः। दधानाः, शानच श्चित्त्वात् प्राप्तमन्तोदात्तत्वं बाधित्वा परत्वात्, अभ्यस्तानामादिः (पां ६।४।१८९।) इत्याद्युदात्तत्वं। इन्द्रवः, नब्विषयस्यानिसन्तस्येत्याद्युदात्तः॥ ५॥ इति प्रथमस्य प्रथमे सप्तमो वर्गः॥ ७॥

सुरूपेति सूक्ते षष्ठीमृचमाह उत न इति। हे दस्म शत्रूणामुपक्षयितरिन्द्र त्वदनुग्रहात् अरिरत शत्रवोऽपि नोऽस्मान् सुभगान् शोभनधनोपेतान् वोचेयुरुच्यासुः, कृष्टयो मनुष्या अस्मिन्नमित्रभूता वदन्तीति किमुक्तव्यमितिशेषः। ततः सम्पन्ना वयमिन्द्रस्य शर्म्मणि इन्द्रप्रसादलब्धे सुखे स्यामेत् भवेमेव। मघमित्यादिष्वष्टाविंशतिसङ्ख्याकेषु धननामसु कृष्ट्य इति पठितं। उत, एवमादीनामन्त इत्यन्तोदात्तः। सुभगान्, भगशब्दस्य क्रत्वादिषु पाठात्, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तत्वं बाधित्वा, क्रत्वादयश्च (पां ६।२।११८।) इति उत्तरपदाद्युदात्तत्वं, संहितायां, दीर्घादटिसमानपादे (पां ८।३।९।) इति नकारस्य रुत्वं, भो भगो अघो अपूर्वस्य योऽशि (पां ८।३।१७।) इति यत्वं, तस्य, लोपः शाकल्यस्य (पां ८।३।१९।) इति लोपः, तस्यासिद्धत्वान्न पुनः सन्धिकार्य्यं, आतोऽटिनित्यं (पां ८।३।३।) इत्याकारस्य सानुनासिकता। अरिः,

। ७ । एमाशुमाशवे भर यज्ञश्रियं नृमादनं ।
पतयन्मन्दयत्सखं ॥

वचनव्यत्ययः । वोचेयुः उच्यासुः, वच परिभाषणइत्यस्मादाशीर्लिङि, झेर्जुसादेशः, लिङ्याशिष्यङ् ( पां ३ । १ । ८६ । ) इत्यङ्प्रत्यये, वच उम् ( पां ७ । ४ । २० । ) इत्युमागमः गुणः, किदाशिषि ( पां ३ । ४ । १०४ । ) इति यासुट्, छन्दस्युभयथा ( पां ३ । ४ । ११७ । ) इति लिङादेशस्य सार्वधातुकत्वात्, लिङः सलोपोऽनन्त्यस्य ( पां ७ । २ । ७९ । ) इति सकारलोपः, अतो येयः ( पां ७ । २ । ८० । ) इतीयादेशः, आद्गुणः ( पां ६ । १ । ८७ । ) इति गुणः, अङो अदुपदेशात्सार्वधातुकस्वरेण लिङोऽनुदात्तत्वं, अङ्प्रत्ययस्वर एव शिष्यते, तेन सह इकारस्य गुणः, एकादेशउदात्तेनोदात्तः ( पां ८ । २ । ५ । ) इत्युदात्तः । दस्म, दसु उपक्षयइत्यस्मादन्तर्भावितण्यर्थात्, इषियुधीन्धिदसिश्याधूसूभ्यो मगिति मक्प्रत्यय औणादिकः, पदात् परत्वादामन्त्रितनिघातः । कृष्टयः, क्तिच् क्तौ च संज्ञायां ( पां ३ । ३ । १७४ । ) इति क्तिचि, मनुष्यनामत्वात्, चितः ( पां ६ । १ । १६३ । ) इत्यन्तोदात्तः । स्याम, अस भुवि, श्नसोरल्लोपः ( पां ६ । ४ । १११ । ) इत्यकारलोपः, यासुट उदात्तत्वं, पादादित्वादनिघातः । शर्म्मणि, शॄ हिंसायां, छिनत्ति दुःखमिति शर्म्म, अन्येभ्योऽपि दृश्यन्ते ( पां ३ । २ । ७५ । ) इति मनिन्, नेड्वशि कृति ( पां ७ । २ । ८ । ) इतीट्प्रतिषेधः, नित्त्वादाद्युदात्तत्वं ॥ ६ ॥

सप्तमीमृचमाह एमाशुमाशव इति । ईमिति निपातइदम्शब्दार्थे वर्त्तते, हे यजमान, आशवे व्याप्तसोमयागव्यापारायेन्द्राय ईमा भर इमं सोममाहर । कीदृशं सोमं, आशुं सवनत्रयव्याप्तं । यज्ञश्रियं यज्ञस्य सम्पद्रूपं । नृमादनं, नृणामृत्विग्यजमानानां हर्षहेतुं । पतयत् पतयन्तं कर्म्माणि प्राप्नुवन्तं । मन्दयत्सखं य इन्द्रो मन्दयति यजमानान् हर्षयति तस्मिन्निन्द्रे सखिभूतोऽयं सोमस्तत्प्राप्तिहेतुत्वात् । आशुं, कृवापाजिमिस्वदिसाध्यशूभ्य उणिति उण्, प्रत्ययस्वरः । आशवे, पूर्ववत् । यज्ञश्रियं, समासस्य ( पां ६ । १ । २२३ । ) इत्यन्तोदात्तः । माद्यन्तेऽनेनेति मादनः, करणाधिकरणयोश्च ( पां ३ । ३ । ११७ । ) इति ल्युट्, तस्य लित्त्वात् पूर्वं आकार उदात्तः

। ८ । अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः ।
प्रावो वाजेषु वाजिनं ॥

। ९ । तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो ।
धनानामिन्द्र सातये ॥

गतिकारकोपपदात् कृत् ( पां ६ । २ । १३९ । ) इति स एव शिष्यते। पतयत्, पतेरदन्तस्य चौरादिको णिच्, अतो लोपः, तस्य स्थानिवत्त्वादुपधाया वृद्ध्यभावः, लटः शत्रादेशः, तस्य, छन्दस्युभयथेत्यार्द्धधातुकत्वेन शबभावात्, अदुपदेशादिति निघाताभावेन प्रत्ययाद्युदात्तत्वमेव भवति, आर्द्धधातुकत्वेऽपि, सर्वे विधयश्छन्दसि विकल्पन्त इति परिभाषया, णेरनिटि ( पां ७ । १ । ५१ । ) इति णिलोपाभावः। मन्दयच्छब्दोऽन्तोदात्तः, मन्दयति इन्द्रे सखा, सप्तमी ( पां २ । १ । ४० । ) इति योगविभागात् समासः, तत्पुरुषे तुल्यार्थे ( पां ६ । २ । २ । ) इति सप्तमी, पूर्वपदप्रकृतिस्वरत्वं ॥ ७ ॥

अष्टमीमृचमाह अस्य पीत्वेति। हे शतक्रतो बहुकर्म्मयुक्तेन्द्र, त्वमस्य सोमस्य सम्बन्धिनमंशं पीत्वा वृत्राणां शत्रूणां वृत्रनामकासुरप्रमुखानां शत्रूणां घनोऽभवो हन्ताभूः, ततो वाजेषु संग्रामेषु वाजिनं संग्रामवन्तं स्वभक्तं प्रावः प्रकर्षेण रक्षितवानसि। अस्येतीदम्शब्देन प्रयोगसमये पुरोदेशस्थः सोमो निर्द्दिश्यते, नतु पूर्वप्रकृतः सोमः परामृश्यते, अतो अनन्वादेशत्वान्नात्र, इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ( पां २ । ४ । ३२ । ) इत्यशादेशः, अतो न सर्वानुदात्तत्वं, किन्तु त्यदाद्यत्वे हलिलोपे अकारः प्रातिपदिकस्वरेणोदात्त इति। अन्तोदात्त इत्यन्तोदात्तादित्यनुवृत्तौ, ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ( पां ६ । १ । १७१ । ) इति विभक्तिरुदात्ता। पीत्वा, पिबतेः क्त्वाप्रत्यये, घुमास्थागापा ( पां ६ । ४ । ६६ । ) इत्यादिना ईत्वं, प्रत्ययस्वरेणोदात्तः असामर्थ्यान्न परामन्त्रिताङ्गवद्भावः। घनः, मूर्त्तौ घनः ( पां ३ । ३ । ७७ । ) इति हन्तेर्धातोः काठिन्येऽप्प्रत्ययः, तदस्यास्त्यर्श आदित्वादजन्तः, चित्त्वादन्तोदात्तः। वाजेषु, वृषादित्वादाद्युदात्तः।वाजिनमिति प्रत्ययस्वरः ॥ ८॥

नवमीमृचमाह तंत्वेति। हे शतक्रतो बहुकर्म्मयुक्त, यद्वा बहु-

१।१०।१ यो रायोऽवनिर्महान्त्सुपारः सुन्वतः सखा ।
तस्मा इन्द्राय गायत ॥ ८ ॥

प्रज्ञानयुक्तेन्द्र, धनानां सातये सम्भजनार्थं, वाजेषु युद्धेषु वाजिनं बलवन्तं तं त्वा पूर्वमन्तोक्तगुणयुक्तं त्वां वाजयामः अन्नवन्तं कुर्म्मः। रण इत्यादिषु षट्चत्वारिंशत्सु संग्रामनामसु पौंस्ये वाजे अयमिति पठितं। अष्टाविंशतिसङ्ख्यकेषु अन्ननामसु अन्धः वाजः पाज इति पठितं। उरु तुवीत्यादिषु द्वादशसु बहुनामसु शतं सहस्रमिति पठितं। अपः, अप्न इत्यादिषु षड्विंशति सङ्ख्यकेषु कर्म्मनामसु* शाम क्रतुरिति पठितं। केतः केतुरित्यादिष्वेकादशसु प्रज्ञानामसु क्रतुरसुरिति पठितं। त्वा, अनुदात्तं सर्वं (पां ८।१।१८।) इत्यनुवृत्तौ, त्वामौ द्वितीयायाः (पां ८।१।२३।) इति त्वादेशः। वाजेषु, वजव्रजगतौ, वाजयति गमयति शरीरनिर्वाहमनेनेति वाजो बलमन्नं वा, ण्यन्तात् करणे घञ्, तत्र ञित्स्वरितस्यापवादे, कर्षात्वतो घञोऽन्त उदात्तः (पां ६।१।१५९।) इत्यन्तोदात्तत्वे प्राप्ते तस्याप्यपवादत्वेन, वृषादीनाञ्च (पां ६।१।२०३।) इत्याद्युदात्तः। वाजयामः, वाजोऽस्यास्तीति वाजवान्, तं कुर्म्म इत्यर्थे, तत् करोति तदाचष्ट इति वार्त्तिकेन णिच्, इष्ठवण्णौ प्रातिपदिकस्येति वार्त्तिकेन तस्मिन् परत इष्ठवद्भावाद्विन्मतुपोर्लुगिति वार्त्तिकेन मतुपो लुक्, टेः (पां ६।४।१४३।) इत्यकारलोपः, णिचश्चित्त्वादन्तोदात्तत्वं, शपः पित्त्वेनानुदात्तत्वं, तसार्वधातुकस्वरेणाख्यातस्याप्यनुदात्तत्वं, पादादित्वात्तिङ्ङतिङ इति न निघातः। शतक्रतो, आमन्त्रितनिघातः, धनानां, नब्विषयस्यानिसन्तस्येत्याद्युदात्तः। सातये, उदात्त इत्यनुवृत्तौ, ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च (पां ३।३।९७।) इति क्तिमुदात्तः॥ ९॥

दशमीमृचमाह यो राय इति। य इन्द्रो रायो धनस्यावनीरक्षकः स्वामी वा, तस्मा इन्द्राय गायत, हे ऋत्विजस्तत्प्रीत्यर्थं स्तुतिं कुरुत। कीदृश इन्द्रः, महान् गुणैरधिकः,। सुपारः, सुष्ठुकर्म्मणः पूरयिता। सुन्वतो यजमानस्य सखा, सखिवत् प्रियः। रायः, ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः (पां ६।१।१७१।) इति विभक्तेरुदात्तत्वं।

* शम्म इति कां।

## पञ्चमसूक्तं।

। १ । आ त्वेता निषीदतेन्द्रमभिप्रगायत ।
सखायः स्तोमवाहसः ॥

अवनिः, अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु च इत्यस्मात्, अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिरित्यनिः प्रत्यय औणादिकः, प्रत्ययाद्युदात्तत्वं । सुपारः, पृ पालनपूरणयोरित्यस्माण्णिजन्तात्, कर्त्तरि अनुवृत्तौ पचाद्यच्, चितः ( पां ६ । १ । १६३ । ) इत्यन्तोदात्तः। सुन्वतः, शतुरनुमो नद्यजादी ( पां ६ । १ । १७३ । ) इति भक्तिरुदात्ता । सखा, समाने ख्यः स चोदात्त इति इण्प्रत्ययान्तत्वात्सन्नियोगेन यलोपः, सशब्दश्चोदात्तः, डित्त्वाट्टिलोपः । तस्मै, अदिरित्यनुवृत्तौ, त्यजियजितनिभ्यो डिदिति तनोतेरदिःप्रत्ययः, डित्त्वाट्टिलोपे प्रत्ययस्वरेण तशब्द उदात्तः, त्यदाद्यत्वं, एकादेश उदात्तेनोदात्तः ( पां ८ । २ । ५ । ) इत्युदात्तः, सावेकाचस्तृतीयादिर्विभक्तिः ( पां ६ । १ । १६८ । ) इति विभक्त्युदात्तत्वे प्राप्ते प्रथमैकवचने अवर्णान्तत्वात्, नगोश्वन् साववर्ण ( पां ६ । १ । १८२ । इति निषेधः । इन्द्राय, इन्द्रशब्दो रन्प्रत्ययान्तो निपातितः, नित्त्वादाद्युदात्तः, कर्म्मणा यमभिप्रैति स सम्प्रदानं ( पां ६ । ४ । ३२ । ) इत्यत्र क्रियाग्रहणं कर्त्तव्यमिति वचनात्, गानक्रियया प्राप्तत्वात् सम्प्रदानत्वेन चतुर्थी ॥ १० ॥ इति प्रथमस्य प्रथमेऽष्टमो वर्गः ॥ ८ ॥

---

आत्विति सूक्तं दशर्चं, शुनःशेपवत् दशेत्यनुवृत्तौ, आतु युञ्जन्तीत्येवमनुक्रान्तत्वात्, ऋषिच्छन्दोदेवताविनियोगः पूर्ववत्, विशेषविनियोगस्तु अतिरात्रे तृतीयपर्याये मैत्रावरुणशस्त्रे स्तोत्रियोऽयं तृचः। अतिरात्रे पर्यायाणामिति खण्डे आत्वेता निषीदतेत्युक्तत्वात्, तत्र प्रथमास्तृचमाह आत्वेति। तु शब्दः क्षिप्रार्थो निपातः, ताभ्यामाङ्भ्यामन्वेतुमितशब्दोऽध्यसनीयः, हे सखायः ऋत्विजः क्षिप्रमस्मिन् कर्मण्यागच्छत, आदरार्थोऽभ्यासः, आगत्य च निषीदत उपविशत, उप-

१ २ ११ पुरूतमं पुरूणामीशानं वार्य्याणां ।
इन्द्रं सोमे सचा सुते ॥

विश्य चेन्द्रमभिप्रगायत सर्वतः प्रकर्षेण स्तुत। कीदृशाः, स्तोमवाहसः, त्रिवृत् पञ्चदशादिस्तोमानस्मिन् कर्म्मणि वहन्ति प्रापयन्ति। आतु, आ, निपातत्वादाद्युदात्तः। इत, इणगतौ, द्व्यचोऽतस्तिङः (पां ६। ३। १३५।) इति संहितायां दीर्घत्वं। नि, निपातत्वादाद्युदात्तः। सीदत, पाघ्राध्मास्थाम्नादाण् (पां ७। ३। ७८।) इत्यादिना सदेः सीदादेशः, सदिरप्रतेः (पां ८। ३। ६६।) इति संहितायां षत्वं। अभि, उपसर्गाश्चाभिवर्जमितिवचनात् प्रातिपदिकान्तोदात्तत्वं। स्तोमवाहसः, अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्निति स्तौतेरौणादिकोमन्प्रत्ययान्तः स्तोमशब्दः, नित्त्वादाद्युदात्तः। स्तोमं वहन्तीति स्तोमवाहसः, वहिहाधाञ्भ्यश्छन्दसीत्यौणादिकोऽसुन्प्रत्ययः, तत्र णिदित्यनुवृत्तेः, अत उपधायाः (पां ७। २। ११६।) इत्युपधाया वृद्धिः, कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते, गतिकारकोपपदयोः पूर्वपद-प्रकृतिस्वरत्वञ्चेत्यौणादिकसूत्रात् समास आद्युदात्तः॥ १॥

द्वितीयामृचमाह पुरूतममिति। सखायोऽभिप्रगायतेति पद-द्वयमत्रानुवर्त्तते, हे सखाय ऋत्विजः, सचा यूयं सर्वैःसह, यद्वा सचा परस्परसमवायेन सुते अभिषुते सोमे प्रवृत्ते सतीन्द्रमभिप्रगायत। कीदृशमिन्द्रं, पुरूतमं पुरून् बहून् शत्रून् तमयति ग्लापयतीति पुरूतमः, पुरूणां बहूनां वार्य्याणां वरणीयानां धनानां ईशानं स्वामिनं। पुरूतमं, तमुग्लान इति धातोर्ण्यन्तात् पचाद्यचि चित्त्वादन्तोदात्तत्वेऽपि कृदुत्तरपदप्रकृतिस्वरं बाधित्वा, परादिश्छन्दसि बहुलं (पां ६। २। १९९।) इत्युत्तरपदाद्युदात्तत्वं। पुरूणां, पॄपालनपूरणयोरित्यस्मात् कुरि-त्यनुवृत्तौ, पॄभिदिव्यधिगृधिधृषिहृषिभ्य इत्यौणादिकः कुः प्रत्ययः, कित्त्वाद्गुणनिषेधे, उदोष्ठ्यपूर्वस्य (पां ७। १। १०२।) इत्युकारः, उरण् रपरः (पां १। १। ५१) इति ऋस्थानजोऽण् रपरः, प्रत्ययस्वरेणान्तोदात्तः पुरुशब्दः, अतो मतुपि, ह्रस्वादन्तोदात्तात् पुरुशब्दात् परस्य नामो, नामन्यतरस्यां (पां ६। १। १७७।) इत्यन्तोदात्तत्वं। ईशानं, ईशऐश्वर्य्ये इति धातोरनुदात्तत्वात् परस्य शानचो लसार्वधा-तुकानुदात्तत्वं। वार्य्याणां, वृङ् सम्भक्तावित्यस्मात्, ऋहलोर्ण्यत्

। ३ । स घा नो योग आभुवत् स राये स पुरन्ध्यां ।
गमद्वाजेभिरा स नः ॥

( पां ३ । १ । १२४ । ) इति ण्यत्, ऋचिर्वधो हि ऋजएव ग्रहणं न वृङः, तित्स्वरितं ( पां ६ । १ । १८५ । ) इति प्रत्ययस्वरितं बाधित्वा, ईडवन्दवृशंसदुहां ण्यतः ( पां ६ । १। २१४ । ) इति ण्यदन्तस्याद्युदात्तत्वं यतोऽनावः ( पां ६ । १ । २१३ । ) इत्यत्र तु ण्यतो ग्रहणं न भवति, तस्य द्व्यनुबन्धकत्वात्, एकानुबन्धग्रहणे न द्व्यनुबन्धकस्येति नियमात्। सचा, सचसमवाये, धात्वादेः षः सः ( पां ६ । १ । ६४ । ) इति षस्य सत्वं, सम्पदादित्वाद्भावे क्विप्, तृतीयैकवचनं, धातुस्वरेणाद्युदात्तः, सर्वे विधयश्छन्दसि विकल्प्यन्त इति न्यायेन, साबेकाच इति सूत्रं न प्रवर्त्तते, सचेत्यस्य निपातत्वपक्षे स्पष्टमाद्युदात्तत्वं ॥ २ ॥

तृतीयामृचमाह स घा न इति। घ शब्दोऽवधारणार्थो निपातः, सर्वत्र तच्छब्दः सम्बध्यते, स घ, स एवेन्द्रः पूर्वमन्त्रोक्तगुणविशिष्टो नोऽस्माकं योगे पूर्वमप्राप्तस्य पुरुषार्थस्य सम्बन्धे आभुवत् आभवतु, पुरुषार्थं साधयत्वित्यर्थः। स एव राये धनार्थं आभुवत् आभवतु,। स एव पुरन्ध्यां योषित्याभुवत् आभवतु । यद्वा बहुविधायां बुद्धावाभुवत् आभवतु, पुरन्धिर्बहुधीरिति यास्कः । स एव वाजेभिर्दयैरन्नैः सह नोऽस्मानागमदागच्छतु । घ, चादयोऽनुदात्ताः, संहितायां, ऋचि। तु नु घ मक्षु तङ्कुत्रोरुष्याणां ( पा ६ । ३ । १३३ । ) इति दीर्घः। योगे, घञो ञित्वादाद्युदात्तत्वं । भुवत्, भूयात्, भवतेराशीर्लिङि परतो, लिङ्याशिष्यङ् ( पां ३ । १ । ८६ । ) इत्यङ्प्रत्ययः, तस्य ङित्त्वेन गुणाभावादुवङादेशः, किदाशिषि ( पां ३ । ४ । १०४ । ) इति यासुट् न भवति, अनित्यमागमशासनमिति वचनात्, तिङ्ङतिङः ( पां ८ । १ । २८ । ) इति निघातः । ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ( पां ६ । १ । १७१ । ) इत्येतस्य विभक्तेरुदात्तत्वं । पुरन्ध्यां, पुरन्धिः पुरुधीः, पृषोदरादित्वादुकारस्यामादेशः, ईकारस्य ह्रस्वश्च, आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानमिति वार्तिकेनाद्युदात्तत्वं, अथवा पुरं शरीरं धीयतेऽस्यामिति, कर्म्मण्यधिकरणे च ( पां ३ । ३ । ९३ । ) इति किः प्रत्ययः, अलुक्छान्दसः, नव्विषयस्यानिसन्तस्येति पुरः शब्द आद्युदात्तः, दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वं । गमत्, गमे-

। ४ । यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः ।
तस्मा इन्द्राय गायत ॥
। ५ । सुतपाव्ने सुता इमे शुचयो यन्ति वीतये ।
सोमासो दध्याशिरः ॥ ६ ॥

लटस्तिप्, इतश्च लोपः परस्मैपदेषु (पां ३।४।९७।) इतीकारलोपः, बहुलं छन्दसीति शपो लुक्, लेटोऽडाटौ (पां ३।४।९४।) इत्यडागमः, आगमा अनुदात्ता इति फिट्सूत्रेण तस्यानुदात्तत्वे धातुस्वर एव शिष्यते। वाजेभिः, वृषादित्वादाद्युदात्तः ॥ ३ ॥

चतुर्थीमृचमाह यस्य संस्थ इति। समत्सु युद्धेषु यस्येन्द्रस्य संस्थे रथे युक्तौ हरी द्वावश्वौ शत्रवो न वृण्वते न सम्भजन्ते, रथमश्वौ च दृष्ट्वा पलायन्त इत्यर्थः, तस्मा इन्द्राय तत्सन्तोषार्थं हे ऋत्विजो गायत स्तुतिं कुरुत। रण इत्यादिषु षट्चत्वारिंशत्सङ्ख्याकेषु सङ्ग्रामनामसु समत् समो रण इति पठितं। संस्थे, सम्यक् तिष्ठतीति संस्थो रथः, आतश्चोपसर्गे (पां ३।१।१३६।) इति क प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वं। वृण्वते, प्रत्ययस्वरेणाकार उदात्तः, सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति परिभाषया, तिङ्ङतिङ इति निघातो न भवति, यद्वृत्तान्नित्यं (पां ८।१।६६।) इति प्रतिषेधात्, पञ्चमीनिर्देशेऽप्यनव्यवहितेऽपि कार्य्यमिष्यते। हरतो रथमिति हरी अश्वौ, इन् इत्यनुवृत्तौ, हृपिषिरुहिवृतिविदिछिदिकीर्त्तिभ्यश्चेत्यौणादिक इन् प्रत्ययः, नित्वादाद्युदात्तत्वं। समत्सु, सम्पूर्वादततेः क्विप्। शत्रवः, शातिः सौत्रो धातुर्हिंसार्थः, रु शातिभ्यां क्रुन् इत्यौणादिकः क्रुन्प्रत्ययः, नित्वादाद्युदात्तत्वं। तस्मै, सावेकाचः (पां ६।१।१६८।) इति विभक्त्युदात्तत्वे, न गोश्वन् साववर्ण (पां ६।१।१८२।) इति प्रतिषेधात्, प्रातिपदिकस्वरः ॥ ४ ॥

पञ्चमीमृचमाह सुतपाव्न इति। इमे सोमासः, अस्मिन् कर्म्मणि सम्पादिताः सोमाः सुतपाव्ने अभिषुतस्य सोमस्य पानकर्त्रे, षष्ठ्यर्थे चतुर्थी, तस्य पातुर्वीतये भक्षणार्थं यन्ति तमेव प्राप्नुवन्ति। कीदृशाः सोमाः, सुताः अभिषुताः। शुचयः दशापवित्रेण शोधितत्वाच्छुद्धाः। दध्याशिरः, अवनीयमानं दधि आमाशिरोषघातकं येषां सोमानां ते दध्याशिरः।

१ ६ १ त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः ।
इन्द्र ज्यैष्ठ्याय सुक्रतो ॥

सुतपाव्ने, सुतं पिबतीति सुतपावा, वनिपः पित्त्वाद्धातुस्वर एव शिष्यते, समासे द्वितीया पूर्वपदप्रकृतिस्वरं बाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वं । शुचयः, शुचदीप्तौ, इन्नित्यनुवृत्तौ, इगुपधात् किदित्यौणादिक इन्, कित्त्वा-ल्लघूपधगुणाभावो नित्त्वादाद्युदात्तत्वं । वीतये, वी गतिप्रजनकान्त्यशन-खादनेष्वित्यस्मात्, मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः, (पां ३ । ३ । ९६ ।) इति क्तिनुदात्तः । सोमासः, षुञ् अभिषवे, अर्त्तिस्तुसुहुसृधृक्षी-त्यादिना मन्, नित्त्वादाद्युदात्तः, आज्जसेरसुक् (पां ७ । १ । ५०) इत्यसु-गागमः । दध्याशिरः, दधाति पुष्णातीति दधि, डुधाञ् धारणपोषणयोः, आदृगमहनजनः किकिनौ लिट्च (पां ३ । २ । १७१ ।) इति किन, लिड्व-द्भावाद्द्विर्भावः, कित्त्वादाकारलोपः, नित्त्वादाद्युदात्तत्वं । शॄ हिंसायां, शृणाति हिनस्ति सोमं ऽवनीयमानं, स तु सोमस्य स्वाभाविकं रसं, अर्जीष-त्वप्रयुक्तं नीरसं दोषं वेत्याशीः, क्विपि, ऋत इद्धातोः (पां ७ । १ । १००।) इतीत्वं, रपरत्वञ्च, दध्येव आशीर्येषां सोमानां ते दध्याशिरः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ ५ ॥ इतिप्रथमस्य प्रथमे नवमो वर्गः ॥ ९ ॥

आत्वेति दृत्तौ यदीम्त्यमाह त्वं सुतस्य पीतय इति । सुक्रतो शोभन-कर्म्मन् शोभनप्रज्ञ वा, हे इन्द्र, त्वं सुतस्याभिषुतस्य सोमस्य पीतये पानार्थं, ज्यैष्ठ्याय देवेषु ज्येष्ठत्वार्थं च, सद्यस्तस्मिन्नेव क्षणे वृद्धोऽजायथाः अभिवृद्धोत्साहेन युक्तोऽभूः । पीतये, पा पान इत्यस्मात्, स्थागापापचो-भावे (पां ३ । ३ । ९५ ।) इति क्तिन्, घुमास्थागापा (पां ६ । ४ । ६६ ।) इत्यादिना ईत्वं, तस्य नित्त्वेऽपि व्यत्ययेन प्रत्ययादात्तत्वं. उत्तरसूत्रगत-मुदात्तपदमत्रापि वा योजनीयं । सद्यः, सद्यः परुत्परार्य्यैषमः (पां ५ । ३ । २२ ।) इति समानेऽहन्यर्थे समानस्य सभावो, द्यश्च प्रत्ययो निपा-त्यते, प्रत्ययस्वरेणोदात्तः । वृद्धः, वृधु वृद्धौ, उदितो वा (पां ७ । २ । ५६) इति क्त्वा प्रत्यये इटो विकल्पितत्वात् यस्य विभाषा (पां ७ । २ । १५ ।) इति निष्ठायामिट्प्रतिषेधः प्रत्ययस्वरेणोदात्तः । ज्यैष्ठ्याय, ज्येष्ठस्य भावो ज्यैष्ठ्यं, गुणवचनब्राह्मणादिभ्यः कर्म्मणि च (पां ५ । १ । १२४ ।) इतिष्यञ्, ञित्त्वादाद्युदात्तः ॥ ६ ॥

। ७। आ त्वा विशन्त्वाशवः सोमास इन्द्र गिर्वणः।
शं ते सन्तु प्रचेतसे।
। ८। त्वां स्तोमा अवीवृधन्त्वामुक्था शतक्रतो।
त्वां वर्धन्तु नो गिरः।

सप्तमीमृचमाह आ त्वा विशन्त्विति। हे इन्द्र, त्वां सोमासः सोमा आविशन्तु आभिमुख्येन प्रविशन्तु। कीदृशाः सोमाः, आशवः सवनत्रये प्रकृतिविकृत्योर्वा व्याप्तिमन्तः। कीदृशेन्द्र, गिर्वणः, गीर्भिःस्तुतिभिः सम्भजनीयदेवविशेष, गिर्वणो देवो भवति गीर्भिरेनं वनयन्तीति यास्कः, तथाविध हे इन्द्र, ते * तव प्रचेतसे प्रकृष्टज्ञानाय शं सुखरूपाः सोमाः सन्तु। गिर्वणः, गृणन्तीति गिरः स्तुतयः, गॄ शब्दे क्विपि, ऋत इद्धातोः (पा ७।१।१००।) इतीत्वं, रपरत्वं च, गीर्भिर्वण्यते सेव्यत इति गिर्वणः, वनषण संभक्तौ, सम्भक्तिः सेवा, सर्वधातुभ्योऽसुनित्यौणादिकोऽसुन् प्रत्ययः। प्रचेतसे, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। ७।

अष्टमीमृचमाह त्वां स्तोमा इति। हे शतक्रतो बहुकर्मन् बहुप्रज्ञ वेन्द्र, त्वां स्तोमाः सामगानां स्तोत्राणि अवीवृधन् वर्द्धितवन्तः, तथा बह्वृचानामुक्थाः शस्त्राणि त्वामवीवृधन्, यस्मात् पूर्वमेवमासीत् तस्मादिदानीमपि नोऽस्माकं गिरः स्तुतयस्त्वां वर्द्धयन्तु अतिवृद्धं कुर्वन्तु। स्तोमाः, अर्त्तिस्तुस्वित्यादिना मन्, मनो नित्त्वादाद्युदात्तः। अवीवृधन्, वृधु वृद्धौ, इत्यस्माण्ण्यन्ताल्लुङि चङि, उरत् (पा ७।४।६६।) इति वृधेरुपधाया ऋकारस्याकारविधानादनारब्धोऽपि गुणो बाध्यते, द्विर्भाववहलादिशेषसन्वद्भावेत्वदीर्घत्वाडागमाः। उक्थाः उक्थानि, पा तॄ तुदि विचि वचि सिचिभ्यस्थगिति वचेस्थक्प्रत्यय औणादिकः, तस्य कित्त्वात् सम्प्रसारणं, शेश्छन्दसि बहुलं (पा ६।१।७०।) इति शिलोपो न लोपस्य, प्रत्ययस्वरेणोदात्तः, असामर्थ्यात् आमन्त्रितस्यापि न पराङ्गवद्भाव इति नाद्युदात्तत्वं। वर्द्धन्तु अन्तर्भावितण्यर्थाद्वृधेर्व्यत्ययेन परस्मैपदं। ८॥

* तुभ्यं का. भं.।

। ९ । अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणं ।
यस्मिन् विश्वानि पौंस्या ।

नवमीमृचमाह अक्षितोतिरिति । इन्द्र,इमं वाजं सोमरूपमन्नं सनेत् सम्भजेत्। कीदृश इन्द्रः, अक्षितोतिः, अहिंसितरक्षणः, कदाचिदपि रक्षां न विमुञ्चतीत्यर्थः । कीदृशं वाजं सहस्रिणं, प्रकृतौ विकृतौ च प्रवर्त्तमानत्वेन सहस्रसङ्ख्यायुक्तं । यस्मिन्वाजे विश्वानि सर्वाणि पौंस्या पुंस्त्वानि बलानि वर्त्तन्ते, तादृशं वाजमिति पूर्वत्रान्वयः । अक्षितोतिः, ननु क्षि क्षय इत्ययं धातुरकर्म्मकः, तस्य च कर्म्माभावादधिकरणे भावे कर्त्तरि वा क्तप्रत्ययेन भवितव्यं, तदिह यदि कर्त्तर्य्यधिकरणे वा स्यात्, तदा तयोरर्थयोर्ण्यत्प्रत्ययस्याविधानात् क्षिय इत्यनुवृत्तौ, निष्ठायामण्यदर्थे (पां ६।४।६०।) इति दीर्घेन भवितव्यं, तथाच, क्षियो दीर्घात् (पां ८।२।४६।) इति निष्ठानत्वे अक्षीणेति स्यान्नचाक्षितेति अथ नपुंसके, भावे क्तः (पां ३।३।११४।) इति भावपरः क्षितशब्दो गृह्यते, तदा तस्य ण्यदर्थत्वेनाण्यदर्थ इति निषेधात् दीर्घनत्वयोरभावात् क्षितमिति सिद्ध्यति, तदा तु नञ्तत्पुरुषः प्रकृतेन नान्वेतीति, न विद्यते क्षितमस्येति बहुव्रीहिणैव भवितव्यं, तथाच, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तत्वं स्यात्, पुनरूतिशब्देन बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव स्वरः स्यादित्यभिमतमाद्युदात्तत्वं न सिद्ध्येदिति, सत्यं, अतएवात्र क्षिधातुरन्तर्भावितण्यर्थो गृह्यते, तेन सकर्म्मकत्वात् कर्म्मण्येव निष्ठा, ततश्चाण्यदर्थ इति निषेधात्, दीर्घो निष्ठानत्वञ्च न भविष्यति, तथा च नञ्तत्पुरुषे नक्षिता अक्षिता अनाशयितेत्यर्थः, तत्र चाव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वं पुनरूतिपदेन बहुव्रीहौ स एव स्वरः स्यास्यतीति न कोऽपि दोषः । रि क्षि चिरि जिरि दाश दृ हिंसा दान निकेतनेषु, इदं जिघांसायामिति, क्षिणोतेर्हिंसार्थस्य वा कर्म्मणि निष्ठा, तथा चाहिंसितोतिरित्यर्थे नकोऽपि दोषः, उक्तक्रमेण स्वरः सिद्ध्यतीति । सनेत्, वन षण सम्भक्तौ, भौवादिकः वाजं, वृषादित्वादाद्युदात्तः । इन्द्रं, आद्युदात्तः । सहस्रिणं, सहस्रमस्यास्तीति, अत इनि ठनौ (पां ५।२।११५।) इति इनिः प्रत्ययः, प्रत्ययस्वरः ।

। १० । मानोमर्ता अभिद्रुहन्तनूनामिन्द्र गिर्वणः ।
ईशानो यवया वधं ।

विश्वानि, विशेः क्वन्निति क्वन्प्रत्ययः, नित्त्वादाद्युदात्तः। पुंसः कर्म्माणि पौंस्यानि, ब्राह्मणादेराकृतिगणत्वात्, गुणवचनब्राह्मणादिभ्यः कर्म्मणि च (पां ५।१।१२४।) इति ष्यञ्, ञित्त्वादाद्युदात्तः, प्रथमा बहुवचनस्य, सुपांसुलुगिति डादेशः। ननु स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् (पां ४।१।८७।) इत्यनेन धान्यानां भवने क्षेत्रे खञ् (पां ५।२।१। इत्येतत्पर्य्यन्तेषु अपत्याद्यर्थेषु नञ्स्नञोर्विधानात्, यथा पुंसोऽपत्यं पौंस्न इत्यादिवत्, पुंसो भावः कर्म्म वेत्यस्मिन्नर्थे ष्यञं बाधित्वा पौंस्नानीत्येव भवितव्यं कथमुच्यते पौंस्यानीति। उच्यते, आ च त्वात् (पां ५।१।१२०।) इति सूत्रे त्वादित्यवधिनिर्द्देशात्, ब्रह्मणस्त्वः (पां ५।१।१३६।) इत्येतत्पर्य्यन्तैरिमनिजादिभिः प्रत्ययैः सह त्वतलोः समावेशः, एवं तत्रैव चशब्दात्, नञ्स्नञोरपि ष्यञादिभिः समावेशादेव न बाध्यबाधकभावः॥ ९॥

दशमीमृचमाह मा न इति। हे गिर्वण इन्द्र, मर्त्ता विरोधिनो मनुष्या नोऽस्मदीयानां तनूनां शरीराणां माभिद्रुहन् अभितो द्रोहं मा कुर्य्युः, ईशानः समर्थस्त्वं वधं वैरिभिः सम्पाद्यमानं यवयास्मत्तः पृथक्कुरु। मनुष्या इत्यादिषु पञ्चविंशतिसङ्ख्याकेषु मनुष्यनामसु मर्त्ता व्रात इति पठितं। मर्त्ताः, असिहसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्निति तन्प्रत्ययश्चौणादिकः नित्त्वादाद्युदात्तः। अभि, एवमादीनामन्त इत्यन्तोदात्तः। द्रुहन्, द्रुह जिघांसायां, लिङर्थे लेट् (पां ३।४।७।) इति प्रार्थनायां लेट्, तस्य झि आदेशः, झोऽन्तः (पां ७।१।३।) इति झस्यान्तादेशः, इतश्च लोपः परस्मैपदेषु (पां ३।४।९७।) इतीकारलोपः, शपो लुक्, सार्वधातुकमपित् (पां १।२।४।) इति तिङो ङित्त्वाल्लघूपधगुणाभावः। तनूनां, असामर्थ्यान्न पराङ्गवद्भावः। इन्द्र गिर्वणः, गतपूर्वं। ईशानः, धातोरनुदात्तेत्त्वाच्छपो लुकि लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते। यवय, यौतेर्णिचि संज्ञापूर्वको विधिरनित्य इति वृद्धिर्न क्रियते, अथवा यातीति यवः, पचाद्यच्, यवं करोतीत्यर्थे, तत्करोति तदाचष्ट इति सूत्रवार्तिकेन णिच्, इष्ठव-

द्भावाट्टिलोपः, तस्य स्थानिवद्भावाद्वृद्ध्यभावः। वधं, हनस्य वधः (पां ३। ३। ७१ ) इति भावेऽप्प्रत्ययस्तत्सन्नियोगशिष्टः स्थानिवद्भावेनान्तोदात्तो वधादेशः, उदात्तनिवृत्तिस्वरेणाप उदात्तत्वं ॥ १० ॥ इति प्रथमस्य प्रथमे दशमो वर्गः। १०।

# शुद्धिपत्रम्।

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| १२ | ७।८ | यथातितयं | यथातिथये |
| १४ | १ | तवैव | तव न |
| १६ | १ | सुत्ययन | सुत्ययेन |
| २४ | २२ | उक्तेन | उक्थेन |
| २५ | २८ | कर्ष्टकात् | कर्ष्टकां |
| ६२ | १८ | संस्कृतं | संस्कृतारं |
| ६२ | २४ | सुरभ | सुभ |
| ६५ | २ | द्दोर्घः | दीर्घं |
| ८० | २२ | नः | नुः |




VOL. I.] FEBRUARY. [No. 2.

# BIBLIOTHECA INDICA.

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE

Hon. Court of Directors of the East India Company,

AND THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

EDITED BY DR. E. RÖER.



माधवाचार्य्यकृतभाष्यसहित ऋग्वेदसंहितायाः

प्रथमाष्टकस्य प्रथमावधि द्वितीयाध्याय पर्य्यन्तं।

---

THE FIRST TWO LECTURES OF THE SANHITÁ OF THE

# RIG VEDA,

WITH THE COMMENTARY OF MÁDHAVÁCHÁRYÁ, AND AN ENGLISH TRANSLATION OF THE TEXT.

BY DR. E. RÖER.

FASCICULUS II.

CALCUTTA:

PRINTED BY J. THOMAS, AT THE BAPTIST MISSION PRESS, CIRCULAR ROAD.

1848.




**ORIENTAL SECTION—ASIATIC SOCIETY.**

**1848.**

G. A. BUSHBY, Esq.
WELBY JACKSON, Esq.
BABU DEBENDRANÁTHA THÁKURA.
H. M. ELLIOT, Esq.
W. SETON KARR, Esq.
BABU HARÍMOHANA SENA.
BABU RÁJENDRALÁL MITTRA.
Dr. E. ROER, Secretary, Oriental Department.

---

Honorary (non-resident) Members.

B. H. HODGSON, Esq., *Darjiling.*
WALTER ELLIOTT, Esq., *Madras.*
H. H. WILSON, Esq. Boden Professor of Sanscrit, *Oxford.*

## षष्ठसूक्तं।

। १ । युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः।
रोचन्ते रोचना दिवि।

सुरूपेत्यादिषु षट्सूक्तेषु तृतीयस्य युञ्जन्तीति सूक्तस्य मन्त्रसंख्या-ऋषिच्छन्दो, दैवतानि, विनियोगश्च, पूर्ववदवगन्तव्यः। दशर्चे तस्मिन् सूक्ते आद्यास्तिस्रोऽन्तिमा चेत्येताश्चतस्र ऐन्द्र्यः। आदहेत्येताश्चतुर्थीमारभ्य षडृचो मारुत्यः, तासु मध्ये वीळुचिदिन्द्रेणेत्येते द्वे ऋचौ मारुत्यौ सत्यावैन्द्र्यावपि भवतः, तदेतत् सर्वमनुक्रमणिकायामुक्तं, सुरूपकृत्नुं दशैन्द्रं, आतु युञ्जन्त्यादहेत्येताः षण्मारुत्यः, वीळुचित् इन्द्रेणेत्यैन्द्र्यौ-चेति। एतस्मिन् सूक्ते युञ्जन्तीत्यसौ तृचस्तृतीये रात्रिपर्य्याये ब्राह्मणाच्छंसिन उक्थ्यरूपः, *तथा चातिरात्रे पर्य्यायाणामिति खण्डे योगे योगे तवस्तरं युञ्जन्ति ब्रध्नमरुषमिति सूत्रितं, तत्र प्रथमामृचमाह युञ्जन्तीति। इन्द्रो हि परमैश्वर्य्ययुक्तः, परमैश्वर्य्यंचाग्निवाय्वादित्यात्मकरूपेणावस्थानादुपपद्यते। ब्रध्नमादित्यरूपेणावस्थितं। अरुषं हिंसकरहितमग्निरूपेणावस्थितं। चरन्तं वायुरूपेण सर्वतः प्रसरन्तमिन्द्रं परितस्थुषः परितोऽवस्थिता लोकत्रयवर्त्तिनः प्राणिनो युञ्जन्ति, स्वकीयकर्म्माणि देवतात्वेन सम्बद्धं कुर्व्वन्ति, तस्यैवेन्द्रस्य मूर्त्तिविशेषभूता रोचना नक्षत्राणि दिवि द्युलोके रोचन्ते प्रकाशन्ते। अस्य मन्त्रस्योक्तार्थपरत्वं ब्राह्मणान्तरे व्याख्यातं, युञ्जन्ति ब्रध्नमित्याह, असौ वा आदित्यो ब्रध्नः, आदित्यमेवास्मै युनक्ति, अरुषमित्याह, अग्निर्वा अरुषः, अग्निमेवास्मै युनक्ति, चरन्तमित्याह, वायुर्वै चरन्, वायुमेवास्मै युनक्ति, परितस्थुष इत्याह, इमे वै लोकाः परितस्थुषः इमानेवास्मै लोकान् युनक्ति, रोचन्ते रोचना दिवीत्याह, नक्षत्राणि वै रोचना दिवि, नक्षत्राण्येवास्मै रोचयन्तीति। पञ्चविंशतिसंख्याकेषु महन्नामसु महः, ब्रध्न इति पठितं, आदित्यस्यापि महत्त्वादेव ब्रध्नत्वं। युञ्जन्ति, अन्तेः प्रत्ययस्वरेणाद्युदात्तत्वं। ब्रध्नमिति शब्दः प्रातिपदिकान्तोदात्तः। न सन्ति रुषा यस्यासावरुषः,

* अनुरूपः, का. सं।

१ २ १ युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।
शोणा धृष्णू नृवाहसा ॥

नञ्सुभ्यां (पां ६ । २ । १७२ ।) इत्युत्तरपदान्तोदात्तत्वं, अमिपूर्वः (पां ६ । १ । १०७ ।) इतिपूर्वरूपं, एकादेश उदात्तेनोदात्तः (पां ८ । २ । ५ ।) इत्युदात्तत्वं । चरन्तं, शपः पित्त्वादनुदात्तत्वं, शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । तस्थुषः, तिष्ठतेर्लिटः क्वसुरादेशः, वस्वेकाजाद्घसां (पां ७ । २ । ६७ ।) इतीटमन्तरङ्गमपि बाधित्वा, सम्प्रसारणं सम्प्रसारणाश्रयञ्च बलीय इति शसि परतो भत्वात्, वसोः सम्प्रसारणं परपूर्वत्वं, शासिवसिघसीनाञ्च (पां ८ । ३ । ६० ।) इति षत्वं, वसोः प्रत्ययस्वरेणोदात्तत्वं । रोचन्ते, शिङो लसार्वधातुकानुदात्तत्वं, धातुस्वर एव । रोचना, अनुदात्तेतश्च हलादेः (पां ३ । २ । १४९) इति युच्, युवोरनाकौ (पां ७ । १ । १ ।) इत्यनादेशः, चितः (पां ६ । १ । १६३ ।) इत्यन्तोदात्तत्वं । दिवि, ऊडिदम्पदादित्यादिना विभक्तेरुदात्तत्वं । १ ।

द्वितीयामृचमाह युञ्जन्त्यस्येति । अस्य ब्रध्नादिशब्दप्रतिपाद्यस्यादित्यादिमूर्त्तिभिन्नस्य तत्रावस्थितस्येन्द्रस्य रथे, हरी एतन्नामानौ द्वावश्वौ सारथयो युञ्जन्ति, इन्द्रसम्बन्धिनोरश्वयोर्हरिनामत्वं, हरीन्द्रस्य, रोहितोऽग्नेरिति पठितत्वात् । कीदृशौ हरी, काम्या कामयितव्यौ । पुनः कीदृशौ विपक्षसा, विविधे पक्षसी रथस्य पार्श्वौ ययोरश्वयोस्तौ विपक्षसौ, रथस्य द्वयोः पार्श्वयोर्योजिताविवर्थः । पुनरपि कीदृशौ, शोणा रक्तवर्णौ । पुनः किम्भूतौ धृष्णू, प्रगल्भौ । पुनः किम्भूतौ, नृवाहसा, नृणां पुरुषाणामिन्द्रतत्सारथिप्रमुखानां वाहकौ वोढारौ । अस्य ब्रध्नमित्युक्तस्य परामर्शात्, इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ (पां २ । ४ । ३२ ।) इत्यश्, अशः शित्त्वात् सर्वादेशोऽनुदात्तः, विभक्तेरनुदात्तत्वेनेति सर्वानुदात्तत्वं । काम्या, कमु कान्तौ, कमेर्णिङ्, कामयतेः, अचो यत् (पां ३ । १ । ९७ ।) इति यत्प्रत्ययः, तित्स्वरितापवादत्वेन, यतोऽनावः, (पां ६ । १ । २१३) इत्याद्युदात्तत्वं, सुपां सुलुक् (पां ७ । १ । ३९ ।) इति द्विवचनस्य डादेशः । हरतो रथमिति हरी, हृपिषीत्यादिना इन्, नित्त्वादाद्युदात्तः । विपक्षसा, पचिवचिभ्यां सुट् चेति पचेः सुडागमः । विभिन्ने पक्षसी पार्श्वौ ययोस्तौ, विशब्दो निपातत्वादुदात्तः, पूर्वपद-

१ ३ १ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे १
समुषद्भिरजायथाः १

प्रकृतिस्वरेण स एव शिष्यते, द्विवचनस्य डादेशः। रथे, रमन्तेऽस्मिन्निति रथः, रमु क्रीडायां, हनि कुषिनीरमिकाशिभ्यः क्थन्निति क्थन्, कित्त्वात्, अनुदात्तोपदेश (पां ६।४।३७।) इत्यादिना मकारलोपः, नित्स्वरेणाद्युदात्तः। शोणा, * शोणृ रक्तीकरणे, शोणतेरच्, चित्त्वादन्तोदात्तः, सुपांसुलुगिति द्विवचनस्य डादेशः। धृष्णू, ञिधृषा प्रागल्भ्ये, त्रसि गृधि धृषि क्षिपेः क्नुः (पां ३।२।१४०।) इति क्नुप्रत्ययः, कित्त्वाद्गुणाभावः, प्रत्ययस्वरः। नृवाहसा, नॄन् वहत इति वहेः, वहि हा धाञ्भ्यश्छन्दसीत्यसुन्, णिदित्यनुवृत्तेर्वृद्धिः, णित्त्वादाद्युदात्तः, कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते॥२॥

तृतीयामृचमाह केतुं कृण्वन्निति। हे मर्या मनुष्या, इदमाश्चर्यं पश्यतेत्यध्याहारः। किमाश्चर्य्यमिति तदुच्यते, आदित्यरूपोऽयमिन्द्र उषद्भिर्दाहकै रश्मिभिः प्रतिदिनमुषःकाल एव समजायथाः, उदपद्यत, अथवा सूर्य्यस्यैवास्तसमये मरणमुपचर्य्य व्यत्ययेन बहुवचनं कृत्वा सम्बोधनं क्रियते, हे मर्य प्रतिदिनं त्वमजायथा इति * यावत्, किं कुर्वन् अकेतवे रात्रौ निद्राभिभूतत्वेन प्रज्ञानरहिताय प्राणिने केतुं कृण्वन् प्रातः प्रज्ञानं कुर्वन्। पुनः किं कुर्वन्, अपेशसे रात्रावन्धकारावृतत्वेनानभिव्यक्तत्वाद्रूपरहिताय पदार्थाय प्रातरन्धकारनिवारणेन पेशो रूपमभिव्यज्यमानं कुर्वन्। पेश इति रूपनाम, पिंशतेरिति यास्कः। अकेतवे, अपेशस इति चतुर्थ्यौ षष्ठ्यर्थे द्रष्टव्यौ। केतुं, प्रातिपदिकस्वरः। कृण्वन्, कृवि हिंसाकरणयोश्च, लटः शत्रादेशः, इदितो नुम् धातोरिति नुमागमः, कर्त्तरि शपि प्राप्ते, धिन्विकृण्व्योरच (पां ३।१।८०।) इत्युप्रत्ययः, तत्सन्नियोगेन वकारस्य चाकारः, अतोलोपः (पां ६।४।४८।) इत्यकारलोपः, तस्य स्थानिवद्भावात् पूर्वस्य लघूपधगुणो न भवति। अकारस्य प्रत्ययस्वरेणोदात्तत्वं। अकेतवे, बहुव्रीहौ, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तो-

---

* शोणवर्णगत्योः भावकरणत्वात् करणे घञ्, ञित्त्वादाद्युदात्तः, का।
* योऽर्थ का।

## । ४ । आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।
## दधाना नाम यज्ञियं ।

दात्तत्वं। पेशः, नब्विषयस्यानिसन्तस्येत्याद्युदात्तः। मर्या, छन्दसि निष्टर्क्य देव हूय (पां ३।१।१२३) इत्यादौ म्रियतेर्निपातितः, आमन्त्रितनिघातः, असामर्थ्यात् पूर्वस्य न पराङ्गवद्भावः। अपेशसे, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तत्वं। सं, निपात आद्युदात्तः। उषद्भिः, उषशब्दो दाहे, ज्वलद्भीरश्मिभिः, लटः शत्रादेशे अपि प्राप्ते व्यत्ययेन शः, सार्वधातुकमपिदिति तस्य ङित्त्वाल्लघूपधगुणो न भवति, शस्य प्रत्ययस्वरेणोदात्तत्वं, उपरि शतुरदुपदेशाल्लसार्वधातुकानुदात्तत्वं, एकादेश उदात्तेनोदात्तः (पां ८।२।५) इत्युदात्तत्वं। अजायथाः, अजायतेत्यर्थे पुरुषव्यत्ययो निघातस्वरः॥ ३॥

चतुर्थीमृचमाह, आदहेति। अत्रास्ति विशेषविनियोगः, चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्रे आदह स्वधामन्विति द्वे ऋचौ, इन्द्रेण सं हि दृक्षस इत्येका, अयन्तृचः मरुत्स्तोत्रियस्तृचः, तथाच सूत्रितं, चतुर्विंशे होताजनिष्टेतिखण्डे, इन्द्रेण सं हि दृक्षसे, आदहस्वधामन्वित्येका द्वे चेति। यद्यप्येतदैन्द्रं सूक्तं, तथाप्यादहेत्यादिषु षट्सु मरुतो वर्ण्यन्ते, प्रायेणेन्द्रमरुत इत्यनुक्रमणिकायामुक्तत्वात्। आदित्ययमानन्तर्य्यार्थो निपातः। अहेत्यवधारणार्थः। आदह वृष्टेरनन्तरमेव, स्वधामनु इतः परं जनिष्यमाणमन्नमुदकमनुलक्ष्य मरुतो देवा गर्भत्वमेरिरे, मेघमध्ये जलस्य कर्त्तारं प्रेरितवन्तः, प्रतिसंवत्सरमेवं कुर्वन्त्विति दर्शयितुं पुनः शब्दः प्रयुक्तः। कीदृशा मरुतः, यज्ञियं यज्ञार्हं नाम दधाना धारयन्तः। सप्तसु गणेषु मरुतामीदृङ् चान्यादृङ् चेत्यादीनि यज्ञयोग्यानि नामान्यत्राम्नातानि। अन्ध इत्यादिष्वष्टाविंशतिसङ्ख्याकेष्वन्ननामसु कर्म चरसः स्वधेति पठितं। अर्ण इत्यादिष्वेकशतसङ्ख्याकेषूदकनामसु तेजः स्वधा अक्षरमिति पठितं। आत्, अह, निपातावाद्युदात्तौ। स्वं लोकं दधाति पुष्णातीति स्वधा, आतोऽनुपसर्गे कः (पां ३।२।३।) इति कः, कृदुत्तरपदप्रकृतिस्वरत्वं। अनु, पुनः शब्दौ निपातावाद्युदात्तौ। गर्भस्य भावो गर्भत्वं, प्रत्ययस्वरः। एरिरे, अन्तर्भावितण्यर्थादीरगतावित्यस्मादनुदात्तेतः परस्य लिटस्तस्येरेच्, चित्त्वादन्तोदात्तः, सहसुपेत्यत्र सुपेति योगविभागार्थं

। ५ । वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।
अविन्द उस्रिया अनु ।

आङा सह तिङ्समासेऽपि समासस्य (पां ६ । १ । २२३) इत्यन्तोदात्तत्वं, इजादेश्च गुरुमतोऽनृच्छः (पां ३ । १ । ३६) इति आम् न भवति, मन्त्रत्वात् । चशब्दयोगान्निघाताभावः, तुपश्यपश्यताहैः पूजायां (पां ८ । १ । ३९) इति निषेधात् । दधानाः, शानचश्चित्त्वादन्तोदात्तत्वे प्राप्ते, अभ्यस्तानामादिः (पां ६ । १ । १८९) इत्याद्युदात्तत्वं । यज्ञमर्हतीति यज्ञियं, यज्ञर्त्विग्भ्यां घखञौ (पां ५ । १ । ७।) इति घप्रत्ययः, आयनेयीनीयियः फढखछघां प्रत्ययादीनां (पां ७ । १ । २ ।) इतीयादेशः, प्रत्ययस्वरेणेकार उदात्तः ॥ ४ ॥

पञ्चमीमृचमाह, वीळु चिदिति । अस्ति किञ्चिदुपाख्यानं, पणिभिर्देवलोकाद् गावोऽपहृता अन्धकारे प्रक्षिप्ताः, ताश्चेन्द्रो मरुद्भिः सहाजयदिति । एतच्चानुक्रमणिकायां सूचितं, पणिभिरसुरैर्निगूढा गा अन्विष्टुं सरमा देवशुनीन्द्रेण प्रहिता; तामसुरैः पणयो मित्रीयन्तः प्रोचुरिति । मन्त्रान्तरे च दृष्टान्ततया सूचितं, निरुद्धा आपः पणिनेव गाव इति । तदेतदुपाख्यानमभिप्रेत्योच्यते, हे इन्द्र, वीळु चित् दृढमपि दुर्गमस्थानमारुजत्नुभिर्भञ्जद्भिः वह्निभिर्वोढृभिस्तत्र नेतुं समर्थैर्मरुद्भिः सहितस्त्वं, गुहा चित् गुहायामपि स्थापिता उस्रिया गा अन्वविन्दः, अन्विष्य लब्धवानसि । ओजः पाज इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु बलनामसु दक्षः वीळु सत्रमिति पठितं । नवसङ्ख्याकेषु गोनामसु अघ्न्या उस्रा उस्रिया इति पठितं । वीळु, प्रातिपदिकस्वरः । चित्, चादिरनुदात्तः । आरुजत्नुभिः, रुजो भङ्गे इत्यौणादिकः कत्नुच्प्रत्ययः, कित्त्वाद्गुणाभावः, चित्त्वादन्तोदात्तत्वं, समासे कृदुत्तरपदप्रकृतिस्वरत्वं । गुहा, सप्तम्या डादेशः, ग्रामादीनाञ्चेत्याद्युदात्तः । वह्निभिः, वहि श्रिश्रुयुद्रुग्लाहात्वरिभ्यो निदिति वहेर्नित्प्रत्ययः, नित्त्वादाद्युदात्तः । अविन्दः, शे मुचादीनां ( पां ७ । १ । ५९ ।) इति नुमागमः, लुङ् लङ् लृङ्क्ष्वडुदात्तः ( पां ६ । ४ । ७१ ।) इत्यडागमः, उदात्तश्च । वसन्तीत्युस्रियाः, वसेः कर्त्तरि रक् प्रत्ययः, सत्वाभावश्च बाहुलकाद् घनीयः । उक्तञ्च, पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च

१६। देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः।
महामनूषत श्रुतं।

तद्वृद्धमिति, इकारः प्रत्ययस्वरेणोदात्तः ॥ ५ ॥ इति प्रथमस्य प्रथमे एकादशो वर्गः ॥

युञ्जन्तीति सूक्ते षष्ठीमृचमाह, देवयन्त इति। देवयन्तो मरुत् सञ्ज्ञकान् देवानिच्छन्तो गिरः स्तोतार ऋत्विजः महां प्रौढं मरुद्गणमच्छा प्राप्तुमनूषत स्तुतवन्तः। कीदृशं मरुद्गणं, विदद्वसुं, वेदयद्भिः स्वमहिमप्रख्यापकैर्वसुभिर्धनैर्युक्तं। पुनः कीदृशं, श्रुतं विख्यातं। मरुद्गणस्य दृष्टान्तः, यथा मतिं. मन्तारमिन्द्रं यथा स्तुवन्ति तथेत्यर्थः। देवयन्तः, देवानात्मन इच्छन्तः, सुप आत्मनः क्यच् (पां ३। १। ८।) इति क्यच्प्रत्ययः, क्यचि च (पां ७। ४। ३३।) इतीत्वं, अकृत् सार्वधातुकयोर्दीर्घः (पा ७। ४। २५।) इति दीर्घत्वञ्च न भवति, न छन्दस्यपुत्रस्य (पां ७। ४। ३५।) इत्यनेन क्यचि यत् प्राप्तमीत्वं दीर्घत्वं वा तस्य सर्व्वस्य प्रतिषेधात्, यद्यपीत्वमेव प्रकृतं, तथापि व्यवहितस्यापि दीर्घत्वस्य प्रतिषेध इति विज्ञायते, अश्वायन्त इत्यादौ, अश्वाघस्यात् (पां ७। ४। ३७) इत्यात्वविधानादिति ह्युक्तं, क्यजन्ताच्छतृप्रत्ययः, क्यचश्चित्त्वादन्तोदात्तत्वं, शपः पित्त्वेन, शतुश्च लसार्वधातुकस्वरेणाद्युदात्तत्वे, एकादेश उदात्तेनोदात्तः (पां ८। २। ५) इत्युदात्तत्वं। यथा, प्रकारवचने थाल्, (पां ५। ३। २३) इति थाल्प्रत्ययः, लितीति प्रत्ययात् पूर्वमुदात्तत्वं। मतिं, मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः (पां ३। १। ९६।) इति क्तिन् प्रत्यय उदात्तश्च। मतिशब्दो ज्ञानपरोऽप्युपचाराज्ज्ञातरीन्द्रे वर्त्तते, अथवा पदान्तरे विशेष्यानुपादानादिन्द्रस्यैवैषा सञ्ज्ञा, ततश्च, क्तिच् क्तौ च सञ्ज्ञायां (पां ३। ३। १७४।) इति मन्यतेः कर्त्तरि क्तिच्, तस्योपदेशेऽनुदात्तत्वादिट्प्रतिषेधः, चित्त्वादन्तोदात्तत्वं। अच्छा, अध्याहृतगच्छत्यर्थयोगात्, अच्छगत्यर्थवदेषु (पां १। ४। ६९।) इति गतिसञ्ज्ञया सह निपातसञ्ज्ञाया अपि समावेशान्निपाता आद्युदात्ता इत्याद्युदात्तत्वं। विदद्वसुं, विदज्ञाने इत्यस्मादन्तर्भावितण्यर्थाच्छतृप्रत्यये विदन्त्यौदार्य्यातिशयवत्तया ज्ञापयन्ति वसूनि धनानि यं स विदद्वसुः, विदेः शतृप्रत्यये, अदिप्रभृतिभ्यः शपः (पां २। ४। ७२) इति शपो लुकि, प्रत्ययस्वरेण शतुरुदा-

। ७ । इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अबिभ्युषा ।
मन्दू समानवर्चसा ॥

त्त्वं, बहुव्रीहौ पूर्व्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । गृणन्ति स्तुवन्तीति गिरः, गृणातेः क्विपि, ऋत इद्धातोः (पां ७।१।१००।) इतीत्वं, रपरत्वं, धातुस्वरेणोदात्तत्वं। मघां, मघान्तं, मकारतकार-योर्लोपश्छान्दसः, प्रातिपदिकस्वरेणोदात्तत्वं । अनूषत, णु स्तुतौ, व्यत्ययेनात्मनेपदं, लुङि झस्य अदादेशः, सिचि कुटादित्वेन ङित्वाद् गुणाभावः, इडभाव उकारदीर्घत्वञ्च छान्दसं, निघातः। श्रुतं, प्रत्ययस्वरः ॥ ६ ॥

सप्तमीमृचमाह इन्द्रेण सं हीति। हे मरुद्गण, त्वं इन्द्रेण सञ्जग्मानः सङ्गच्छमानः सन्दृक्षसे हि, सम्यक् दृश्येथाः खलु, अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः। कीदृशेनेन्द्रेण, अबिभ्युषा, भीतिरहितेन। कीदृशाविन्द्रमरुद्गणौ, मन्दू, नित्यं प्रमुदितौ। पुनः कीदृशौ तौ, समानवर्चसा तुल्यदीप्ती। पुरा कदाचिद्वृत्रवधदशायां इन्द्रस्य सखायः सर्वे देवा वृत्रसेनापसारिताः, तदानीमिन्द्रस्य वृत्रसम्बन्धिसकलसेनाजयार्थं मरुद्भिः सङ्गमोऽभूत्, सोऽयमर्थो वृत्रस्य त्वाश्वसथादितिमन्त्रे सङ्गृहीतः, इन्द्रो वृत्रं हनिष्यन्निति ब्राह्मणे प्रपञ्चितश्च। इन्द्रशब्दः परमैश्वर्य्यवन्तं मरुद्गणं वाभिधत्ते, तदानीमिन्द्रस्य सम्बोधनं। वहिरेवाध्याहर्त्तव्यं। तथा चेयमृग्यास्केन व्याख्याता, इन्द्रेण सं हि दृक्षसे सञ्जग्मानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात् समानवर्चसेत्येतेन व्याख्यातमिति। सन्दृक्षसे सम्पश्येथाः, दृशेश्चेति वक्तव्यमित्यात्मनेपदं, दृशेर्लिङर्थे लेडितिप्रार्थनायां लेट्, थासःसे (पां ३।४।८०।) इति से, लेटोऽडाटौ (पां ३।४।९४।) इत्यडागमः। सिब्बहुलं लेटि (पां ३।१।३४।) इति सिप्, सम्प्रापूर्वको विधिरनित्य इति गुणाभावः। व्रश्चादिना षत्वं, षढोः कः सि, (पां ८।२।४१।) इति कत्वं, आदेशप्रत्यययोः (पां ८।३।५९।) इति सिपः सस्य षत्वं, बहुलग्रहणात् सिपः परत्वाच्छबपि भवति, सिपा व्यवधानात् पश्यादेशो न भवति। शपः पित्त्वादनुदात्तत्वं, उत्तरस्य लसार्वधातुकानुदात्तत्वं, धातुस्वर एव शिष्यते, हिशब्दयोगात्, तिङ्ङतिङ इति निघातो न भवति, हि च, (पां ८।१।३४) इति प्रतिषे-

। ८ । अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति ।
गणैरिन्द्रस्य काम्यैः ॥

धात्। सञ्जग्मानः, गमेः सम्पूर्वात्, छन्दसि, लुङ् लङ् लिटः, (पां ३। ४। ६) इति वर्त्तमाने लिट्, समो गम्यृच्छीत्यादिनात्मनेपदविधानाल्लिटः कानज्वेति लिटः कानजादेशः, द्विर्भावो, हलादिशेषोऽभ्यासस्य चुत्वं, गमहनेत्युपधालोपः, कानचश्चित्त्वादन्तोदात्तत्वं, गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वं। अबिभ्युषा, ञिभीभये, पूर्ववल्लिट्, शेषात् कर्त्तरि परस्मैपदं, क्वसुश्च (पां ३। २। १०७।) इति लिटः क्वसुरादेशः, तस्य कित्त्वाद्गुणाभावः, अभ्यासस्याचाञ्जश्त्वञ्च, क्रादिनियमात् प्राप्तइट्, वस्वेकाजाद्घसां (पां ७। २। ६७।) इति नियमान्निवर्त्तते, नञ्समासे तृतीयैकवचने सति भत्वात्, वसोः संप्रसारणं (पां ६। ४। १३१।) इति वकारस्य उकारः, सम्प्रसारणाच्च (पां ६। १। १०८।) इति पूर्वरूपत्वं, शासि वसि घसीनाञ्च (पां ८। ३। ६०।) इति षत्वं, इयङादेशं बाधित्वा, एरनेकाचोऽसंयोगपूर्वस्य (पां ६। ४। ८२।) इति यणादेशः, अव्ययपूर्वपदप्रकृतिस्वरत्वं। पूर्वेण पदेन सह संहितायामेकारस्य, एङः पदान्तादति (पां ६। १। १०९।) इति परपूर्वत्वे प्राप्ते, प्रकृत्यान्तः पादमव्यपरे (पां ६। १। ११५।) इति प्रकृतिभावः। मन्दू, मति स्तुतिमोद मद स्वप्नकान्ति गतिषु, इदितोनुमधातोः (पां ७। १। ५८।) इति नुमागमः, कुरित्यनुवृत्तौ कुः, घुङ् पीयु नीलङ् लिङ्गित्यत्राविभक्तिकनिर्देशात् हन्तेर्हिंगुरितिवत् धात्वन्तरादपि कुरित्युक्तं, प्रत्ययस्वरेणोदात्तः, द्विवचनमौ, प्रथमयोः पूर्वसवर्णः (पां ६। १। १०२।) इति पूर्वसवर्णदीर्घः, तृतीयैकवचने चेत्, सुपांसुलुगित्यादिना पूर्वसवर्णदीर्घत्वं। समानवर्चसा, समानं वर्चो ययोरिति यस्येति वा बहुव्रीहिः, द्विवचने सुपांसुलुगित्यादिना द्विवचनस्थाने आकारादेशः, समानपदस्य प्रातिपदिकान्तोदात्तत्वं, बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण तदेवावशिष्यते। ७॥

अष्टमीमृचमाह अनवद्यैरिति। मखः प्रवर्त्तमानोऽयं यज्ञः, अनवद्यैर्दोषरहितैरभिद्युभिर्द्युलोकमभिगतैः, काम्यैः फलप्रदत्वेन कामयितव्यैर्गणैर्मरुत्समूहैः सहितस्येन्द्रस्य सहस्वद्बलोपेतं यथा भवति तथार्चति पूजयति, अयं यज्ञो मरुत इन्द्रञ्चातिशयेन प्रीणयतीत्यर्थः।

१ ९ १ अतः परिज्मन्नागहि दिवो वा रोचनादधि १
समस्मिन्नृञ्जते गिरः ॥

यज्ञ इत्यादिषु पञ्चदशसु यज्ञनामसु मखः विष्णुरिति पठितं। चतुश्चत्वारिंशत्सु * पूजानामस्वर्चति गायतीति पठितं। अनवद्यैः, न विद्यतेऽवद्यं पापं येषां तेऽनवद्याः, तैः, नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं। अभिद्युभिः, अभिगता द्यौर्यैस्तेऽभिद्यवस्तैः, अभिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। मखः प्रातिपदिकस्वरः। सहो बलमस्मिन्नर्चने कर्म्मण्यस्तीति सहस्वत्, तसौ मत्वर्थे (पां १।४।१९।) इति भसञ्ज्ञया पदसञ्ज्ञाया बाधितत्वात् सकारस्य रुत्वाभावः, मादुपधायाश्च मतोर्वोऽयवादिभ्यः (पां ८।२।९।) इति मतुपो मस्य वत्वं, सहस्शब्दो गम्विषयानिसन्तस्येत्याद्युदात्तः, मतुपः पित्त्वात् स एव शिष्यते। काम्यैः, कमेर्णिङ्, अत उपधायाः (पां ७।२।११६।) इति वृद्धिः, जनि जृष् क्नसुरञ्जो मन्ताश्चेत्यमन्तत्वेन प्राप्तस्य मित्त्वस्य, न कम्यमिचमामिति प्रतिषेधान्मितां ह्रस्व इत्युपधाह्रस्वत्वं न भवति, ण्यन्तादचो यत्, णिलोपः, तित्स्वरितमिति प्राप्ते, यतो नावः (पां ६।१।२१३) इत्याद्युदात्तत्वं ॥ ८ ॥

नवमीमृचमाह अतः परिज्मन्निति। हे परिज्मन् परितो व्यापिन् मरुद्गण, अत एतस्मान्मरुद्गणस्थानादन्तरिक्षादागहि, अस्मिन् कर्म्मण्यागच्छ, दिवो वा द्युलोकाद्वा समागच्छ, रोचनादधि दीप्यमानादादित्यमण्डलाद्वा समागच्छ, अस्मदीये कर्म्मकाले यत्र यत्र तिष्ठसि, ततः सर्व्वस्मादागच्छेत्यर्थः। किमर्थमागमनमिति तदुच्यते, अस्मिन् कर्म्मणि वर्त्तमाना ऋत्विजो गिरः स्तुतीः समृञ्जते सम्यक् प्रसाधयन्ति। ऋञ्जतिः प्रसाधनकर्म्मेति यास्कः। एतत्स्तुतीः श्रोतुमागच्छेत्यर्थः। यद्यपि ऋत्विजा मन्त्रस्य प्रयुज्यमानत्वात्, ऋञ्जतिधातोरुत्तमपुरुषेण भवितव्यं, तथापि परोक्षकृतत्वेन निर्द्देशात् प्रथमपुरुषप्रयोगः। परोक्षकृतलक्षणञ्च यास्क आह, तास्त्रिविधा ऋचः, परोक्षकृताः, प्रत्यक्षकृता आध्यात्मिक्यश्च। तत्र परोक्षकृताः सर्व्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्येति। अतः, पञ्चम्यास्तसिल्, एतदस्त्रतसोस्त्रतसौ चा-

* अर्चतिकर्म्मसु, का, भं।

११० इतो वा सातिमीमहे दिवो वा पार्थिवादधि।
इन्द्रं महो वा रजसः॥ १२ ॥

नुदात्तौ (पां २।४।३२।) इत्यनुदात्तोऽश्, अशः, शित्वात् सर्वादेशः, ञिति (पां ६।१।१९७।) इति प्रत्ययात् पूर्वस्योदात्तत्वं। परिज्मन्, अज गतिक्षेपणयोः, अन्येभ्योऽपि दृश्यन्ते (पां ३।२।७५।) इति मनित्, अकारलोपश्छान्दसः, आमन्त्रितनिघातः। गहि, गमेर्बहुलं छन्दसीति शपोलुक्, हेर्ङित्वादनुदात्तोपदेश इत्यादिना मलोपः, अतोहेरिति हिलोपो न भवति, तस्मिन् कर्त्तव्ये असिद्धवदत्राभादिति मलोपस्यासिद्धत्वेनानकारान्तत्वात्। दिवः, ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। वा, चादयोऽनुदात्ता इत्यनुदात्तः। रोचनात्, रुच दीप्तौ, अनुदात्तेतश्च हलादेः (पां ३।२।१४९।) इति युच्, युवोरनाकौ (पां ७।१।१।) इत्यनादेशः, चितइत्यन्तोदात्तः, अधि, अधिपरी अनर्थकौ (पां १।४।९३।) इति कर्म्मप्रवचनीयत्वेन सह निपातसञ्ज्ञायाः समावेशान्निपाता आद्युदात्ता इत्याद्युदात्तत्वं। अस्मिन्, अत्रः परिज्मन्नित्यादिष्टस्यैवान्वादेशात्, इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादावित्यश् अनुदात्तः, शित्त्वात् सर्वादेशः, विभक्तेरनुदात्तौ सुप्पितावित्यनुदात्ततेति सर्वानुदात्तत्वं। ऋञ्जते, ऋजि भृजि वृजि वर्जने, समित्युपसर्गयोगात् प्रसाधने वर्त्तते, निघातः। गिरः प्रातिपदिकस्वरः॥ ९॥

दशमीमृचमाह इतो वेति। इन्द्रं देवं प्रति सातिं धनदानं अधीमहे आधिक्येन याचामहे, कस्माल्लोकादिति तदुच्यते, इतोऽस्मादभिदृश्यमानात् पार्थिवात् पृथिवीलोकाद्वा, दिवो वा द्युलोकाद्वा, महो महतः प्रौढाद्रजसो वा पक्ष्यादीनां रञ्जकादन्तरिक्षलोकाद्वायमिन्द्रो यतः कुतश्चिदानीयास्मभ्यं धनं प्रयच्छत्वित्यर्थः। सप्तदशसु याञ्चाकर्म्मसु ईमहे याचामीति पठितं। इतः, इदम्शब्दात् पञ्चम्यास्तसिल्, इदम इश् (पां ५।३।३।) इतीश्, शित्त्वात् सर्वादेशः, अत्र ऊडिदमित्यस्यावकाशः, आभ्यामेभिः, ञितीत्यस्यावकाशः, पचनं पाचकः उभावपि नित्यौ, तत्र परत्वाद्विप्रतिषेधे परं कार्य्यं, (पां १।४।२) इतिसमबलविरोधे परस्य कार्य्यत्वविधानादिति ञितीतीकारस्योदात्तत्वं, पश्चात् तसेः, प्राक् दिशो विभक्तिरिति विभक्ति-

सप्तमकत्वात्, ऊडिदमित्यादिना असर्वनामस्थानविभक्तेरथमागमु-
दात्तत्वं भवति, सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति, परि-
भाषया ऊडिदमित्यस्य पुनरप्रवृत्तिरेवेति चेन्न, लक्ष्यानुरोधेन पुनःप्रसङ्ग-
विज्ञानश्चेति स्वीकारात् । नन्वेवं यतस्ततइत्यादावपि परेण लित्स्वरेण
बाधितमपि, सावेकाच इति तसिल उदात्तत्वं स्यादिति चेन्न, यत्त-
च्छब्दयोर्न गोश्वन् साववर्णेति निषेधात्, न च पुनः प्रसङ्गविज्ञानं च
इत्येतत् सार्व्वत्रिकं, लक्ष्यानुरोधेन क्वचिदेव तदाश्रयणादिति । सातिं-
षणुदाने, धात्वादेः षः सः (पां ६ । १ । ६४ । ) इति षस्य सः, भावे-
क्तिन्, जनसनखनां सञ्झलोः ( पां ६ । ४ । ४२ । ) इति नकार
स्यात्वं । तितुत्रतथसिसुसरकसेषु चेति निषेधादिट् न भवति, नित्स्वरे
प्राप्ते उदात्त इत्यनुवृत्तौ, ऊति यूति जूति साति हेति कीर्त्तयश्च (पां ३ ।
३ । ९७) इति निपातनादन्तोदात्तत्वं । ईमहे, ईङ्गतौ, याचनेऽपि,
बहुलं छन्दसीति लुक्, अस्य धातोर्ङित्त्वात्, तास्यनुदात्तेन्ङिददुपदे-
शाल्लसार्व्वधातुकस्यानुदात्तत्वे धातुस्वर एव शिष्यते। न च तिङ् तिङ-
इति निघातः, च वा योगे प्रथमेति निषेधात्, उत्तरवाक्ययोरपि हि वा
शब्दयोगात्,अन्यथा वाक्यापरिपूर्त्तेस्तिङ्विभक्तेरवश्यमध्याहारात्तद-
पेक्षयैषा प्रथमा तिङ्विभक्तिरिति । दिवः, ऊडिदमित्यादिना विभ-
क्तेरुदात्तत्वं । पार्थिवात्, प्रथ ख्यापने, प्रथत इति पृथिवी, प्रथेः षिवन्
सम्प्रसारणञ्चेति षिवन् प्रत्ययः, सम्प्रसारणञ्चोणादिसिद्धं, षिद्गौरा-
दिभ्यश्च ( पां ४ । १ । ४१ । ) इति ङीष्, प्रत्ययस्वरेणोदात्तः, । शेष-
निघातेनानुदात्तादिः, पार्थिवशब्दस्य पृथिवीविकार इत्यर्थे, ओरञ्
(पां ४ । ३ । १३९ ।) इत्यनुवृत्तेः, अनुदात्तादेश्च (पां ४ । ३ । १४० ।)
इत्यञ्, यस्येति च ( पां ६ । ४ । १४८ । ) इति इकारलोपः, तद्धिते
ष्वचामादेः (पां ७ । २ । ११७ ।) इति वृद्धीरपरत्वं, ञ्नित्यादिर्नित्यं-
(पां ६ । १ । १९७) इत्याद्युदात्तः । अधि, निपातत्वादाद्युदात्तः । इन्द्रं,
रन्प्रत्ययान्त आद्युदात्तः। मत्तः, मदत इत्यस्याकारतकारयोर्लोपश्छा-
न्दसः, सावेकाचः (पां ६ । १ । १६८) इति विभक्तेरुदात्तत्वं । रभसः,
नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वं । १० । इति प्रथमस्य प्रथमे
द्वादशो वर्गः ।

## सप्तमसूक्तं।

१ १ १ इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।
इन्द्रं वाणीरनूषत ॥ *

इन्द्रमित्यादिकं दशर्चं सूक्तं, तत् सुरूपकृत्नुमित्यादिषु चतुर्थं, ऋषिच्छन्दो देवता विनियोगश्च पूर्ववत्, विशेषस्तूच्यते, महाव्रते निष्केवल्यशस्त्रमिन्द्रमिद्गाथिन इति सूक्तं, तथा पञ्चमारण्यके सूत्रितं, शिरो गायत्रमिन्द्रमिद्गाथिन इति, तथा चतुर्विंशेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे इन्द्रमिद्गाथिन इतिषडहस्तोत्रीयस्तृचः, चतुर्विंशे होताजनिष्टेत्युपक्रम्यायाहि सुषुमाहित इन्द्रमिद्गाथिनो बृहदिति सूत्रितत्वात्, अतिरात्रे प्रथमे पर्य्याये अच्छावाकशस्त्रेऽयमेव तृचोऽनुरूपः, सूत्रितञ्च, इन्द्रायमद्वने सुतमिन्द्रमिद्गाथिनो बृहदिति, तत्र प्रथमामृचमाह इन्द्रमिदिति । गाथिनो गीयमानसामयुक्ता उद्गातार इन्द्रमिदिन्द्रमेव, बृहत् त्वामिद्धि हवामह इत्यस्यामृचि उत्पन्नेन बृहन्नामकेन साम्ना, अनूषत स्तुतवन्तः । अर्किणः, अर्चनहेतुमन्त्रोपेता होतारः, अर्केभिरृग्रूपैर्मन्त्रैरिन्द्रमानूषत । येत्ववशिष्टा अध्वर्य्यवस्ते वाणीर्वाग्भिर्यजूरूपाभिरिन्द्रमेवानूषत । अर्कशब्दस्य मन्त्रपरत्वं यास्केनोक्तं, अर्को मन्त्रो भवति यदेनेनार्चन्तीति । श्लोकइत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु वाणी वाशीति पठितं । गाथिनः, उषि कुषि गर्त्तिभ्यस्थन्निति गायतेस्थन्प्रत्ययः, नित्त्वादाद्युदात्तः, गाथा एषां सन्तीति गाथिनः, व्रीह्यादिभ्यश्च (पां ५ । २ । ११६) इतीन् प्रत्ययः, प्रत्ययस्वरेणेकारउदात्तः, स च सति शिष्टः । बृहत्, बृहता, तृतीयैकवचनस्य, सुपांसुलुगिति लुक्, वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्चेतिसूत्रवार्त्तिके नान्तोदात्तो निपातितः । अर्केभिः, अर्क पूजायां, अर्चन्त एभिरर्का मन्त्रास्ते, पुंसि सञ्ज्ञायां घः प्रायेण (पां ३।३।११८।) इति घः, चजोः कुघिण्ण्यतोः (पां ७। ३ । ५२ ।) इति कुत्वं, प्रत्ययस्वरेणान्तोदात्तः बहुलं छन्दसीति भिस ऐसादेशो न भवति । अर्काः स्तुतिसाधनभूता मन्त्रा एषां सन्तीत्यर्किणः । वाणीः, वृषादीनाञ्च (पां ६ । १ । २०३) इत्याद्युदात्तः, दीर्घाज्जसि च (पां ६ । १ ।१०५ ) इति पूर्वसवर्णदीर्घनिषेधस्य, वा छन्दसि ( ६ । १ । ६ ) इति विकल्पितत्वाद्दीर्घत्वं, तृतीयार्थे प्रथमा । अनूषत,

* बृहदितिवर्गीयबकारो लिखितादर्शपुस्तकद्वये । विं, मं, कां ।

। २ । इन्द्र इद्धर्य्योः सचा संमिश्ल आ वचोयुजा ।
इन्द्रो वज्री हिरण्ययः ॥

। ३ । इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि ।
वि गोभिरद्रिमैरयत् ॥

णु स्तुतौ, णोनः ( पां ६ । १ । ६५ । ) इति नत्वं, लुङि व्यत्ययेनात्मनेपदं, झस्यादादेशः, सिच इडभावः, उकारस्य दीर्घत्वञ्च छान्दसं, नुधातोः कुटादित्वात् सिचो ङित्त्वेन गुणाभावः ॥ १ ॥

द्वितीयामृचमाह, इन्द्र इद्धर्य्योरिति । इन्द्र इत् इन्द्र एव हि हर्य्योर्हरिनामकयोरश्वयोः सचा सह युगपत् आसंमिश्लः सर्वतः सम्यङ्मिश्रयिता । कीदृशयोर्हर्य्योः, वचोयुजा इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः, सुशिक्षितयोरित्यर्थः, अयमिन्द्रो वज्री वज्रयुक्तः। हिरण्ययः सर्वाभरणभूषित इत्यर्थः । हर्य्योः, हरत इति हरी इन्, नित्त्वादाद्युदात्तः। सचा सहेत्युक्तं। मिश्रणं मिश्रः, मिश्रयतेर्घञ्, सम्यक् मिश्रो यस्यासौ संमिश्रः, लत्वं छान्दसं, सम्यङ्मिश्रयितेत्यर्थः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । वचसा युज्येते इति वचोयुजौ तयोः, षष्ठीद्विवचनस्य, सुपां सुलुगित्याकारादेशः। युजाशब्दो धातुस्वरेणान्तोदात्तः, कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। वज्री, वज्रमस्यास्तीति, अत इनिठनौ ( पां ५ । २ । ११५ । ) इति इनि प्रत्ययः, प्रत्ययस्वरः । हिरण्ययः, ऋत्व्यवास्त्व्यवास्त्वमाध्वी हिरण्ययानि छन्दसि, (पां ६ । ४ । १७५) इति हिरण्मयशब्दस्य मकारलोपो निपात्यते, प्रत्ययस्वरेणोदात्तः, पूर्व्वेणानुदात्तेन सह, एकादेश उदात्तेनोदात्तः (पां ८ । २ । ५) इत्युदात्तः ॥ २ ॥

तृतीयामृचमाह, इन्द्रो दीर्घायेति । अयमिन्द्रो दीर्घाय प्रौढाय निरन्तराय चक्षसे दर्शनाय दिवि द्युलोके सूर्य्यमारोहयत्, पुरा वृत्रासुरेण जगति यदापादितं तमः तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थं आदित्यं द्युलोके स्थापितवानित्यर्थः । स च सूर्य्यो गोभिः स्वकीयरश्मिभिरद्रिं पर्वतमुखं सर्वं जगत् व्यैरयत् विशेषेण दर्शनार्थं प्रेरितवान् प्रकाशितवानित्यर्थः । अथवा इन्द्र एव गोभिर्जलैर्निमित्तभूतैरद्रिं मेघं व्यैरयत् विशेषेण प्रेरितवान् । पञ्चदशसङ्ख्याकेषु रश्मिनामसु खेदयः किरणा गाव इति पठितं । त्रिंशत्सङ्ख्याकेषु मेघनामसु

१ ४ १ इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च १
उग्र उग्राभिरूतिभिः ११

१ ५ १ इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे १
युजं वृत्रेषु वज्रिणं ११ १३ ११

अद्रिः ग्रावेति पठितं। दीर्घाय, प्रातिपदिकस्वरेणान्तोदात्तः। चक्षसे, चक्षतेः सर्वधातुभ्योऽसुन्नित्यसुन्, बहुलग्रहणात् ख्याञादेशाभावः, नित्त्वादाद्युदात्तः। सूर्य्यं, सुवति प्रेरयतीति सूर्य्यः, षू प्रेरणे, धात्वादेः षः सः, राजसूयसूर्य्य (पां ३।१।११४।) इत्यादिना क्यप्प्रत्ययः, तस्य रुडागमश्च निपात्यते, क्यपः कित्त्वाद्गुणाभावः, पित्त्वादनुदात्तत्वं, धातुस्वर एव शिष्यते। रोहयत्, रुहेर्ण्यन्ताल्लङि, बहुलं छन्दस्यमाङ्योगेऽपि (पां ६।४।७५) इत्यड्भावो निघातश्च। दिवि, ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। अद्रिं, अदिशदिभूशुभिभ्यः क्रिन्निति क्रिन्प्रत्ययः, अदन्ति पशवस्तृणान्यत्रेत्यद्रिः, नित्त्वादाद्युदात्तत्वं। ऐरयत्, ईर गतौ, ण्यन्ताल्लङ्, निघातः ॥ ३ ॥

चतुर्थीमृचमाह इन्द्र वाजेष्विति। हे इन्द्र उग्रः शत्रुभिरप्रधृष्यस्त्वं, उग्राभिरप्रधृष्याभिरूतिभिरस्मद्विषयरक्षाभिर्वाजेषु युद्धेषु नोऽस्मान् अव रक्ष, तथा सहस्रप्रधनेषु च सहस्रसङ्ख्याकेषु गजाश्वादिलाभयुक्तेषु महायुद्धेष्वपि रक्ष। वाजेषु, वृषादीनां चेत्याद्युदात्तत्वं। नः, नसः सकारस्य रुत्वोत्वगुणेषु, प्रकृत्यान्तः पादमव्यपरे (पां ६।१।११५) इति प्रकृतिभावो न भवति, अव्यपरे इति निषेधात्। अव, अव रक्षणे, तिङ्ङतिङः (पां ८।१।२८) इति निघातः। यद्यपि सहस्रप्रधनेषु चावेत्यध्याहृतां क्रियामपेक्ष्य प्रथमायाः श्रूयमाणायाः अवेतिक्रियायाः, च वायोगे प्रथमेति निघातनिषेधः प्राप्तस्तथापि वाजेष्वित्यत्र चकारस्य लुप्तत्वाच्चादिलोपे विभाषेति निषेधस्य विकल्पितत्वादत्र निघातः प्रवर्त्तते। सहस्रशब्दः कर्दमादीनाञ्चेति मध्योदात्तः, सहस्रप्रधनेषु बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। ऊतिभिः, ऊति यूतीत्यादिना क्तिन्नुदात्तः ॥ ४ ॥

पञ्चमीमृचमाह, इन्द्रं वयमिति। वयमनुष्ठातारः महाधने प्रभूतधननिमित्तमिन्द्रं हवामहे आह्वयामः, अर्भे अर्भके स्वल्पेऽपि धने निमित्तभूते

। ६ । स नो वृषन्नमुं चरुं सत्रादावन्नपावृधि ।
अस्मभ्यमप्रतिष्कुतः ॥

सति इन्द्रं हवामहे । कीदृशमिन्द्रं, युजं सहकारिणं समाहितं वा । पुनः कीदृशं, वृत्रेषु शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय वज्रिणं वज्रोपेतं । महाधनशब्दो यद्यपि सङ्ग्रामनामसु पठितस्तथापि महत्त्ववचनमत्र सङ्ग्राम इति बहुव्रीहित्वेऽन्तोदात्तत्वासिद्धेर्नात्र तद्गृहीतं । महाधने, महच्च तद्धनञ्चेति, समासस्येत्यन्तोदात्तः । अर्भे, ऋधिदृभ्यां भन्, नित्त्वादाद्युदात्तः । हवामहे, ह्वेञ् स्पर्द्धायां शब्दे च, ञित्त्वात् कर्त्रभिप्राये आत्मनेपदं, लटः स्थाने महिङ्, टित आत्मनेपदानां टेरे (पां ३।४।७९।) इति टेरेत्वं, कर्त्तरि शप्, ह्वः सम्प्रसारणमित्यनुवृत्तौ, बहुलं छन्दसीति सम्प्रसारणं, वकारस्य उकारः, परपूर्वत्वं, गुणावादेशौ, अतो दीर्घो यञि (पां ७।३।१९।) इति दीर्घत्वं, तिङ्ङतिङ इति निघातः । युजं, युज समाधावित्यस्य क्विप्, युजेरसमासे (पां ७।१।७१।) इति नुम् न भवति, सहि युजेरिति निर्देशादिकाररहितस्य न भवति, अनित्यमागमशासनमिति वा युजिर्योग इत्यस्यापि नुम् न भवति । वृत्रेषु, वृतु वर्त्तने, प्रतिकूलतया वर्त्तन्त इति वृत्राणि शत्रुकुलानि, स्फायि तञ्चि वञ्चीत्यादिना रक्प्रत्ययः, कित्त्वाद्गुणाभावः, प्रत्ययस्वरः । वज्रिणं, अत इनि ठनौ (पां ५।२।११५। इति इनिः, प्रत्ययस्वरः ॥५॥ इति प्रथमस्य प्रथमे त्रयोदशवर्गः ॥

इन्द्रमिद्गाथिन इति सूक्ते षष्ठीमृचमाह, स नो वृषन्नमुमिति । हे सत्रादावन् अस्मदभीष्टानां सर्वेषां फलानां सहप्रदातः, अतो व्रीह्यादिनिष्पत्त्यर्थं हे वृषन् वृष्टिप्रदेन्द्र, नोऽस्मदर्थममुं दृश्यमानं चरुं मेघमपावृधि उद्घाटय, तथैवास्मभ्यमस्मदर्थं अप्रतिष्कुतः, प्रतिशब्दरहितो यद्यदस्माभिर्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति, अतोऽस्मद्विषये कदाचिदप्यस्खलितः । एतदेवाभिप्रेत्य यास्क आह, अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वेति । वृषन्, आमन्त्रितनिघातः । अमुं, प्रातिपदिकस्वरेणान्तोदात्तः । चरुं, चरतीति चरुः, भृ मृ शी तॄ चरि त्सरि तनि धनि मि मस्जिभ्य उरित्युप्रत्ययः, प्रत्ययस्वरेणान्तोदात्तः । सत्रादावन्, सत्राशब्दः सहार्थे, अभितः फलजातं सत्रा

१७। तुञ्जे तुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः।
न विन्धे अस्य सुष्टुतिं ॥

सत्र ददातीति सत्रादावा, आतो मनिन् क्वनिब्वनिपश्च ( पां ३।२।७४।) इति वनिप्, आमन्त्रितस्य च ( पां ६।१।१९८।) इत्याद्युदात्तत्वं, पादादित्वान्न निघातः। अप, निपातस्य च ( पां ६।३।१३६।) इति दीर्घः, निपात आद्युदात्तः। वृधि, वृञ् वरणे, लोटः सिप्, तस्य, सेर्ह्यपिच्च ( पां ३।४।८७।) इति हिः, स्वादिभ्यः श्नुः, तस्य, बहुलं छन्दसीति लुक्, श्रुशृणुपॄकृवृभ्यश्छन्दसि ( पां ६।४।१०२।) इति हेर्धिरादेशः, तस्य ङित्त्वात् पूर्वस्य गुणाभावः, निघातः। अस्मभ्यं, अस्मच्छब्दाद्भ्यसोऽभ्यमिति भ्यमादेशः, शेषेलोपः ( पां ७।२।९०।) इति दकारलोपः, बहुवचने झल्येदित्येत्वं न भवति, अङ्गवृत्तौ * पुनर्वृत्तिरविधिरित्युक्तत्वात्, प्रातिपदिकस्वरेण मेत्यकार उदात्तः, भ्यसोऽभ्यमित्यभ्यमादेशपक्षे, शेषे लोप इति मपर्य्यन्तशेषस्याद: शब्दस्य लोपः, तदा उदात्तनिवृत्तिस्वरेण अभ्यमादेरकारस्योदात्तत्वं। अप्रतिष्कुतः, केनचिदप्रतिशब्दितः, कुङ् शब्दे, निष्ठा ( पां ३।२।१०२।) इति कर्म्मणि क्त प्रत्ययः, प्रतेः प्राक्प्रयोगः, पारस्करादेराकृतिगणत्वात् सुडागमः, सुषामादेराकृतिगणत्वात् षत्वं, नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं ॥ ६ ॥

सप्तमीमृचमाह तुञ्जे तुञ्जे य इति। तुञ्जे तुञ्जे तस्मिन् फलदातरि देवान्तरे ये स्तोमाः स्तोत्रविशेषाः उत्तरे उत्कृष्टाः सन्ति तैस्तोमैः सर्वैरपि, अस्य वज्रिणो वज्रयुक्तस्येन्द्रस्य सुष्टुतिं योग्यां शोभनस्तुतिं न विन्धे न विन्दामि, इन्द्रस्यात्यन्तगुणबाहुल्येन देवान्तरेषूत्तमत्वेन प्रसिद्धान्यपि स्तोत्राणि न पर्य्याप्तानीत्यर्थः। एतामृचं यास्क एवं व्याचष्टे, तुञ्जे तुञ्जे, तुञ्जतेर्दानकर्म्मणः दाने दाने तुञ्जे तुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिस्तुतेरिति। तुञ्जे तुञ्जे तुञ्जतिर्दानकर्म्मेत्युक्तं, ततः कर्त्तरि पचाद्यच्, चित इत्यन्तोदात्तत्वं, नित्यवीप्सयोरिति द्विर्भावः, तस्य परमाम्रेडितमिति द्वितीयस्याम्रेडितसञ्ज्ञा, अनुदात्तञ्चेत्यनुदात्तत्वं। दातरि दातरीत्यर्थः, निरुक्ते तु दाने दानेऽर्थतो व्याख्यानं। उत्तरे, तुप्रवनतरपयोः भावे,

---

* अकृत्स्नोपुनर्वृत्तावविधिर्निष्ठितस्येत्युक्तं, कां, खं,।

ऋदोरप् ( पां ३ । ३ । ५७ । ) इत्यप्, उच्छब्द उत्कृष्टवचनः, उत्कृष्ट-स्तवो यस्येति बहुव्रीहिः, उच्छब्दो निपाता आद्युदात्ता इत्याद्युदात्तः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । स्तोमाः, स्तौतेः, अर्त्तिस्तुसुहुसृधृ-क्षि क्षुभेत्यादिना स्तोमशब्दो मन्नन्तो, नित्त्वादाद्युदात्तः । विन्दे, विद्लृ-लाभे, लट् स्वरितेत्त्वादात्मनेपदं, उत्तमैकवचनं, तुदादिभ्यः शः ( पां ३ । १ । ७७ । ) इति शः, शेमुचादीनां ( पां ७ । १ । ५९ । ) इति नुम्, दकारस्य व्यत्ययेन धकारः, अस्य प्रकृतस्येन्द्रस्य परामर्शादन्वादेशे, इदमोऽश्, शित्त्वात् सर्व्वादेशोऽनुदात्तः । सुष्टुतिं, ष्टुञ् स्तुतौ, धात्वादेः षः सः ( पां ६ । १ । ६४ । ) इति सत्वं, स्त्रियां क्तिन् ( पां ३ । ३ । ९४ । ) इति भावे क्तिन्, सु इत्युदात्तेनोपसर्गेण प्रादिसमासः, उपसर्गात् सुनोति ( पां ८ । ३ । ६५ । ) इत्यादिना षत्वं, अत्राव्ययपूर्वपद-प्रकृतिस्वरत्वेन सोः प्राप्तमुदात्तत्वं बाधित्वा, गतिकारकोपपदात् कृत् इत्युत्तरपदप्रकृतिस्वरेण धातोरुदात्तत्वे प्राप्ते, तदपवादेन, तादौ च नि-तिकृत्यतावित्यनन्तरस्य गतिसञ्ज्ञकस्य सोरेवोदात्तत्वेन भवितव्यं, तत्तु मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीता इत्युत्तरपदान्तो-दात्तत्वेन बाध्यते, तथाच सुहवां सुष्टुतीं हुवे * [illegible]चोदस्व सुष्टुतिं यातोराचे सुमतय इत्यादावन्तोदात्तत्वमित्याहुः, यथा तु मन्क्ति-न्नित्यादौ वृत्तावुक्तं, तथैव तत्र घटत इति उच्यते, तत्र हि, कार-काद्दत्तश्रुतयोरेवाशिषीत्यतः कारकादित्यनुवृत्तेः पाणिनिकृतिरित्यादा-वेव मन्क्तिन्नित्यादिसूत्रमित्युक्तं, कारकादित्येव प्रकृतिः प्रहृति-रिति प्रत्युदाहृते, स्यादेतत्, स्तूयते अनयेति स्तुतिरिति क्तिना कर-णभूता ऋगभिधीयते, सुशब्देन च करणमेव विशेष्यते न धात्वर्थः, सुष्टुतिरित्यत्र सुशब्दः कारकपर एव भविष्यति, प्रकृतिः प्रहृतिरि-त्यादौ तु प्रशब्दो धात्वर्थे विशेषणमेवेति तत् प्रत्युदाहरणोपपत्तिरिति, न, एवं सति सुशब्दस्य क्रियायोगाभावादुपसर्गाः क्रियायोग इत्युक्ता उपसर्गसञ्ज्ञा न स्यात्, तथाच उपसर्गात् सुनोति सुवतीत्यादिना षत्वं न स्यात् । ननु क्तिना करणमभिधीयते, क्रियासाधनञ्च करणं, तथाच करणविशेषणस्यापि सुशब्दस्य करणान्तर्गतक्रियायोगादुपसर्गता भवि-ष्यतीति, न, तथा सति यत् क्रियायुक्ताः प्रादयस्तं प्रत्येवगत्युपसर्ग-

---

* हवे इति कां पं।

P

सञ्ज्ञायाः स्तुरिति करोत्यर्थमेव प्रति सोऽस्योपसर्गता । नतु स्तुधात्वर्थं प्रतीत्यास्य षत्वं न स्यादेव । ननु स्तुधात्वर्थद्वारैव तत्करणस्य सुशब्दो विशेषणं भविष्यति, यापि हि शोभना स्तुतिस्तत्करणमपि शोभनमेवेति, एवञ्च स्तुधात्वर्थसम्बन्धात्तं प्रत्युपसर्गत्वेन षत्वमपि भविष्यति, तद्द्वारा करणविशेषणत्वात् कारकवचनोऽपि सुशब्दो भविष्यतीति, स्वरविरोधेनैव मन्क्तिनादिसूत्रस्य सुष्टुतिशब्दो विषयो भविष्यति, प्रकृतिः प्रहृतिरित्यत्र भावे क्तिन् प्रत्युदाहृतेति न तत्र प्रशब्दस्य करणपरत्वं करणे क्तिमुदाहरणेऽपि धात्वर्थमात्रविशेषणतैव विवक्षिता, न तद्द्वारा प्रत्ययार्थविशेषणतापीति, तत् प्रत्युदाहरणतोपपत्तिरिति । सुष्टुतिरित्यत्र पुनः क्तिन्नभिधेयकरणपर्य्यन्तं सुशब्दस्य व्यापार इत्युदाहरणतैव न प्रत्युदाहरणतेति, न, किमत्र सुशब्दः श्रुत्यैव प्रकृतिप्रत्ययार्थोभयविशेषणपरः, उत श्रुत्यैकं विशिनष्टि, अर्थादितरदिति, यदाप्युभयपरत्वं तदापि किं यौगपद्येन उतक्रमेणेति, आद्ये सति विशेष्यविशेषणपदावृत्तिरिति प्रसङ्गः, द्वितीये विरम्य व्यापारपातः । न च शब्दबुद्धिकर्म्मणां विरम्य व्यापारपातः * कथञ्चिद्दृष्टः, इष्टो वा, अतो न श्रुत्योभयपरत्वं । अथैकत्र श्रुत्या तात्पर्य्यार्थं, अपरत्रत्वर्थादिति, अत्र धात्वर्थसम्बन्धस्यार्थिकत्वे षत्वासिद्धिः, प्रत्ययार्थसम्बन्धस्यार्थिकत्वे मन्क्तिन्नित्यादिस्वरासिद्धिः, आर्थिकेनापि कारकसम्बन्धेनोदाहरणत्वाभिधाने प्रकृतिः प्रहृतिरित्यादिप्रत्युदाहरणं न स्यात्, श्रुत्या धात्वर्थमात्रसम्बन्धस्यापि प्रशब्दस्यार्थात् तत् करणसम्बन्धः केन वारयितुं शक्यत इत्येषा दिक्, अतएव * प्रत्ययार्थमात्रसम्बन्धपरत्वाङ्गीकारेण स्वरः सिद्ध्यतु, षत्वन्तु छान्दसमस्तु, शोभना स्तुतिर्यस्यामिति बहुव्रीहिर्वा भवतु, एवञ्च नञ्सुभ्यां ( पां ६ । २ । १७२ । ) इत्यन्तोदात्तं भविष्यति, अथवा सुष्ठु स्तुवन्तीति सुष्टुतय इतिकरणभूता ऋचः स्तुतिशब्देनोच्यन्ते, क्तिच्क्तौ च सञ्ज्ञायां ( पां ३ । ३ । १७४ । ) इति क्तिच्प्रत्यये सति चित्त्वादन्तोदात्तता भविष्यति, न च करणीभूतानामृचां कर्तृप्रत्ययेन क्तिचा कथमभिधानमिति वाच्यं, काष्ठानि पचन्तीतिवत् तासामपि स्वव्यापाराप्राधान्यविवक्षया करणत्वोपपत्तिरिति ॥ ७ ॥

---

* कथञ्चिदिति कां, घं । * इव कां घं ।

। ८ । वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा ।
ईशानो अप्रतिष्कुतः ॥
। ९ । य एकश्चर्षणीनां वसूनामिरज्यति ।
इन्द्रः पञ्च क्षितीनां ॥

अष्टमीमृचमाह वृषा यूथेवेति । वृषा कामानां वर्षिता इन्द्रः ओजसा स्वकीयबलेनानुग्रहीतुं कृष्टीर्मनुष्यान् इयर्त्ति प्राप्नोति । कीदृश इन्द्रः, ईशानः समर्थः । पुनः कीदृशः, अप्रतिष्कुतः, प्रतिशब्दरहितः, याच्यमानं न परिहरतीत्यर्थः । इन्द्रस्य दृष्टान्तः, वंसगो वननीयगतिर्वृषभो यूथेव, गावो यूथानि यथा प्राप्नोति तद्वत् । वृषा, कनिन् युवृषि तक्षि राजि धन्वि द्यु प्रतिदिव इति वर्षतेः कनिन्प्रत्यय औणादिकः, कित्त्वाद्गुणाभावः, नित्त्वादाद्युदात्तः । यूथा इव, युवन्ति मिश्रीभवन्तीति यूथानि, यु मिश्रणामिश्रणयोः, तिथ पृष्ठ गूथ यूथ प्रोथा इत्यौणादिकस्थक्प्रत्ययान्तो निपातितः, निपातनाद्दीर्घत्वं, प्रत्ययस्वरेणाकार उदात्तः, शेश्छन्दसि बहुलं ( पा ६ । १ । ७० । ) इति शेर्लुक्, इवेन विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरत्वञ्च वक्तव्यमिति वार्तिकेन समासेऽपि स एव स्वरः । वंसगः, पृषोदरादित्वादभिमतरूपस्वरसिद्धिः । कर्षन्तीति कृष्टयः, क्तिच् क्तौ च सञ्ज्ञायां (पा ३ । ३ । १७४ ।) इति क्तिच्, चित्त्वादन्तोदात्तः । इयर्त्ति, ऋ गतौ, तिप्, शपः श्लुः, श्लौ ( पा ६ । १ । १० । ) इति द्विर्भावः, अभ्यासस्य उरदत्वहलादिशेषौ, अर्तिपिपर्त्योश्च (पा ४ । ४ । ७७ । ) इत्यकारस्य इकारः, अभ्यासस्यासवर्णे ( पा ६ । ४ । ७८ । ) इतीयङादेशः, अङ्गस्य गुणो रपरत्वं । ओजसा, उब्जेर्बले बलोपश्च इत्यौणादिकोऽसुन्, तत्सन्नियोगेन बकारलोपः, लघूपधगुणः, नित्त्वादाद्युदात्तः । ईशानः, ईश ऐश्वर्य्ये, लटः शानच्, अदिप्रभृतिभ्यः शपः (पा २ । ४ । ७२ । ) इति शपो लुक् । चितः ( पा ६ । १ । १६३ । ) इत्यन्तोदात्तं बाधित्वा, अनुदात्तत्वात्सार्वधातुकानुदात्तत्वेन धातुस्वर एव शिष्यते । अप्रतिष्कुतः, अप्रतिशब्दितः, कु शब्दे, कर्म्मणि क्तः, पारस्करादित्वात् सुडागमः, सुषामादित्वात् षत्वं, नञ्समासः, अव्ययपूर्वपदप्रकृतिस्वरत्वं । ८ ।

नवमीमृचमाह, य एक इति । य इन्द्रः स्वयमेक एव चर्षणीनां

। १० । इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।
अस्माकमस्तु केवलः । १४ ।

मनुष्याणामिरज्यति ईष्टे, तथा वसूनां धनानामिरज्यति, स इन्द्रः पञ्च निषादपञ्चमानां क्षितीनां निवासार्हाणां वर्णानामनुग्रह्णीतेति शेषः। एकः, इण् गतौ, इण् भी का पा शल्यति मर्च्चिभ्यः कन्नित्यौणादिकः कन्-प्रत्ययः, बाहुलकात् कलोपाभावः, नित्त्वादाद्युदात्तत्वं। चर्षणीनां, प्रातिपदिकस्वरेणान्तोदात्तः। अन्तोदात्तादित्यनुवृत्तौ, नामन्यतरस्यां (पां ६।१।१७७।) इति विभक्तेरुदात्तत्वं। वसूनां, वस निवासे, निदित्यनुवृत्तौ, शृ स्वृ स्निहि त्रप्यसिवसिहनि क्लिदिबन्धिमनिभ्यश्चेत्युप्रत्ययश्चौणादिकः, नित्त्वादाद्युदात्तः। इरज्यति, कण्ड्वादिषु इरज् ईर्षायां अत्रैश्वर्य्यार्थः, कण्ड्वादिभ्यो यक् (पां ३। १। २७। ) इति यक्, प्रत्ययस्वरेणोदात्तः। पञ्च, पचि व्यक्तीकरणे, पञ्चेश्चेत्यौणादिकः कनिन्, नित्त्वादाद्युदात्तः। क्षितीनां, प्रातिपदिकस्वरेणान्तोदात्तः, नामन्यतरस्यां (पां ६।१।१७७।) इति विभक्तेरुदात्तत्वं ॥ ९॥

आश्विनं शंसिष्यन्निन्द्रं वो विश्वतस्परीति जुहुयात् * संस्थितेष्वग्नि-नायस्तुवत इति खण्डे वण्महां असि सूर्य्येति द्वाभ्यामिन्द्रं वो विश्वतस्प-रीति सूत्रितं। चतुर्विंशेऽहनि प्रातः सवने ब्राह्मणाच्छंसिन इन्द्रं वो विश्वतस्परीत्यारम्भणीया, चतुर्विंश इत्युपक्रम्य ऋजुनीतिनो वरुण इन्द्रं वो विश्वतस्परीति सूत्रितं, तामेतां दशमीमृचमाह, इन्द्रं व इति। हे ऋत्विग्यजमानाः, विश्वतः सर्वेभ्यो जनेभ्यः परि उपरि अवस्थि-तमिन्द्रं वो युष्मदर्थं हवामहे आह्वयामः, अतः स इन्द्रोऽस्माकं केवलोऽसाधारणोऽस्तु, इतरेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः। इन्द्रं, इदि परमैश्वर्य्ये इति धातुः, रन्प्रत्ययः, नुमागमः, नित्त्वादा-द्युदात्तः। वः, अनुदात्तं सर्वमित्यनुवृत्तौ, बहुवचनस्य वस्नसौ (पां ८। १। २१। ) इति वस्। विश्वतः, पञ्चम्यास्तसिल् (पां ५ । ३। ७। ) इति तसिल्, लिति (पां ६। १। १९३। ) इति प्रत्ययात् पूर्वमुदात्तत्वं। परि, निपातत्वादाद्युदात्तः संहितायां, पञ्चम्याः परावध्यर्थे (पां ८। ३। ५१। ) इति विसर्ज्जनीयस्य सत्वं। हवामहे,

---

* शंसते इति कां, पं।

ह्वेञः अपि, बहुलं छन्दसि ( पां ६ । १ । ३४ । ) इति सम्प्रसारणे परपूर्वत्वे, गुणावादेशौ । जनेभ्यः, जन्यन्त इति जनाः, जनयतेः कर्म्मणि घञ्, जनिवध्योश्च ( पां ७ । ३ । ३५ । ) इत्युपधाया वृद्ध्यभावः, ञित्त्वादाद्युदात्तत्वं । अस्माकं, अस्मच्छब्दोऽन्तोदात्तः, शेषे लोपः ( पां ७ । २ । ९० । ) इत्यलोपपक्षे, साम आकं ( पां ७ । १ । ३३ । इत्याकमाकारेण एकादेश उदात्तः, टिलोपपक्षे उदात्तनिवृत्तिस्वरेणाकार उदात्तः । केवलः, वृषादिराकृतिगणत्वादाद्युदात्तः ॥ १० ॥ इति प्रथमस्य प्रथमे चतुर्दशो वर्गः ॥ १४ ॥ इति द्वितीयोऽनुवाकः ॥

---

॥ अथ तृतीयेऽनुवाकः ॥

॥ अष्टमसूक्तं ॥

१ १ १ एन्द्र सानसिं रयिं सजित्वानं सदासहं ।
वर्षिष्ठमूतये भर ॥

तृतीयेऽनुवाके चत्वारि सूक्तानि, तत्र एन्द्र सानसिं रयिमित्यादिकं प्रथमं दशर्चं सूक्तं, तत्सुरूपकृत्नुमित्यादिषु षट्सु पञ्चमं, ऋष्याद्यस्तु पूर्व्ववत्, विशेषविनियोगस्तु महाव्रते निष्केवल्ये षोडशचाशीतौ च एन्द्र सानसिं रयिमित्यादिके द्वे सूक्ते, पञ्चमारण्यके षोडशचाशीतिरिति खण्डे शौनकेन सूत्रितं, सुरूपकृत्नुमूतय इति त्रीणि, एन्द्र सानसिं रयिमिति द्वे इति, अतिरात्रे प्रथमपर्य्याये अच्छावाकशस्त्रे एन्द्र सानसिं रयिमिति सूक्तं सूत्रितञ्च, इन्द्रमिद्गाथिनो बृहदेन्द्र सानसिमिति, दर्शयागे इन्द्रयाजिनः सान्नायस्यानुवाक्या एन्द्र सानसिमिति, उक्तादेवता इत्यस्मिन् खण्डे एन्द्र सानसिं रयिं प्रससाहिषे पुरुहूतशत्रूनिति सूत्रितं, तस्मिन् सूक्ते तामेतां प्रथमामृचमाह एन्द्र सानसिं रयिमिति। हे इन्द्र, ऊतयेऽस्मद्रक्षार्थं रयिं धनं आभर, आहर। कीदृशं रयिं, सानसिं सम्भजनीयं। पुनः कीदृशं सजित्वानं, समानशत्रुजयशीलं, धनेन शूरान् भृत्यान् सम्पाद्य शत्रवो जीयन्ते। पुनः कीदृशं सदासहं, सर्वदा शत्रूणामभिभवहेतुं। पुनरपि कीदृशं वर्षिष्ठं, अतिशयेन वृद्धं प्रभूतमित्यर्थः। सानसिं, वन षण सम्भक्तावित्यस्मादसिप्रत्ययो वृद्धिरन्तोदात्तत्वञ्च सानसि धर्णसीत्यादिना निपात्यते। रयिं, प्रातिपदिकस्वरेणान्तोदात्तत्वं। सजित्वानं, समानानरीन् जेतुं शीलमस्य, अन्येभ्योऽपि दृश्यन्ते (पां ३। २। ७५।) इति क्वनिप्, उपपदसमासः, समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु (पां ६। ३। ८४।) इति समानस्य सभावः, कृदुत्तरपदप्रकृतिस्वरेण धातुस्वर एव शिष्यते। वर्षिष्ठं, वृद्धशब्दात्, अतिशायनेतमबिष्ठनौ (पां ५। ३। ५५।) इतीष्ठन् प्रत्ययः, प्रियस्थिर

१ २ १ नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै १
त्वोतासो न्यर्वता ॥

(पा ६।४।१५७।) इत्यादिना वृद्धशब्दस्य वर्षादेशः, इष्ठनो नित्त्वादाद्युदात्तत्वं। ऊतये, उदात्त इत्यनुवृत्तौ ऊतियूतिजूतिसाति (पा ३।३।९७।) इत्यादिना क्तिन्नुदात्तो निपातितः। भर, हृग्रहोर्भश्छन्दसीति सूत्रवार्तिकेन हकारस्य भकारः, ते प्राग्धातोः (पा १।४।८०।) इति धातोः प्राक् प्रयोक्तव्यस्याङो, व्यवहिताश्च (पा १।४।८२।) इति छन्दसि व्यवहितप्रयोगः॥ १॥

द्वितीयामृचमाह, नि येनेति। येन धनेन सम्पादितानां भटानां निमुष्टिहत्यया नितरां मुष्टिप्रहारेण हत्वा शत्रून् निरुणधामहै निरुद्धान् करवाम, तादृशं धनमाहरेत्यर्थः। त्वोतासः त्वया रक्षिता वयं अर्वता, अस्मदीयेनाश्वेन निरुणधामहा इत्यनुषङ्गः, पदातियुक्तेनाश्वयुक्तेन च शत्रून् विनाशयामेत्यर्थः। मुष्टिहत्यया, हनस्त च (पा ३।१।१०८।) इति सुबन्तोपपदे क्यप्, तत्सन्नियोगेन नकारस्य तकारः, कृदुत्तरपदप्रकृतिस्वरे प्राप्ते, परादिश्छन्दसि बहुलं (पा ६।२।१९९।) इति बहुलग्रहणेन, निपकृत्स्वप्यन्तोदात्तत्वाभिधानादन्तोदात्तत्वं। नि, आख्यातसम्बन्धस्यापि नेरुपसर्गस्य, व्यवहिताश्चेति व्यवहितप्रयोगः। हत्वा, शेश्छन्दसि बहुलं (पा ६।१।७०।) इति शेर्लोपः, नलोपः। रुणधामहै, आट्संयोगेन पित्त्वात्, श्नसोरल्लोपः (पा ६।४।१११।) इत्यकारलोपो न भवति, पित्त्वादेव चाख्यातस्यानुदात्तत्वेन विकरणस्य श्नस एवोदात्तत्वमिष्यते। ननु तिङ्ङतिङ इति निघातेन भवितव्यं, न ह्यत्र तिङ्विभक्ती, निविड-यामुघा निरुणधामहा इत्यत्र श्रुत्यैक्यात्। अर्वता, निरुणधामहा इत्यत्रानुषक्ता द्वितीया, तयोः समुच्चयार्थयोश्चकारो लुप्यते, तेन चादिलोपे विभाषा (पा ८।१।६३) इति प्रथमेयं तिङ्विभक्तिर्न निहन्यते, यथा नात्मना दृप्यति नान्यस्मै ददातीत्यत्र हि समुच्चयार्थस्य च शब्दस्य लोपात् दृप्यतीति प्रथमा तिङ्विभक्तिर्न निहन्यते, ददातीति द्वितीया तु निहन्यत एव। ननु तत्र द्वे तिङ्विभक्ती श्रूयेते। किन्तु पुनरेकैव श्रुता, सैवोत्तरत्रानुषज्यते नान्या श्रूयत इति द्वितीयाया अभावात् कथमियं प्रथमा न, अनुषक्तान्यद्वितीयापेक्षमपि प्राथम्यमुपजीव्य निघा

१ ३ १ इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि ।
जयेम सं युधि स्पृधः ॥

तनिषेधदर्शनात्, पुरोडाशस्याधिश्रयत्यान्यं च, प्रोक्षणीश्चासादयत्यान्यं चेत्यत्र ह्यधिश्रयत्यासादयतीत्याख्यातयोः प्रथमवाक्यद्वययोः श्रुतयोरुत्तरवाक्यद्वयेऽनुषङ्गमपेक्ष्यैव प्राथम्यस्वीकारेण, चवायोगे प्रथमा (पां ८।१।५९।) इति निघातनिषेधो दृष्ट इति। त्वोतासः, त्वया ऊता रक्षितास्त्वोतासः, प्रत्ययोत्तरपदयोश्च (पां ७।२।९८) इति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसः, अवतेर्निष्ठायामिडभावश्च, ज्वरत्वरस्रिव्यवि मवामुपधायाश्च (पां ६।४।२०।) इत्यूठ्, एत्येधत्यूठ्सु (पां ६।१।८९।) इति वृद्ध्यभावश्छान्दसः, तृतीया कर्म्मणि (पां ६।२।४८।) इति पूर्वपदप्रकृतिस्वरेणाकार उदात्तः,एकादेश उदात्तेनोदात्त इत्युदात्तः। अर्वता, अर्वति गच्छतीत्यर्व्वा, अर्व्व गताविति धातुः, अन्येभ्योऽपि दृश्यन्ते (पां ३।२।७५।) इति वनिप्प्रत्ययः, नेड्वशिकृति (पां ७।२।८।) इतीट्प्रतिषेधः, लोपो व्योर्वलि (पां ६।१।६६।) इति वकारलोपः, अर्वणस्त्रसावनञः (पां ६।४।१२७।) इति तकारः, वनिपः पित्त्वाद्धातुस्वर एव ॥ २ ॥

तृतीयामृचमाह इन्द्र त्वोतास इति। हे इन्द्र, त्वोतासस्त्वया पालिता वयं घना घनं शत्रुप्रहरणात्मकं दृढं वज्रमायुधमाददीमहि स्वीकुर्म्मः, तेन च वज्रेण युधि युद्धे स्पृधः स्पर्द्धमानांश्शत्रून् सञ्जयेम सम्यक् जयेम। त्वोतास इत्युक्तं। वज्रं, वज व्रज व्रजि गताविति धातुः, ऋज्रेन्द्राग्रवज्रेत्यादिना रन्प्रत्ययान्तो निपातः। घना, घनः काठिन्यं, तदस्यास्तीति अर्श्आदित्वादच्, चित्वादन्तोदात्तः, सुपां सुलुगिति डादेशः। ददीमहि, डुदाञ्दाने, प्रार्थनायां लिङ्, क्रियाफलस्य कर्तृगामित्वात्, स्वरित ञितः कर्त्रभिप्राये क्रियाफले (पां १।३।७२।) इत्यात्मनेपदोत्तमपुरुषबहुवचनं। ईमहि, जुहोत्यादित्वाच्छपः श्लुः, श्लौ (पां ६।१।१०।) इति द्विर्भावः, पूर्व्वोऽभ्यासः (पां ६।१।४।) इत्यभ्याससञ्ज्ञायां, ह्रस्वः (पां ७।४।५९।) इति ह्रस्वे, लिङः सलोपोऽनन्त्यस्य (पां ७।२।७९) इति सलोपः, उभे अभ्यस्तं (पां ६।१।५।) इत्यभ्यस्तत्वे, श्नाभ्यस्तयोरातः (पां ६।४।११२।) इत्याकारलोपे प्राप्ते, ई हल्यघोः (पां ६।४।११३।) इतीत्वं। जयेम, शपः पित्त्वादनुदात्तत्वं,

। ४ । वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयं ।
सासह्याम पृतन्यतः ॥

तिङश्च लसार्व्वधातुकस्वराद्धातुस्वर एव शिष्यते, छन्दसि परेऽपि (पा १। ४। ८१) इति समः परप्रयोगः। युधि, युध सम्प्रहार इति धातोः सम्पदादित्वाद्भावे क्विप्, सावेकाचः (पा ६। २। १६८) इति विभक्ते-रुदात्तत्वं। स्पृधः, स्पर्द्धन्तीति स्पृधः, स्पर्द्ध संघर्षे इति धातोः, क्विप् च (पा ३। २। ७६) इति क्विप्, बहुलं छन्दसीति रेफस्य सम्प्रसारणमृ-कारः, अकारलोपश्च ॥ ३ ॥

चतुर्थीमृचमाह, वयं शूरेभिरिति। वयं कर्म्मानुष्ठातारः शूरेभि-श्शौर्य्ययुक्तैः, अस्तृभिरायुधानां प्रक्षेप्तृभिर्भटैः संयुज्येमहीति शेषः। हे इन्द्र, तादृशा भटसहिता वयं युजा सहायभूतेन त्वया पृतन्यतः सेनामिच्छतः शत्रून् सासह्याम अतिशयेनाभिभवेम। शूरेभिः, शुश्रु गताविति धातोः, क्रमित्यनुवृत्तौ शुसिचिमीनां दीर्घश्चेत्यौणादिकः क्रन्, कित्त्वाद्गुणाभावः, नित्त्वादाद्युदात्तत्वं, बहुलं छन्दसीत्यैसो निषिद्धत्वात्, बहुवचने झल्येत् (पा ७। ३। १०३।) इत्येत्वं, सहयोगे तृतीयाबला-द्वयमित्यस्मत्पदसमभिव्याहाराच्च वयं संयुज्येमहीति गम्यं, विनापि सहशब्देन वृद्धो यूनेति निपातनादिति न्युक्तं। अस्तृभिः, असु क्षेप-णे तच्छीलैस्तद्धर्म्मभिस्तत्साधुकारिभिर्व्वा, असुक्षेपणे, तृन् (पा ३। २। १३५।) इति ताच्छील्यादिषु तृन्, नित्त्वादाद्युदात्तः, रधा-दिभ्यश्च (पा ७। २। ४५।) इति विकल्पविधानादयं पक्षे इडभावः। त्वया, युष्यसिभ्यां मदिक् इत्यौणादिको मदिक्, कित्त्वाद्गुणाभवः, युष्मदः प्रत्ययस्वरेणाकार उदात्तः, तृतीयैकवचनं टा, त्वमावेकवचने (पा ७। २। ९७।) इति मपर्य्यन्तस्य त्वादेशः, अतो गुणे (पा ६। १। ९७।) इति पररूपत्वं, एकादेश उदात्तेनोदात्तः। युजा, ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चु-युजि क्रुञ्चाञ्च (पा ३। २। ५९।) इति क्विन्प्रत्ययः, सावेकाचः (पा ६। १। १६८।) इत्यादिना विभक्तेरुदात्तत्वं। सासह्याम, भृशं पुनः पुनः सहेमहि, षह मर्षणे इति धातुः, धात्वादेः षः सः (पा ६। १। ६४) इति षस्य सः। धातोरेकाचो हलादेः क्रियासमभिहारे यङ्, (पा ३। १। २२।) इति यङ्, यङोऽचि च (पा २। ४। ७४।) इति लुक्, सन्यङोः (पा ६। १। ९।) इति द्विर्भावः, हलादिःशेषः, दीर्घोऽकितः (पा ७। ४। ८३।) इति दीर्घः, प्रार्थनायां लिङ्, चर्करीतं परस्मैपद-

१ ५ १ महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे १
द्यौर्न प्रथिना शवः ॥ १५ ॥

महादिवच्च इष्टव्यमिति सूत्रवार्त्तिकेन परस्मैपदोत्तमपुरुषबहुवचनं मस्, कर्त्तरि शपोऽदादिवद्भावाल्लुक्, नित्यंङितः, (पां ३।४।९९।) इत्यन्तसकारलोपः, यासुट्परस्मैपदेषूदात्तोङिच्च (पां ३।४।१०३।) इति यासुट, लिङः सलोपोऽनन्त्यस्य (पां ७।२।७९।) इति सकारलोपः, सति शिष्टत्वाद्यासुट एवोदात्तत्वं शिष्यते, पादादित्वान्न निघातः। पृतन्यतः, योद्धुं पृतनामात्मन इच्छतीत्यर्थे सुपआत्मनः क्यच् (पां ३।१।८) इतिक्यच, सनाद्यन्ताधातवः (पां ३।१।३२) इति धातुसञ्ज्ञायां, सुपो धातुप्रातिपदिकयोः (पां २।४।७१।) इति सुपोलुक्, कव्यध्वरपृतनस्यर्च्चिलोपः (पां ७।४।३९।) इत्याकारलोपः, पृतन्यधातुश्चित्त्वादन्तोदात्तः, उपरि लटः शत्रादेशः, कर्त्तरि शप्, पित्त्वादनुदात्तत्वं, शतुश्चलसार्व्वधातुकस्वरेणोदात्तेन सहैकादेशउदात्तेनोदात्तः (पां ८।२।५) इति पृतन्यच्छब्दोऽन्तोदात्तः, शसः सुप्स्वरेणानुदात्तस्यान्तोदात्तादित्यनुवृत्तौ, शतुरनुमो नद्यजादी (पां ६।१।१७३) इत्यनुदात्तत्वं ॥४॥

पञ्चमीमृचमाह, महाँ इन्द्र इति। अयमिन्द्रो महान् शरीरेण प्रौढः, परश्च गुणैरुत्कृष्टोऽपि, नु किञ्च वज्रिणे वज्रयुक्तायेन्द्राय, महित्वमस्तं द्विविधमाधिक्यं सर्वदास्तु, स्वभावसिद्धस्यापि भक्त्या प्रार्थनमेतत्, किञ्च द्यौर्न द्युलोक इव शवो बलमिन्द्रस्य सेनारूपं प्रथिना प्रथिम्ना पृथुत्वेन युज्यतामिति शेषः, यथा द्युलोकः प्रभूतः, एवमस्य सेना प्रभूता। नु शब्दो यद्यपि क्षिप्रनामसु नु मक्ष्विति पठितं, तथाप्यत्र * तदर्थाभावान्निपातत्वेनानेकार्थत्वसम्भावाच्च समुच्चयार्थोऽत्र गृहीतः। नेति शब्दो लोके प्रतिषेधार्थ एव, स्वाध्याये तु प्रतिषेधार्थ उपमानार्थश्चेति द्विविधो येन पदेनान्वीयते, तस्मात् पूर्व्वं प्रयुज्यमानः प्रतिषेधार्थः, उपरिष्टात् प्रयुज्यमान उपमानार्थः। तथाच यास्क उदाहरति, उभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः, पुरस्तादुपचारस्तस्य यत्प्रतिषेधति, दुर्म्मदासोनसुरायामित्युपमार्थीयः, उपरिष्टादुपचारस्तस्य येनोपमिमीत इति। अत्रोपमावाचिनो द्युशब्दस्यापि

* तदर्थाभावादिति का. पुं।

। ६ । समोहे वा य आशत नरस्तोकस्य सनितौ ।
त्रिप्रासो वा धियायवः ॥

प्रयुक्तत्वादुपमानार्थः स्वीकृतः। अष्टाविंशतिसङ्ख्याकेषु बलनामसु ओजः पाजः शव इति पठितं। मघार्निति नकारस्य संहितायां, दीर्घादटिसमानपादे (पां ८।३।९।) इति रुत्वं, आतेऽटि नित्यं (पां ८।३।३।) इति पूर्व्वस्याकारस्यानुनासिकः, भो भगो अघोअपूर्वस्य योऽशि (पां ८।३।१७।) इति रोर्यकारः तस्य लोपस्तस्यासिद्धत्वात् स्वरसन्धिर्न भवति। मघेरित्यौणादिक इन्, मघैर्भावो मघित्वं, त्वइति प्रत्ययस्वरेणोदात्तः, स एव शिष्यते। वच्मिधे, इकारः प्रत्ययस्वरेणोदात्तः। द्योशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, गोतोणित् (पां ७।१।९०।) इति विभक्तेर्णित्त्वात्, अचोञ्णिति (पां ७।२।११५।) इति वृद्धिः आन्तरतम्यादुवर्द्धैव भवति। प्रथिना प्रथिम्ना, पृथोर्भाव इत्यर्थे, पृथ्वादिभ्य इमनिज्वा (पां ५।१।१२२।) इति इमनिच्, रऋतोहलादेर्लघोः (पां ६।४।१६१।) इति ऋकारस्य रभावः, तुरिष्ठेमेयः सु (पां ६।४।१५४।) इत्यनुवृत्तौ, टेः (पां ६।४।१५५।) इति टिलोपः, प्रथिमन्शब्दश्चित्त्वादन्तोदात्तस्तृतीयैकवचने भत्वात्, अल्लोपोऽनः (पां ६।४।१३४।) इत्यकारलोपश्छान्दसो मकारलोपः, अनुदात्तस्य च यत्रोदात्तलोपः (पां ६।१।१६१।) इति विभक्तेरुदात्तत्वं। शवः, नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वं ॥५॥ इति प्रथमस्य प्रथमे पञ्चदशो वर्गः ॥

मन्दसानमित्यिति सूक्ते षष्ठीमृचमाह समोहे वा य इति। ये नरः पुरुषाः समोहे सङ्ग्रामे तोकस्य अपत्यस्य सनितौ लाभे आशत व्याप्तवन्तः, इन्द्रस्तुत्येति शेषः। वा अथवा, विप्रासो मेधाविनो धियायवः प्रज्ञाकामाः सन्त आशत, ते सर्वे लभन्त इत्यध्याहारः। रण इत्यादिषु षट्चत्वारिंशत्सङ्ग्रामनामसु समोहे मगिथ इति पठितं। पञ्चदशपत्यनामसु तुक तोक इति पठितं। समोहे, प्रातिपदिकान्तोदात्तत्वं। वा, चादयोऽनुदात्ताः। आशत, अशू व्याप्तौ, छान्दसः सेर्लोपः, अडागम उदात्तः, सति शिष्टत्वेन स एव शिष्यते। नरः, प्रातिपदिकस्वरः। सनितौ, स्त्रियां क्तिन् (पां ३।३।९४) इति क्तिन्, सितुर्त्रेष्वयग्रहादीनामिति वचनादिट्पीतिर्भिपञ्चितिरितिमदिष्टागमः। विप्रासः, ऋज्रेन्द्रेत्यादिना

। ७ । यः कुक्षिः सोमपातमः समुद्र इव पिन्वते ।
उर्वीरापो न काकुदः ॥
। ८ । एवा ह्यस्य सूनृता विरप्शी गोमती मही ।
पक्वा शाखा न दाशुषे ॥

विप्रशब्दो रन्प्रत्ययान्तो निपातितः । धियायवः, धिधारणे, धीयते धार्य्यते अवबुध्यते श्रुत*मर्थजातमनयेति धिया प्रज्ञा, तामात्मन इच्छन्तीत्यर्थे क्यच्, क्याच्छन्दसि (पा ३।२।१७०।) इत्युप्रत्ययः, अतोलोपः, प्रत्ययस्वरेणान्तोदात्तः ॥ ६ ॥

सप्तमीमृचमाह, यः कुक्षिरिति । यः कुक्षिरस्येन्द्रस्योदरप्रदेशः सोमपातमः अतिशयेन सोमस्य पाता, स कुक्षिः समुद्र इव पिन्वते वर्द्धते, सेचनार्थो धातुरौचित्येन वृद्धिं लक्षयति, काकुदो मुखसम्बन्धिन्य उर्वीर्बह्व्य आपो न जलानीव, जिह्वासम्बन्धमास्योदकं यथा कदाचिदपि न शुष्यति, तथेन्द्रस्य कुक्षिः सोमपूरितो न शुष्यतीत्यर्थः। यद्यपि श्लोकइत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु काकुज्जिह्वेति पठितं, तथाप्युदकसम्बन्धसिद्ध्यर्थमत्र काकुच्छब्देन मुखमुपलक्ष्यते, सम्बन्धवाचिनस्तद्धितस्यात्र छान्दसो लोपो द्रष्टव्यः । सोमपातमः, सोमं पिबतीति सोमपाः, आकारो धातुस्वरेणोदात्तः, कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते, तमपः पित्त्वादनुदात्तत्वं । समुद्रः, प्रातिपदिकत्वादन्तोदात्तः, इवेन विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरत्वं चेति प्रकृतिस्वरः। पिन्वते, पिविसेचने, इदितो नुम्धातोः (पा ७।१।५८।) इति नुमागमः, शपः पित्त्वान्नानुदात्तत्वं, तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । उर्व्वीः, उरुशब्दोऽन्तोदात्तः, वोतो गुणवचनात् (पा ४।१।४४।) इति ङीष्, यणादेशः, उदात्तयणो हल्पूर्वादिति ङीकार उदात्तः, जसासह, एकादेश उदात्तेनोदात्त इत्येकादेश उदात्तः। आपः, प्रातिपदिकस्वरः। काकुदः, प्रातिपदिकस्वरेणान्तोदात्तः ॥ ७ ॥

अभिप्लवषडहगतेपृष्ठ्येषु तृतीयसवने ब्राह्मणाच्छंसिन एवाह्यस्य-सूनृतेत्यनुरूपस्तृचः, सूत्रेषु प्रवाशितइतिखण्डे अथ ब्राह्मणाच्छंसिन

* अज्ञातमिति का, पं।

इत्युपक्रम्य एवाह्यसि वीरयुरेवा ह्यस्य सूनृतेति सूचितं. तस्मिंस्तृचे प्रथमां सूक्तेऽष्टमीमृचमाह एवा ह्यस्य सूनृतेति। अस्येन्द्रस्य सूनृता प्रिय-सत्यरूपा वाक्, दाशुषे हविर्दत्तवते यजमानाय तदर्थं एवा हि, एवं खलु, अनन्तरूपा वक्ष्यमाणगुणोपेता भवतीत्यर्थः। कीदृशी वाक् विरप्शी विविधारपणोपेता वाक्ययुक्ता बहुविधोपचारवादिनीत्यर्थः। पुनः कीदृशी गोमती, बह्वीभिर्गोभिरुपेता गोप्रदेत्यर्थः, अतएव मही महती पूज्या। यथोक्तवाचो दृष्टान्तः, पक्वा शाखा न, यथा बहुभिः पक्वैः फलैरुपेता पनसचूतादिशाखा प्रीतिहेतुस्तद्वत्। यद्यपि महन्नामसु ऋभ्वं विरप्शीति पठितं, तथाप्यत्र महीत्यनेन पुनरुक्तिप्रसङ्गादवयवार्थो गृहीतः। एव, एवमादीनामन्त इत्यन्तोदात्तः, संहितायां, निपातस्य च (पां ६।३।१३६) इति दीर्घः। हि, निपाता आद्युदात्ताः। अस्य, प्रकृतस्येन्द्रस्य परामर्शात्, इदमोऽन्वादेशेऽशित्यादिना अशादेशोऽनुदात्त इति सर्वानुदात्तः। सूनृता, ऊन परिहाणे, सुतरामूनयत्यप्रियमिति सूनम्, सा चासौ ऋता सत्या चेति सूनृता प्रियसत्या वाक्, परादिश्छन्दसि बहुलमिति उकार उदात्तः। विरप्शी, विविधं रपणं विरपणं, रप लप व्यक्तायां वाचि, सम्पदादित्वाद्भावे क्विप्, तदेषामस्तीति विरप्शीनि वाक्यानि, तानि यस्यां वाचि सन्ति सा वाक् विरप्शी विरप्शिनी, अतइनिठनौ (पां ५।२।११५) इति इनिः प्रत्ययः, यस्येति चेतीकारलोपः, ऋन्नेभ्यो ङीबिति ङीप्, इकारः प्रत्ययस्वरेणोदात्तः, नकारलोपश्छान्दसः, सवर्णदीर्घे, एकादेश उदात्तेनोदात्तः। गावोऽस्यां सन्तीति गोमती, मतुप्ङीपौ पित्त्वादनुदात्तौ, प्रातिपदिकस्वर एव शिष्यते। मही महती, उगितश्च (पां ४।१।६।) इति ङीप्, तस्य पित्त्वादनुदात्तत्वे प्राप्ते, शतुरनुमो नद्यजादीत्यत्र, बृहन्महतो रुपसङ्ख्यानमित्युदात्तत्वं, अच्छब्दलोपश्छान्दसः। पक्वा, डुपचष् पाके, निष्ठा (पां ३।२।१०२।) इति क्त प्रत्ययः, पचोवः (पां ८।२।५२।) इति वत्वं, चोः कुः (पां ८।२।३०।) इति कुत्वं, प्रत्ययस्वरेणान्तोदात्तः, टापा सवर्णदीर्घे, एकादेश उदात्तेनोदात्त इत्युदात्तः। शाखा, शाखृ श्लाखृ व्याप्तौ, पचाद्यच्, चित्त्वादन्तोदात्ते प्राप्ते वृषादेराकृतिगणत्वाद्वृषादित्वादाद्युदात्तत्वं। दाशुषे, दाशृ दाने, दाश्वान् साह्वान् मीढ्वांश्चेति निपातनात् क्वसाविडभावो, द्विर्वचनाभावश्च। चतुर्थ्येकवचने, यचिभं (पां १।४।१८।) इति भसंज्ञायां, वसोः सम्प्रसारणं (पां ६।४।१३१।) इति सम्प्रसारणं वकारस्योकारः,

१ ९ १ एवा हि ते विभूतय ऊतय इन्द्र मावते ।
सद्यश्चित्सन्ति दाशुषे ॥

१ १० १ एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या ।
इन्द्राय सोमपीतये ॥ १६ ॥

परपूर्व्वत्वं, शासि वसि घसीनाञ्च ( ८ । ३ । ६० । ) इति षत्वं, प्रत्ययस्वरेणोकार उदात्तः ॥ ८ ॥

नवमीमृचमाह, एवा हि तइति । हे इन्द्र, ते तव विभूतय ऐश्वर्य्यविशेषाः एवा हि एवंविधाः खलु, किंविधा इति तदुच्यते, मावते मत्सदृशाय दाशुषे हविर्दत्तवते यजमानाय ऊतय स्त्वदीयरक्षारूपाः सद्यश्चित् सन्ति, विना कर्म्मानुष्ठानं तदैव भवन्ति। मावते, मत्सदृशाय, वतुप्प्रकरणे, युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानमिति वार्त्तिकेनास्मच्छब्दाद्वतुप्, मपर्य्यन्तस्य, प्रत्ययोत्तरपदयोश्चेति मादेशः, अदस् शब्देन सह, अतो गुण इति पररूपत्वं, दृग्दृशवतुष्वित्यनुवृत्तौ, आसर्वनाम्नः ( पां ६ । ३ । ९१ । ) इति दकारस्याकारः, सवर्णदीर्घत्वं, वतुपः पित्त्वात् प्रातिपदिकस्वरएव शिष्यते । सद्यः, समाने द्यवीत्यर्थे, सद्यः परुत् परार्य्यैषमइत्यादिना निपातितः, प्रत्ययस्वरेणान्तोदात्तत्वं । चित्, चादयोऽनुदात्ता इत्यनुदात्तः। सन्ति, अस भुवि, लटः स्थाने झि, झोऽन्तः ( पां ७ । १ । ३ । ) इत्यन्तादेशः, अदिप्रभृतिभ्यः शपइति शपोलुक्, तिङःप्रत्ययाद्युदात्तत्वं, प्रत्ययलोपे प्रत्ययलक्षणमिति शबकारमाश्रित्य लसार्वधातुकानुदात्तत्वं न भवति, वर्णाश्रयविधौ प्रत्ययलक्षणं नास्तीति निषेधात् । दाशुषे, गतमन्त्रे गतं ॥ ९ ॥

दशमीमृचमाह, एवा ह्यस्य काम्या इति । अस्येन्द्रस्य स्तोमः सामसाध्यं स्तोत्रं, उक्थञ्च ऋक्साध्यं शस्त्रमपि एवा हि तेउभेऽप्येवंविधे खलु, किं विध इति तदुच्यते, काम्या कामयितव्ये, शंस्या ऋत्विग्भिः शंसनीये, किमर्थं शंसनमिति तदुच्यते, इन्द्राय सोमपीतये, इन्द्रस्य सोमपानार्थं । एवा ह्यस्येति व्यवहितमन्त्रे गतं । काम्या, कमेर्णिङ्, तस्मादचोयत्, णेरनिटि ( पां ६ । ४ । ५१ । ) इति णिलोपः, तित्स्वरितमिति स्वरिते प्राप्ते, यतोऽनाव इत्याद्युदात्तत्वं, सुपां डादेशः। स्तोमः, अर्त्तिस्तुसुहुसृधृक्षि इत्यादिना मन् प्रत्ययः। उक्थं, वच परि-

## नवमसूक्तं।

१ ९ १ इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः।
महाँ अभिष्टिरोजसा ॥

भाषमे, पातृतुदिवचिरिचिसिचिभ्य स्थगिति थक् प्रत्यय औणादिकः, कित्त्वात् सम्प्रसारणपरपूर्वत्वगुणाभावाः। शंस्या, शंसु स्तुतौ, ण्यन्तादचो यत्, यतो ऽनाव इत्याद्युदात्तत्वं, सुपो डादेशः। सोमपीतये, सोमस्य पीतिस्तदर्थं, कृदुत्तरपदप्रकृतिस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वं, अथवा सोमस्य पीतिर्यस्येन्द्रस्येति सोमपीतिरिन्द्रः, बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरत्वं ॥ १० ॥ इति प्रथमस्य प्रथमे षोडशो वर्गः ॥

इन्द्रेहीत्यादिकं दशर्चं, सुरूपकृत्नुमित्यादिषु षष्ठं, ऋष्यादयस्तस्य पूर्ववत्, विशेषस्तु अतिरात्रे द्वितीयपर्य्याये अच्छावाकशस्त्रे इन्द्रेहीत्यनुरूपस्तृचः, अतिरात्रे पर्य्यायाणामितिखण्डे इदं वसो सुतमन्धः इन्द्रेहि मत्स्यन्धस इति सूत्रितं, तस्मिन् सूक्ते प्रथमामृचमाह इन्द्रेहीति। हे इन्द्र, एहि अस्मिन्कर्म्मण्यागच्छ, आगत्य च विश्वेभिः सर्व्वैः सोमपर्व्वभिः सोमरसरूपैः, अन्धसः अन्धोभिरन्नैर्मत्सि माद्यसि हृष्टो भव, तथाभूतस्त्वमोजसा बलेन महान् भूत्वा अभिष्टिः, शत्रूणामभिभविता भवेतिशेषः। अष्टाविंशतिसङ्ख्याकेषु बलनामसु ओजपाज इति पठितं। आ इहि, आङ्पूर्व्वः, इन्द्र एहि, यो ह्युभयोः स्थाने लभते असावन्यतरव्यपदेशमिति आङ्माङोरेकादेशस्याङ्व्यपदेशादोमाङ्क्षेति पररूपं। मत्सि, मदी हर्षग्लेपनयोः, लोटः सिप्, सर्वे विधयश्छन्दसि विकल्प्यन्त इति परिभाषया सेर्हिरादेशो न भवति, दिवादिभ्यः श्यन्निति श्यन्, बहुलं छन्दसीति श्यनो लुक्, न लुमताङ्गस्य (पां १।१।६३।) इति प्रत्ययलक्षणप्रतिषेधात्, शमामष्टानां दीर्घः श्यनि इतिसूत्रवार्त्तिकेनोपधादीर्घो न भवति, सिपः पित्त्वाद्धातुस्वर एव। अन्धसः, अदेर्नुम्धश्चेत्यसुन्, व्यत्ययेन तृतीयाबहुवचनं कर्त्तव्यं, नित्त्वादाद्युदात्तः। विश्वेभिः, अशिप्रुषीत्यादिना औणादिकः क्वन्, नित्त्वादाद्युदात्तत्वं, बहुलं छन्दसीति ऐसादेशो न भवति। सोमपर्व्वभिः, लतारूपं सोमं पृणन्ति पूरयन्तीति सोमपर्व्वाणः सोमरसाः, पॄ पालनपूरणयोः, अन्येभ्योऽपि दृश्यन्ते (पां ३।२।७५।) इति वनिप्, गुणो रपरत्वं, वनिपः पित्त्वाद्धातुस्वर एव, उपपदसमासे कृदुत्तरपदप्रकृति-

१ २ १ एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने ।
चक्रिं विश्वानि चक्रये ॥

स्वरेण पुनः स एव भवति । अभिष्टिरभिगन्ता, इषगतौ, मन्क्तिचयेत्यादिना क्तिन्नुदात्तः, स हि भावपरोऽपि भवितारं लक्षयति, क्तित्वाल्लघूपधगुणाभावः, तितुत्र त थ सि सुसरकसेषु च ( पां ७ । २ । ९ । ) इतीडागमो न भवति, अभिशब्दस्येकारे, एमन्नादिषु छन्दसि पररूपं वक्तव्यमिति पररूपं, प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वं । ओजसा, उब्जेर्बलेबलोपश्चेत्यसुन्, नित्त्वादाद्युदात्तः ॥ १ ॥

द्वितीयामृचमाह एमेनमिति । ईम् इत्यनर्थकः पादपूरणाय प्रयुक्तः, हे अध्वर्य्यवः सुते अभिषुते चमसस्थे सोमे एनं सोममिन्द्राय इन्द्रार्थं आसृजत पुनरभ्युन्नयत । शुक्रामन्थिचमसगणेषु पुनरभ्युन्नयनमापस्तम्बेनोक्तं, होतृचकाणां चमसाध्वर्य्यवः सकृत् सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्त्तध्वमितीति । कीदृशमेनं मन्दिं हर्षहेतुं, चक्रिं साधुकरणशीलं । कीदृशायेन्द्राय मन्दिने हर्षयुक्ताय, पुनः कीदृशाय विश्वानि सर्वाणि कर्म्माणि चक्रये कृतवते सर्वकर्म्मनिष्पादनशीलायेत्यर्थः । ईमित्यस्य पादपूरणार्थत्वं यास्क आह, अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिति । अस्यायमर्थः अन्यैरेव पदैर्विवक्षितेऽर्थे समाप्ते सति ये शब्दाः कमीमित्यादयः प्रयुक्तास्ते शब्दा अमिताक्षरेषु छन्दोराहित्येन परिमिताक्षररहितेषु ब्राह्मणादिवाक्येषु वाक्यपूरणार्था द्रष्टव्याः, मिताक्षरेषु तु छन्दोयुक्तेषु ग्रन्थेषु पादपूरणार्थास्ते च कमीमित्यादय इति । ईमित्यस्य शब्दस्यानर्थक्यायैतामृचमुदाजहार, एमेनं सृजता सुते आसृजतैनं सुत इति । एनं, इदमो द्वितीयायां, द्वितीयाटौःस्वेनः ( पां २ । ४ । ३४ । ) इति एनादेशोऽनुदात्त इत्यनुवृत्तेः सर्वानुदात्तः । सृजत, संहितायां, अन्येषामपि दृश्यते ( पां ६ । ३ । १३७ । ) इति दीर्घः । मन्दिं, प्रमोदहेतुं, मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु, इदितोनुम्धातोः ( पां ७ । १ । ५८ । ) इति नुम्, मन्दमानं प्रयुङ्क्त इत्यर्थे, हेतुमति च ( पां ३ । १ । २६ । ) इति णिच्, ण्यन्तस्याजन्तत्वात्, अच इरित्योणादिक इकारप्रत्ययः, णेरनिटि ( पां ६ । ४ । ५१ । ) इति णिलोपः, प्रत्ययस्वरेणान्तोदात्तत्वं । मन्दिने, मदः पूर्व-

।३। मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्ववर्षणे ।
सचैषु सवनेष्वा ॥

। ४ । असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत ।
अजोषा वृषभं पतिं ॥

वत् चतुर्थ्येकवचने अनपुंसकस्यापि व्यत्ययेन नुमागमः । चक्रिं, डुकृञ् करणे, आदृगमहनजनः किकिनौ लिट् च (पां ३ । २ । १७१ ।) इति तच्छील तद्धर्म्म तत्साधुकारिषु कर्त्तृषु किन्प्रत्ययः कित्वाद्गुणा-भावः, यणादेशः, लिड्वत्, द्विर्वचनं, द्विर्वचनेऽचि (पां १ । १ । ५९ ।) इति यणादेशस्य स्थानिवद्भावात् कृशब्दो द्विरुच्यते, अभ्यासस्य उरदत्वरपर-त्वहलादिशेषाः, किनो नित्त्वादाद्युदात्तः । विश्वानि, विशेः क्वन्, नित्त्वादाद्युदात्तः । चक्रये, इत्यस्य कृदन्ते प्रयोगेपि, कर्त्तृकर्म्मणोः कृति (पां २ । ३ । ६५ ।) इति षष्ठी न भवति, कि किनौ लिट् चेति किनो लिड्वद्भावेन, न लोकाव्ययनिष्ठा खलर्थतृनां (पां २ । ३ । ६९ ।) इति निषेधात् ॥ २ ॥

तृतीयामृचमाह मत्स्वा सुशिप्रेति । हे सुशिप्र हे शोभनहनो, शोभननासिक वा, शिप्रे हनू नासिके चेति यास्केनोक्तत्वात्, तादृश हे इन्द्र, मन्दिभिर्हर्षहेतुभिः स्तोमेभिः स्तोमैः स्तोत्रैः, आ सर्वतोभावेन मत्स्व हृष्टो भव, हे विश्वचर्षणे सर्वमनुष्ययुक्त, सर्वैर्यजमानैः पूज्येत्यर्थः, तादृशेन्द्र त्वं एषु यागगतेषु त्रिषु सवनेषु सच्चात्, देवैरन्यैः सहागच्छे-तिशेषः । मत्स्व, मदितृप्तीत्यस्य लोटि, अनित्यमागमशासनमित्युक्तत्वात्, इदितोनुमधातोरिति नुम् न भवति, अनुदात्तेत्वात्, तास्यनुदात्तेन्ङि-ददुपदेशात् (पां ६ । १ । १८६ ।) इति लसार्वधातुकाद्युदात्तत्वं, धातुस्वर एव, संहितायां, द्व्यचोऽतस्तिङः (पां ६ । ३ । १३५ ।) इति दीर्घत्वं । सुशिप्र, इत्यामन्त्रितनिघातः । मन्दिभिः, गतमन्त्रे व्याख्यातं । स्तोमेभिः, मन् प्रत्ययस्य नित्त्वादाद्युदात्तत्वं, बहुलं छन्दसीति भिसऐसादेशो न भवति । विश्वचर्षणे, निघातः स च उक्तः । एषु, ऊडिदमित्यादिना विभक्तेरुदात्तत्वं ॥ ३ ॥

चतुर्थीमृचमाह असृग्रमिन्द्रेति । हे इन्द्र, ते गिरस्त्वदीयाः स्तुती-रहयं सृष्टवानस्मि, ताश्च गिरः स्वर्गेऽवस्थितं त्वां प्रति उदहासत

१ ५ १ सञ्चोदय चित्रमर्वाग्राध इन्द्र वरेण्यं ।
असदित्ते विभु प्रभु ॥ १७ ॥

उद्गत्य प्राप्नुवन्, तादृशीर्गिरस्त्वं अजोषाः सेवितवानसि । कीदृशं त्वां वृषभं, कामानां वर्षितारं । पुनः कीदृशं पतिं सोमस्य पातारं, यजमानानां पालयितारं वा, पाता वा पालयिता वेति यास्केनोक्तत्वात् । असृग्रं, असृजं, सृज विसर्गे, लङो मिप्, तुदादिभ्यः शः, बहुलं छन्दसीति, अत्र विकरणस्य रुडागमः, जकारस्य गकारः, लुङ् लङ् लृङ्क्ष्वडुदात्तः ( पां ६ । ४ । ७१ । ) इत्यडागम उदात्तः, सतिशिष्टत्वात् स एव शिष्यते । गिरः, प्रातिपदिकस्वरः । अजोषाः, जुषी प्रीतिसेवनयोः, लङस्थास्, तुदादिभ्यः शः, तस्य छन्दस्युभयथेति आर्द्धधातुकत्वेन ङित्वाभावाल्लघूपधगुणः, थासस्सकारश्छान्दसः, सवर्णदीर्घः, अडागमः, सतिशिष्टत्वादुदात्तः शिष्यते । वृषभं, ऋषु वृषु मृषु सेचने, अभजित्यनुवृत्तौ, ऋषि वृषिभ्यां किदित्यभच्प्रत्ययः, कित्त्वाद्गुणाभावः, चित्त्वादन्तोदात्तः । पतिं, पा रक्षणे, पातेर्डतिः, डित्वाट्टिलोपः, प्रत्ययाद्युदात्तत्वं ॥ ४ ॥

पञ्चमीमृचमाह सञ्चोदयेति । हे इन्द्र, वरेण्यं श्रेष्ठं राधो धनं चित्रं मणिमुक्तादिरूपेण बहुविधं अर्वागस्मदभिमुखं यथा भवति तथा सञ्चोदय सम्यक् प्रेरय, भोगाय यावत् पर्य्याप्तं तावद्विभुशब्देन चोच्यते, ततोऽभ्यधिकं प्रभुशब्देन, तादृशं धनं ते तवैव असदित् अस्त्येव, तस्मादस्मभ्यं प्रयच्छेत्यर्थः । मघमित्यादिषु अष्टाविंशतिसङ्ख्यकेषु धननामसु राये राध इति पठितं । चोदय, चुद प्रेरणे, ण्यन्ताल्लोट्, तिङ्ङतिङ इति निघातः । राधः, राध्नुवन्त्यनेनेति राधो धनं, सर्वधातुभ्योऽसुन्, इत्यौणादिकोऽसुन्प्रत्ययः नित्वादाद्युदात्तः । वरेण्यं, वृञ एण्य इत्यौणादिकएण्यप्रत्ययः, वृषादित्वादाद्युदात्तः । असत्, अस भुवि, लेट्, तिप्, इतश्च लोपः परस्मैपदेषु ( पां ३ । ४ । ९७ । ) इतीकारलोपः, लेटोऽडाटावित्यडागमः, अदि प्रभृतिभ्यः शपः ( पां २ । ४ । ७२ । ) इति शपोलुक्, आगमा अनुदात्ता इति, अटोऽनुदात्तत्वाद्धातुस्वर एव । विभु, विभवतीति विभु, भुव इत्यनुवृत्तौ, विप्रसंभ्योड्वसञ्ज्ञायां ( पां ३ । २ । १८० । ) इति डुप्रत्ययः, डित्त्वाट्टिलोपः, प्रत्ययस्वरेणोकार उदात्तः । एवं प्रभु, ॥ ५

इति प्रथमस्य प्रथमे सप्तदशो वर्गः ॥

। ६ । अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः ।
तुविद्युम्न यशस्वतः ॥
। ७ । सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत् ।
विश्वायुर्धेह्यक्षितं ॥

इन्द्रेहीति सूक्ते षष्ठीमृचमाह अस्मान्त्स्विति। हे तुविद्युम्न प्रभूतधनेन्द्र, राये धनसिद्ध्यर्थं अस्माननुष्ठातॄन् तत्र कर्म्मणि सुचोदय सुष्ठु प्रेरय। कीदृशानस्मान् रभस्वतः, उद्योगवतः। पुनः कीदृशान्, यशस्वतः, कीर्त्तिमतः। तत्र, तच्छब्दात् सप्तम्यास्त्रल्, लिति (पां ६।१।१९३।) इतिप्रत्ययात् पूर्वस्योदात्तत्वं। इन्द्र, आमन्त्रिताद्युदात्तत्वं, पादादित्वान्न निघातः। राये, ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। रभस्वतः, रभ राभस्ये कार्य्योपक्रमे च, सर्वधातुभ्योऽसुन्, नित्त्वादाद्युदात्तः, मतुपः पित्त्वादनुदात्तत्वं, स्वादिष्वसर्वनामस्थाने (पां १।४।१७।) इति न पदत्वं, तसौ मत्वर्थे (पां १।४।१९।) इति भसञ्ज्ञया बाधितत्वात्, आकडारादेकासञ्ज्ञा (पां १।४।१।) इति नियमात्। तुविद्युम्न, तुवि बहु द्युम्नं धनं यस्य, षाष्ठिकमामन्त्रिताद्युदात्तत्वं। यशस्वतः, यशोऽस्यास्तीति मतुप्, अस्मायामेधास्रजो विनिः (पां ५।२।१२१।) इति विनिना न बाध्यते, मतुपः सर्वत्र समुच्चयात् यशस्शब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः, मतुपः पित्त्वात् स एव शिष्यते। अस्मान्त्सु इति पाठविशेषः, नश्च (पां ८।३।३०।) इति वैकल्पिको धुडागमः, तेनास्मान्सु अस्मान्त्सु इत्युभयमपि भवितुमर्हति॥६॥

सप्तमीमृचमाह सं गोमदिन्द्रेति। हे इन्द्र, श्रवो धनं अस्मे सन्धेहि अस्मभ्यं सम्यक् प्रयच्छ। कीदृशं श्रवः, गोमत्, बह्वीभिर्गोभिरुपेतं। पुनः कीदृशं वाजवत्, प्रभूतेनान्नेनोपेतं। पुनः कीदृशं पृथु, परिमाणेनाधिकं। पुनरपि कीदृशं बृहत्, गुणैरुपेतं। पुनश्च कीदृशं विश्वायुः, कृत्स्नायुष्यकारणं। पुनरपि कीदृशं अक्षितं, विनाशरहितं। गोमत्, वाजवदित्युभयत्र मतुपोऽनुदात्तत्वात् प्रातिपदिकस्वर एव, वाजशब्दो वृषादिराद्युदात्तः। अस्मे, अस्मच्छब्दाच्चतुर्थीबहुवचनस्य, सुपांसुलुगित्यादिना शे आदेशः, शित्त्वात् सर्वादेशः प्रातिपदि

। ८ । अस्मे धेहि श्रवो बृहद्द्युम्नं सहस्रसातमं ।
इन्द्र ता रथिनीरिषः ॥

कस्वरेणान्तोदात्तत्वं, शेषे लोपः (पां ७।२।९०) इतिटिलोपपक्षे उदात्तत्वनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं, अन्त्यलोपपक्षे अतोगुणे इति पररूपे, एकादेश उदात्तेनोदात्तः (पां ८।२।५) इत्युदात्तत्वं। प्रथु, प्रथख्यापने, प्रथि म्रदि भ्रस्जां सम्प्रसारणं सलोपश्चेत्यौणादिकः कुप्रत्ययः, रेफस्य सम्प्रसारणमृकारः, परपूर्वत्वं, न लघूपधगुणः। श्रूयत इति श्रवो धनं, असुन्प्रत्ययः, नित्त्वादाद्युदात्तः। बृहत्, प्रातिपदिकस्वरः। विश्वायुः, विश्वमायुर्यस्मिन् धने, विश्वशब्दः क्वन् प्रत्ययान्तः, तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते, परादिश्छन्दसि बहुलं (पां ६ । २ । १९९) इति पूर्वपदान्तोदात्तत्वं, एकादेश उदात्तेनोदात्त इत्युदात्तः। अक्षितं, क्षि क्षये इत्यस्मात्, अन्तर्भावितण्यर्थात् कर्म्मणि निष्ठा, तेन ण्यदर्थत्वात्, निष्ठायामण्यदर्थे (पां ६।४।६०।) इति न दीर्घत्वं, अतएव, क्षियो दीर्घात् (पां ८।२।४६।) इति न निष्ठानत्वं, नञ्समासे पूर्वदपदप्रकृतिस्वरत्वं ॥ ७ ॥

अष्टमीमृचमाह, अस्मे धेहीति। हे इन्द्र, बृहच्छ्रवः महतीं कीर्त्तिं अस्मे धेहि अस्मभ्यं प्रयच्छ, तथा सहस्रसातमं अतिशयेन सहस्रसङ्ख्यावद्गुणोपेतं द्युम्नं धनमस्मे धेहि, तथा ताः, व्रीहियवादिरूपेण प्रसिद्धा रथिनीर्वरूथोपेता इषोऽन्नान्यस्मे धेहि। अस्मे, सुपां सुलुगित्यादिना शे आदेशः। धेहि, घ्वसोरेद्धावभ्यासलोपश्च (पां ६।४।११९।) इति एत्वाभ्यासलोपौ। श्रूयत इति श्रवः, असुना नित्त्वादाद्युदात्तत्वं। सहस्रसातमं, सहस्रं षणुते ददातीति सहस्रसाः, षणु दाने, जन सन खन क्रम गमो विट् (पां ३।२।६७।) इति विट्, विड्वनोरनुनासिकस्यात् (पां ६।४।४१।) इत्याकारादेशः, धातुस्वरेणान्तोदात्तः, पुनः कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। रथा आसां सन्तीति रथिन्य इति, प्रत्ययस्याद्युदात्तत्वं, ऋन्नेभ्यो ङीप् (पां ४।१।५।) इति ङीप्, तस्य पित्त्वादनुदात्तत्वं। इषो यौगिकत्वे, धातुस्वररूढत्वे प्रातिपदिकस्वरः ॥ ८ ॥

। ९ । वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियं ।
होम गन्तारमूतये ॥
। १० । सुते सुते न्योकसे बृहद्बृहत एदरिः ।
इन्द्राय शूषमर्चति ॥ १८ ॥

नवमीमृचमाह वसोरिन्द्रमिति । वसोर्वसुनोऽस्मदीयस्य धनस्योतये रक्षार्थं होम वयमाह्वयामः, किं कुर्वन्तः, गीर्भिस्तुतिभिर्गृणन्तः स्तुवन्तः । कीदृशमिन्द्रं वसुपतिं धनपालकं । पुनः कीदृशं ऋग्मियं ऋचां मातारं । पुनश्च कीदृशं गन्तारं यागदेशगमनशीलं । वसोः, वस निवासे, शृस्वृस्निहीत्यादिना औणादिक उप्रत्ययः, निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः । वसुपतिं, समासान्तोदात्तत्वे प्राप्ते, पत्यावैश्वर्य्ये (पां ६ । २ । १८) इति पूर्वपदप्रकृतिस्वरत्वं । गीर्भिः, सावेकाच इति विभक्तेरुदात्तत्वं । गृणन्तः, गृ शब्दे, लटः शतृ, क्र्यादिभ्यः श्ना ( पां ३ । १ । ८१ । ) इति श्ना, शतुः, सार्वधातुकमपित् (पां १ । २ । ४ । ) इति ङित्त्वात्, श्नाभ्यस्तयोरातः ( पां ६ । ४ । ११२ । ) इत्याकारलोपः, शतुरकारस्य प्रत्ययस्वरेणोदात्तत्वं । ऋग्मियं, ऋचो मिमीत इति ऋग्मी तमृग्मियं, माङ् माने शब्दे च, क्विप् च ( पां । ३ । २ । ७६ । ) इति क्विप्, घुमास्थागापा (पां ६ । ४ । ६६ ।) इत्यादिना ईत्वं, चकारस्य, चोः कुः, (पां ८ । २ । ३०) इति कुत्वं, झलां जशोऽन्ते (पां ८ । २ । ३९ ।) इति ककारस्य गकारः, द्वितीयैकवचने, अचि श्नुधातु ( पां ६ । ४ । ७७ । ) इत्यादिना इयङादेशः, एरनेकाचः ( पां ६ । ४ । ८२ । ) इत्यादिना यणादेशः, सर्वे विधयश्छन्दसि विकल्प्यन्त इति परिभाषया तदुत्तरपदप्रकृतिस्वरेण ईकार उदात्तः । होम, आह्वयामः, ह्वेञ् स्पर्द्धायां शब्दे च, लट्, तस्यात्मनेपदेऽपि व्यत्ययेन मिप्, इकारस्य व्यत्ययेनाकारः, शपो बहुलं छन्दसीति लुक्, बहुलं छन्दसीति ह्वः सम्प्रसारणं परपूर्वत्वं, गुणः, धातोः ( पां ६ । १ । १६२ । ) इत्योकार उदात्तः, मिपः पित्स्वरेणानुदात्तत्वं । गन्तारं, गम्लृ सृप्लृ गतौ, ताच्छील्ये तृन्, नित्त्वादाद्युदात्तः । ऊतये, ऊति यूतीत्यादिना क्तिनुदात्तो निपातितः ॥ ९ ॥

दशमीमृचमाह सुते सुत इति । आकार इच्छब्दश्च पादपूरणौ, यद्वा व्याप्तिवचने आकारः आ ईषदर्थेऽभिव्याप्तावित्यभिधानात्,

## दशमसूक्तं ।

१ १ १ गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥

इच्छब्दोऽपि शब्दार्थः, इयर्त्ति गच्छति, अनुष्ठेयं कर्म्म प्राप्नोतीत्यरिर्यजमानः एदरिः, सर्वोऽपि यजमानः इन्द्राय सुते सुते इन्द्रार्थमभिषुते तत्तत्सोमे बृहत इन्द्रस्य शूषं बलं अर्चति स्तौति, इन्द्रस्य पराक्रमं प्रशंसतीत्यर्थः । कीदृशं शूषं बृहत् प्रौढं । कीदृशायेन्द्राय न्योकसे, नियतस्थानाय, बृहते प्रौढाय। सुते सुते, षु ञ् अभिषवे क्तप्रत्ययः प्रत्ययस्वरेणोदात्तः, नित्यवीप्सयोः ( पां ८। १। ४। इति वीप्सायां द्विर्भावः, तस्य परमाम्रेडितं ( पां ८। १। २। ) इति द्वितीयस्याम्रेडितत्वेनानुदात्तत्वं । न्योकसे, नियतमोकोयस्य तस्मै, निशब्दो निपाता आद्युदात्ता इत्याद्युदात्तः, तस्य यणादेशे, उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (पां । ८। १। ४। ) इत्योकारः स्वरितः। बृहते, बृहन्महतोरुपसङ्ख्यानमिति वार्तिकेनाजादिविभक्तेरुदात्तत्वं। अरिः, ऋगतौ, अचइरितीकारप्रत्यय औणादिक, गुणो रपरत्वं, प्रत्ययस्वरेणेकार उदात्तः । इन्द्राय ऋज्रेन्द्रेत्यादिना रन्प्रत्ययः, इकारउदात्तः शूषं। प्रातिपदिकस्वरः, अष्टाविंशतिसङ्ख्याकेषु बलनामसु शूषं सहः यह इति पठितं। अर्चति निघातस्वरः ॥ १० ॥ इति प्रथमस्य प्रथमेऽष्टादशो वर्गः ॥

गायन्तीति सूक्तस्य मन्त्रसङ्ख्याछन्दोविशेषश्चैवमनुक्रम्यते, गायन्ति द्वादशानुष्टुभं त्विति। तु हि ह वा इत्यादिपरिभाषायां तुशब्दस्य सूक्तद्वये परिभाषितत्वात्, अस्य सूक्तस्य वक्ष्यमाणस्य चानुष्टुभत्वं द्रष्टव्यं ऋषिदेवते पूर्ववत्, अभिप्लवषडहस्योक्थ्येषु तृतीयसवनेऽच्छावाकस्य गायन्तीति स्तोत्रियस्तृचः । एह्युष्विति खण्डे गायन्ति त्वा गायत्रिण आत्वा गिरो रथीरिवेति सूत्रितं, अस्मिंस्तृचे प्रथमामृचमाह गायन्ति त्वेति। हे शतक्रतो बहुकर्म्मन् बहुप्रज्ञ वेन्द्र, त्वां गायत्रिण उद्गातारो गायन्ति स्तुवन्ति, अर्किणोऽर्चनहेतुमन्त्रयुक्ता होतारोऽर्कमर्चनीयमिन्द्रमर्चन्ति शस्त्रगतैर्मन्त्रैः प्रशंसन्ति, ब्रह्माणो ब्रह्मप्रभृतय इतरे ब्राह्मणास्त्वामुद्येमिरे उन्नतिं प्रापयन्ति, तत्र दृष्टान्तः वंशमिव यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतं कुर्वन्ति, यथा वा

१ २ १ यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वं १
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥

सन्मार्गवर्त्तिनः स्वकीयं कुलं उन्नतं कुर्वन्ति तद्वत्, एतामृचं यास्क एवं व्याचष्टे, गायन्ति त्वा गायत्रिणः प्रार्चन्ति* ऽर्कमर्किणो, ब्रह्माणस्त्वा शतक्रत उद्येमिरे वंशमिव वंशो वनशयो भवति, वननाच्छ्रूयत इति वेति । अर्कशब्दं बहुधा व्याचष्टे, अर्को देवो भवति यदेनमर्चन्ति, अर्को मन्त्रो भवति यदनेनार्चन्ति, अर्कमन्नं भवति यदर्चति भूतानि, अर्को वृक्षो भवति संवृतः कटुकिम्नेति । गायन्ति, शप्तिङौ, पित्त्वात्सार्वधातुकत्वाच्चानुदात्तौ, धातुस्वरः । गायत्रिणः, गायत्रं साम येषां स्तोतॄणामस्ति ते, अत इनिठनौ ( पा ५ । २ । ११५ ।) इतीनि प्रत्ययः प्रत्ययस्वरेणेकार उदात्तः । अर्चन्ति, अर्च पूजायां भौवादिकः शप्तिङावनुदात्तौ धातुस्वर एव पादादित्वान्न निघातः । अर्कं, अर्च्यतेभिरित्यर्का मन्त्रास्तैरर्चनीयतया तदात्मक इन्द्रोऽपि लक्षणयार्कः, पुंसि सञ्ज्ञायां घः प्रायेण (पा ३ । ३ । ११८ ।) इति करणे घः, चजोः कुघिण्यतोः ( पा ७ । ३ । ५२ ) इति चकारस्य कुत्वं, ककारः प्रत्ययस्वरेणान्तोदात्तः । अर्का मन्त्रा एषां सन्तीत्यर्किणो होतारः । एकाक्षरात् कृतो जातेः सप्तम्याञ्च न तौ स्मृताविति कारिकार्थेन कृदन्तादिनिठनौ यद्यपि प्रसिद्धौ, तथाप्यत्र व्यत्ययादिनिः, प्रत्ययस्वरेणेकार उदात्तः । ब्रह्माणः, प्रातिपदिकस्वरेणान्तोदात्तः । शतक्रतो, निघातः । संहितायामवादेशे, लोपः शाकल्यस्येति वकारलोपः । वंशशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चेति वार्त्तिकेन स एव शिष्यते । येमिरे, यमु उपरमे, तिङ्ङतिङः (पा ८ । १ । २८ ।) इति निघातः ॥ १ ॥

द्वितीयामृचमाह यत्सानोरिति । यद्यदा सानोः सानुमारुहत् यजमानः सोमवल्ली समिदाद्याहरणाय एकस्मात् पर्वतभागादपरपर्वतमारूढवान्, तथा भूरि प्रभूतं कर्त्वं कर्म्म सोमयागरूपं अस्पष्ट स्पृष्टवान् उपक्रान्तवानित्यर्थः, तत्तदानीमिन्द्रः अर्थं यजमानस्य प्रयोजनं चेतति जानाति, ज्ञात्वा च कामानां वर्षिता सन् यूथेन मरुद्गणेन

---

* प्रार्चन्निति का, ख ।

१ ३ १ युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥

सच एजति कम्पते, स्वस्थानाद्यत्रभूमिमागन्तुमुद्युङ्क्त इत्यर्थः। सानोः, षणु दाने, सनोति ददाति निवसतामवकाशमिति सानुः, दृ सनि जनि चरि चटि वह्निभ्यो ञुण्, णित्त्वादुपधाया वृद्धिः ञित्त्वादाद्युदात्तत्वं। आवहत्, वहेर्लङि तिपि शपि सञ्ज्ञापूर्वको विधिरनित्य इति परिभाषया लघूपधगुणो न भवति, लुङ् लङ् लृङ्क्ष्वडुदात्तः, सति शिष्टत्वात् स एव शिष्यते, निपातैर्यद्यदिहन्त (पां ८।१।३०) इति निपातयुक्तस्य तिङोऽनुदात्तत्वनिषेधात् निघातो न भवति। भूरि, अदिशदिभूशुभिभ्यः क्रिन्, कित्त्वाद्गुणाभावः, नित्त्वादाद्युदात्तः। अस्पृष्ट, स्पृश संस्पर्शनोपक्रमयोः, स्वरितञितः (पां १।३।७२) इत्यात्मनेपदं, लङः प्रथमपुरुषैकवचनं, त, बहुलं छन्दसीति शपो लुक्, व्रश्चादिना षत्वष्टुत्वे, लुङ् लङ् लृङ्क्ष्वडुदात्तः (पां ६।४।७१) इत्यडागम उदात्तः स एव शिष्यते, अनुषङ्गेण यच्छब्दयोगान्निघाताभावः। कर्त्वं, डुकृञ् करणे, अन्येभ्योऽपि दृश्यते (पां ३।२।१७८) इति क्विप्, गुणो रपरत्वं, क्विपः सर्वापहारी लोपः, करोभावः कर्त्वं व्यत्ययेनाद्युदात्तत्वं * छत्यार्थत्वनक्। अर्थं, अर्त्तेः उषिकुषिगर्त्तिभ्यस्थन्, नित्त्वादाद्युदात्तः। यूथेन, तिथपृष्ठगूथयूथप्रोथा इति थक्प्रत्ययान्तो निपातितः। वृष्णिः, निरित्यनुवृत्तौ, सृवृषिभ्यां किदिति निप्रत्ययान्तः, कित्त्वाद्गुणाभावः प्रत्ययस्वरेणान्तोदात्तः। एजति, एजृ कम्पने, तिङ्ङतिङ इति निघातः॥ २॥

तृतीयामृचमाह युक्ष्वा हि केशिनेति। हे सोमपा सोमपानयुक्तेन्द्र, हरी, त्वदीयावश्वौ युक्ष्वाहि, सर्वथा संयोजय, अथानन्तरं नोऽस्मदीयानां गिरां स्तुतीनां उपश्रुतिं समीपे श्रवणमुद्दिश्य चर तत्प्रदेशं गच्छ। कीदृशौ हरी, केशिना स्कन्धप्रदेशे लम्बमानकेशयुक्तौ। पुनः कीदृशौ, वृषणा सेचनसमर्था युवानौ। पुनरपि कीदृशौ, कक्ष्यप्रा अश्वस्योदरबन्धनरज्जुः कक्षा, तत्रभवः कक्ष्यस्तस्य पूरकौ पुष्टाङ्गावित्यर्थः। युक्ष्व, प्रसोऽलोपश्छान्दसः, सतिशिष्टत्वेन प्रत्ययस्वरः शिष्यते।

---

* छत्यार्थत्वनक् इति कां म नास्ति।

१ ४ १ एहि स्तोमाँ अभिस्वराभिगृणीह्यारुव ।
ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्धय ॥

द्व्यचोऽतस्तिङः ( पां ६ । ३ । १३५ । ) इति संहितायां दीर्घत्वं । केशिना, प्रशस्ताः केशा अनयोः सन्तीति मत्वर्थीय इनि प्रत्ययः, प्रत्ययस्वरः, सुपांसुलुगित्यादिना द्विवचनस्याकारादेशः । वृषणा, एषु वृषु मृषु सेचने, कनिन्यु वृषि तक्षि राजि धन्वि द्यु प्रति दिव इति कनिन् प्रत्ययः, ञ्नित्यादिर्नित्यं ( पां ६ । १ । १९७ ) इति नित्त्वादाद्युदात्तः, वा सपूर्वस्य निगमे ( पां ६ । ४ । ९ । ) इति उपधायाः पक्षे दीर्घाभावः, पूर्ववदाकारः । कक्ष्यप्रा, कक्षयोर्भवं कक्ष्यं सूत्रं, तत्प्रातः पूरयतः पुष्टत्वादिति कक्ष्यप्रा, प्रा पूरणे, आतोऽनुपसर्गे कः ( पां ३ । २ । ३ ) इति कप्रत्ययः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वं, आकारः पूर्ववत् । अथ, निपातस्य च ( पां ६ । ३ । १३६ । ) इति संहितायां दीर्घः । नः, अनुदात्तं सर्वमपादादौ ( पां ८ । १ । १८ । ) इत्यनुवृत्तौ, बहुवचनस्य वस्नसौ ( पां ८ । १ । २१ । ) इति नसादेशोऽनुदात्तः । इन्द्र, सोमपा, उभौ आमन्त्रितत्वा चेति सर्वानुदात्तौ । गिरां, सावेकाचस्तृतीयादिर्विभक्तिः ( पां ६ । १ । १६८ । ) इति विभक्तिरुदात्ता । उपशब्दो निपातत्वादाद्युदात्तः । श्रुतिशब्देन प्रादिसमासे प्रकृतिस्वरत्वे प्राप्ते, तादौ च निति कृत्यतौ ( पां ६ । २ । ५० । ) इति तुवर्जिततादिपरत्वाद्गतेः प्रकृतिस्वरः । चर, निघातः ॥ ३ ॥

विशेषविनियोगस्तु यत्र श्रौतो न सूत्रितः । स्मार्त्तं तत्र विजानीयाद्दृग्विधानादिसूत्रतः । एहि स्तोमानित्यृगेषा सूत्रे विशेषाकारेण न विनियुक्ता, साधारणविनियोगस्तु ब्रह्मयज्ञादौ सर्वत्रानुसन्धेयस्तामेतां सूक्तगतां चतुर्थीमृचमाह एहि स्तोमानिति । हे वसो निवासकारणभूतेन्द्र, एहि अस्मिन् कर्मण्यागच्छ, आगत्य च स्तोमानुद्गातृप्रयुक्तानि स्तोत्राणि अभिस्वर अभिलक्ष्य प्रशंसारूपं शब्दं कुरु । तथाध्वर्युमभिलक्ष्य गृणीहि शब्दं कुरु । तथा होतृप्रयुक्तानि शस्त्राणि आ अभिलक्ष्य रुव रुहि शब्दं कुरु । परितोषेण सर्वानृत्विजः प्रशंसेत्यर्थः । तत ऊर्द्धं, नोऽस्माकं ब्रह्म चान्नं च यज्ञमनुष्ठीयमानं कर्म्म च सचा सह वर्द्धय, साङ्गसम्पादनेन यज्ञं वर्द्धयित्वा तत्फलमस्मभ्यं प्रदेहि कुरु । अन्धस्त्यादिष्वष्टाविंशति सङ्ख्याकेष्वन्ननामसु

। ५ । उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिःपिधे ।
शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥

मघ्न वर्धं इति पठितं। इहि, इण् गतौ, सेर्हिः, हेरपित्त्वेन ङित्त्वाद्गुणाभावः, निघातः, आङासह गुणः, एकादेश उदात्तेनोदात्त इत्युदात्तः। स्तोमान्, अर्त्तिस्तुस्वित्यादिना मन्, नित्त्वादाद्युदात्तः, उत्तरपदेन संहितायां नकारस्य, दीर्घादटिसमानपादे (पां ८।३।९) इति रुत्वं, आतोटिनित्यं (पां ८।३।३) इत्याकारस्य सानुनासिकता, भो भगो अघो अपूर्वस्य योऽशि (पां ८।३।१७) इति यत्वं, तस्य, लोपः शाकल्यस्य (पां ८।३।१९) इति लोपः, तस्यासिद्धत्वात् स्वरसन्धिर्न भवति। अभि, एवमादीनामन्त इत्यन्तोदात्तः। स्वर, स्वृ शब्दोपतापयोः निघातः। आभ इतिगतं। गृणीहि, गृ शब्दे, सेर्ह्यपिच्च (पां ३।४।८७।) इति हिः, क्र्यादिभ्यः श्ना, ईहल्यघोः (पां ६।४।११३।) इतीत्वं, प्वादीनां ह्रस्वः (पां ७।३।८०।) इति ऋकारस्य ऋकारः, ऋवर्णाच्चेति वक्तव्यमिति णत्वं, तिङ्ङतिङ इति निघातः। रुव, रु शब्दे, सेर्ह्यपिच्च (पां ३।४।८७।) इति सेर्हिः, अपि प्राप्ते व्यत्ययेन शः, तस्य ङित्त्वेन गुणाभावादुवङादेशः, अतो हेः (पां ६।४।१०५।) इति हेर्लुक्, तिङ्ङतिङ इति निघातः। ब्रह्म, बृह बृहि वृद्धौ सर्व्वधातुभ्यो मनिन्नित्यनुवृत्तौ, बृंहेर्नोऽच्चेति मनिन्, तत्सन्नियोगेन नलोपः, अमागमश्च, मिदचोऽन्त्यात् परः (पां १।१।४७।) इति ऋकारात् परो यणादेशः, मनिनो नित्त्वादाद्युदात्तत्वं। वसो, आमन्त्रितनिघातः। यज्ञं, यजयाच् रुच प्रवचर्चश्च (पां ७।३।६६।) इति नङ्, प्रत्ययस्वरः। वर्द्धय, निघातः, अत्र चकारद्वयश्रवणादियमेव तिङ्विभक्तिः पूर्व्ववाक्येष्वनुषज्यते, अतोऽनुषक्तैव प्रथमा न श्रुतेत्यश्रुतायाश्चवा योगे प्रथमेति निघातनिषेधो न भवति॥ ४॥

अभिप्लवषडहगतोक्थेषु अच्छावाकस्य तृतीयसवने उक्थमिन्द्राय शंस्यमित्यनुरूपस्तृचः एह्यूष्विति खण्डे इन्द्रं विश्वा अवीवृधन् उक्थमिन्द्राय शंस्यमिति सूत्रितं, तस्मिंस्तृचे प्रथमा सूक्ते पञ्चमीमृचमाह उक्थमिन्द्रायेति। इन्द्रायेन्द्रार्थं वर्द्धनं वृद्धिसाधनं उक्थं शस्त्रं शंस्यं अस्माभिः शंसनीयं। कीदृशायेन्द्राय, पुरु निःषिधे बहूनां शत्रूणां निषेधकारिणे। शक्र इन्द्रो नोऽस्मदीयेषु सुतेषु पुत्त्रेषु सख्येषु

च सखित्वेष्वपि, यथा येन प्रकारेण रारणत् अतिशयेन शब्दं कुर्य्यात्, तथा शंस्यमिति पूर्व्वेणान्वयः, अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रोऽस्माकं पुत्रान् अस्मत्सख्यानि च बहुधा प्रशंसत्वित्यर्थः। उक्थं, वचेस्थक् प्रत्ययः, प्रत्ययस्वरः। शंस्यं, शंसु स्तुतौ, ण्यन्तादचो यत्, णेरनिटीति णिलोपः, तित्स्वरिते प्राप्ते, यतोऽनावः (पां ६।१।२१३।) इत्याद्युदात्तत्वं। वर्द्धनं, करणाधिकरणयोश्च (पां ३।३।११७।) इति करणे ल्युट्, लितीतिप्रत्ययात् पूर्व्वस्योदात्तत्वं। पुरुनिष्षिधे, बहूनां शत्रूणां निषेधकाय, षिधु गत्यां, धात्वादेः षः सः (पां ६।१।६४।) इति षस्य सत्वं, अत्र निरित्युपसर्गस्य निःशब्दसमानार्थस्य प्राक्प्रयोगः, क्विप्चेति क्विप्, क्विपः सर्व्वापहारी लोपः, कुगतिप्रादयः (पां २।२।।१८) इति प्रादिसमासः, निसः सकारेण इणो व्यवधानं छान्दसत्वादनादृत्य, उपसर्गात् सुनोति (पां ८।३।६५।) इत्यादिना धातुसकारस्य षत्वं, निसः सकारस्य, ष्टुना ष्टुः (पां ८।४।४१।) इति ष्टुत्वं, पुरुशब्देन कर्म्मणि षष्ठ्यन्तेन समासः, षिधेर्धातुस्वरेणोदात्तत्वं, निःषिध इति प्रादिसमासे कृते कृदुत्तरपदप्रकृतिस्वरत्वं, कृदुत्तरे गतिकारकपूर्व्वस्यापि ग्रहणात् पुनः कारकसमासेऽपि स एव स्वरः। शक्नोतीति शक्रः, स्फायितञ्चि वञ्चि शकीत्यादिना रक्प्रत्यय औणादिकः, प्रत्ययस्वरः। यथा, प्रकारवचने थाल्, लित्स्वरेण प्रत्ययात् पूर्व्वोऽकार उदात्तः। सुतेषु, क्तः, प्रत्ययस्वरेणोदात्तः। नसो नकारस्य, नश्च धातुस्थोरुषुभ्यः (पां ८।४।२७।) इति संहितायां णत्वं। रारणत्, रणधातुः शब्दार्थकः, धातोरेकाचो हलादेः क्रियासमभिहारे यङ् (पां ३।१।२२।) इति यङ्, यङोऽचि च (पां २।४।७४।) इति तस्य लुक्, प्रत्ययलक्षणेन द्विर्भावो हलादिशेषः, दीर्घोऽकितः (पां ७।४।८३।) इति दीर्घः, प्रत्ययलक्षणेन, सनाद्यन्ता धातवः (पां ३।१।३२।) इति धातुसञ्ज्ञायां लिङर्थे लेट् (पां ३।४।७।) इति हेतुहेतुमद्भावलक्षणे लिङर्थे लेट्, अत्र हि इन्द्रकर्त्तृकं रारणनमुक्थशंसनस्य कर्त्तव्यत्वेन हेतुः, लेटस्तिप्, इतश्च लोपः परस्मैपदेषु (पां ३।४।९७।) इति इकारलोपः, लेटोऽडाटौ (पां ३।४।९४।) इत्यडागमः, कर्त्तरि शप् तस्य, चर्करीतं परस्मैपदमदादिवच्च द्रष्टव्यमिति वार्त्तिकेनादादिवद्भावात्, अदिप्रभृतिभ्यः शपः (पां २।४।७२।) इति शपः प्राप्तो लुक्, बहुलं छन्दसीति निषिध्यते, शपोऽनुदात्तत्वाद्धातोरन्त उदात्त एव शिष्यते, शपा लसार्वधातुकस्य व्यवधानात् तत्र परतो

१६ तमित्सखित्व ईमहे तं राये तं सुवीर्ये ।
स शक्र उत नः शकदिन्द्रो वसु दयमानः ॥ १६ ॥

विधीयमानं, अभ्यस्तानामादिः ( पां ६ । १ । १८९ । ) इत्याद्युदात्तत्वं न भवति, न च तिङ्ङतिङ इति निघातः, अत्र यथाशब्दयोगेन, यावद्यथाभ्यां ( पां ८ । १ । ३६ । ) इति निषेधाद्यवायोगे प्रथमेति वा च निघातो न भविष्यति, तत्र ह्युत्तरवाक्ये सख्येषु चेति चानुकृष्टवि-भक्त्यपेक्षया इयं प्रथमा तिङ्विभक्तिः । सख्येषु, सख्युः कर्म्माणि सख्यानि तेषु, कर्म्मणि चेत्यनुवृत्तौ, सख्युर्यः ( पां ५ । १ । १२६ । ) इति सखिशब्दाद्यः प्रत्ययः, तत्र भसञ्ज्ञायां, यस्येति च ( पां ६ । ४ । १४८ । ) इतीकारलोपः, प्रत्ययस्वरः ॥ ५ ॥

षष्ठीमृचमाह तमित्सखित्व इति । सखित्वे निमित्तभूते सति तमित् तमेवेन्द्रं ईमहे प्राप्नुमः, तथा राये धनार्थं तमीमहे, तथा सुवीर्य्ये शोभनसामर्थ्यनिमित्तं तमीमहे, उत अपि च, शक्रः शक्तिमान् स इन्द्रो नोऽस्मभ्यं वसु धनं दयमानः प्रयच्छन् शकदस्मदीयरक्षणे शक्तो ऽभूत् । समदशस्तु याच्ञाकर्म्मसु ईमहे याचामीति पठितं, तदनुसा-रेणेन्द्रं याचामहे इति व्याख्येयं । सख्युर्भावः सखित्वं, तस्य भाव-स्त्वतलौ ( पां ५ । १ । ११९ । ) इति त्वः, प्रत्ययस्वरेणोदात्तः । ईमहे, ईङ् गतौ, ङित्त्वादात्मनेपदं, दिवादिभ्यः श्यन् ( पां ३ । १ । ६९ । ) इति श्यन्, बहुलं छन्दसीति श्यनो लुक्, तिङ्ङतिङ इति निघातः । राये, ऊडिदं ( पां ६ । १ । १७१ । ) इति विभक्तेरुदात्तत्वं । सुवीर्य्ये, सुष्ठुवीर्य्यं यस्यासौ सुवीर्य्यः, भविष्यद्वाचिनानेन भावो लक्ष्यते, सुवी-र्य्यत्वायेत्यर्थः, बहुव्रीहावित्यनुवृत्तौ, वीरवीर्य्यौ च ( पां ६ । २ । १२० । ) इत्युत्तरपदाद्युदात्तत्वं । शक्नोतीति शक्रः, स्फायितञ्चिवञ्चिशकीत्यादिना रक्प्रत्यय औणादिकः, प्रत्ययस्वरः । शकत्, शक्लृ शक्तौ, धातुसम्बन्धा-धिकारे, छन्दसि लुङ्लङ्लिटः ( पां ३ । ४ । ६ । ) इति लुङ्, यतः शक्नोति अतस्तमीमहे इति धातुसम्बन्धः, लुङस्तिप्, पुषादिद्यु-ताद्यॢदितः परस्मैपदेषु ( पां ३ । १ । ५५ । ) इति च्लेरङादेशः, बहुलं छन्दसीत्यडागमाभावः, तिङ्ङतिङः ( पां ८ । १ । २८ । ) इति निघातः । वसु, निदित्यनुवृत्तौ वसेरुप्रत्ययः, नित्त्वादाद्युदात्तत्वं । दयमानः, दय दान गति रक्षण हिंसा दानेषु, अनुदात्तेत्त्वादात्मने-

। ७ । सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः ।
गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥

पदं, लटः शानजादेशः, शपः पित्त्वादनुदात्तत्वं, शानचश्चित इत्यन्तोदात्तत्वं बाधित्वा, तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ( पां ६ । १ । ११८ । ) इति लसार्वधातुकत्वादनुदात्तत्वं, धातुस्वर एव शिष्यते ॥ ६ ॥ इति प्रथमस्य प्रथमे एकोनविंशो वर्गः ॥

गायन्तीति सूक्ते सप्तमीमृचमाह सुविवृतमिति । हे इन्द्र, यशोऽन्नं कर्म्मफलभूतं सुविवृतं सुष्ठु सर्वत्र प्रवृतं । सुनिरजं सुखेन निःशेषं प्राप्तुं शक्यं । त्वादातमित्, त्वया शोधितञ्च सम्पन्नमिति शेषः । इतः परं क्षीरादिरसलाभार्थं गवां व्रजं निवासस्थानं अपवृधि अपवृतमुखमुद्घाटितद्वारं कुरु । हे अद्रिवः पर्वतोपलक्षितवज्रयुक्तेन्द्र राधो धनं कृणुष्व सम्पादय । सुविवृतं, वृञ् वरणे, कर्म्मणि क्तः प्रत्ययः, विशब्देन प्रादिसमासः, विवृतमित्यत्र कृदुत्तरपदप्रकृतिस्वरं बाधित्वा कर्म्मवाचिनि क्तान्ते परतः, गतिरनन्तरः ( पां ६ । २ । ४९ । ) इति पूर्वपदप्रकृतिस्वरे प्राप्ते, परादिश्छन्दसि बहुलं ( पां ६ । २ । १९९ । ) इति ऋकार उदात्तः, पुनः सुशब्देन समासे कृदुत्तरपदप्रकृतिस्वरेण स एव ऋकार उदात्तः । ननु वृतमित्येव कृदन्तं नतु विवृतमिति, प्रत्ययग्रहणे यस्मात् सविहितस्तदादेस्तदन्तस्य ग्रहणमिति वचनात् सुविवृतमित्यत्र च समासे वृतमित्येतावन्मात्रं नोत्तरपदं किन्तु विवृतमिति, तत् कथं कृदुत्तरपदप्रकृतिस्वरत्वमिति चेत्, तदुच्यते, प्रत्ययग्रहणपरिभाषापवादेन कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमित्यनेन विवृतमित्यस्यापि कृदन्तव्यपदेशोपपत्तेः । ननु विवृतमित्यस्य यथा कृदन्तव्यपदेशः, एवं क्तान्तव्यपदेशोऽप्यस्ति तयैव परिभाषया, तथाच कर्म्मणि क्तान्ते उत्तरपदे परतो गतिरनन्तर इति सुशब्दस्य प्रकृतिस्वरः प्राप्नोति, न चात्रापि परादिश्छन्दसि बहुलमित्येवं नास्ति निस्तारः । तथा हि सति सुविवृतमित्यत्र विवृतमित्येवोत्तरपदमिति विवृतमिति समासे यद्यपि ऋकार एवोदात्तः स्यात्, विवृतमिति ऋकारः पदादिर्भवति, तथापि सुविवृतमिति समासस्य सतिशिष्टत्वेन बलीयस्त्वात् तत्रत्य एवोत्तरपदादौ इकार एवोदात्तस्वरेण भवितव्यमिति, उच्यते, गतिरनन्तर इत्यत्र क्तानुवृत्तेः क्तग्रहणे कृद्ग्रहणपरिभाषा नाश्रीयते, तदाश्रयणे

व्यवहितगतावपि प्रकृतिस्वरे सत्यनन्तरग्रहणमनर्थकं स्यात्, अने-
नैव चाभिप्रायेणानन्तरग्रहणस्य प्रयोजनमभ्युद्धृतमित्यत्र व्यवहित-
स्याभिशब्दस्य माभूदिति प्रत्युदाहृतं, तस्मात् सुविहृतमिति ऋकार
एवोदात्त इति स्थितं । सुनिरजं, अनायासेन निरवशेषं प्राप्यं,
अजगतिक्षेपणयोः, सुनिसोरुपसर्गयोः प्राक्प्रयोगः, ईषद्दुःसु-
षु कृच्छ्राकृच्छ्रार्थेषु खल्, (पां ३।३।१२६।) इति खल् । न चात्र सुश-
ब्दस्य निसाव्यवधानं शङ्कनीयं, सुशब्दस्य ह्युपपदमात्रं खलोनिमित्तं
नानन्तर्य्यं, अतएव सुपरिहरं दुष्परिहरमित्यादयः प्रयोगा इति,
पूर्ववद्गतिसमासे, ञ्निति (पां ६।१।१९७।) इति प्रत्ययात् पूर्वमु-
दात्तमिति धात्वकार उदात्तः, निसासमासे कृदुत्तरपदप्रकृतिस्वरेण
स एव शिष्यते, पुनः सुशब्देन समासे कृद्ग्रहणे गतिकारकपूर्वस्यापि
ग्रहणमिति परिभाषया कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते ।
त्वादातं, त्वया शोधनेन विशदीकृतं, दैप् शोधने, आदेच उपदेशे-
ऽशिति (पां ६।१।४५।) इत्यात्वं, सत्यपि हि पकारे, नानुबन्ध-
कृतमनेजन्तत्वमित्येजन्त एवायं, निष्ठा (पां।३।२।१०२।) इति
कर्म्मणि क्तः, दाधाघ्वदाप् (पां १।१।२०।) इत्यत्रादाप् इति निषे-
धेन घुसञ्ज्ञाया अभावात्, दोदद्घोः (पां ७।४।४६।) इति ददा-
देशो न भवति । ननु दाप् लवन इति प्रतिपदोक्तस्यैव दापस्त-
त्रादाविति निषेधः, न पुनर्लाक्षणिकस्य दैपः, लक्षणप्रतिपदोक्तयोः प्रति-
पदोक्तस्यैव ग्रहणं, नतु लाक्षणिकस्येति नियमादिति चेन्न, गापा-
दाग्रहणेष्वविशेष इति वार्त्तिकेन प्रतिप्रसवात्, युष्मच्छब्दात्तृतीयै-
कवचनस्य, सुपांसुलुगिति डादेशः, त्वमावेकवचने (पां ७।२।९७।)
इति मपर्य्यन्तस्य त्वादेशः, अतोगुणे (पां ६।१।९७।) इति पर-
रूपत्वं, भसञ्ज्ञायां, टेः (पां ६।४।४३।) इत्यदसोऽकारस्य लोपे
उदात्तनिवृत्तिस्वरेणाकार उदात्त, कर्त्तृकरणे कृताबहुलं (पां २।१।
३२।) इति तृतीयासमासः, तत्पुरुषे कृतिबहुलं (पां ६।३।१४।)
इति तृतीयाया अलुक्, कृदुत्तरपदप्रकृतिस्वरे प्राप्ते, तृतीया कर्म्मणि
(पां ६।२।४८।) इति पूर्वपदप्रकृतिस्वरत्वं । यशः, अशूव्याप्तौ, अशे-
र्देवने युट्चेत्यसुन्, तत्सन्नियोगेन धातोर्युडागमः, नित्त्वादाद्युदात्तत्वं ।
गवां, प्रातिपदिकस्वरः, सावेकाच इति विभक्तेरुदात्तत्वं प्राप्तं, न
गोश्वन्साववर्णेति निषिध्यते । वृधि, वृञ् वरणे, श्रुशृणुपृकृवृभ्यश्छन्दसि
(पां ६।४।१०२।) इति हेर्धिरादेशः, बहुलञ्छन्दसीति श्नोरपि

। ८ । न हि त्वा रोदसी उभे ऋघायमाणमिन्वतः ।
जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥

लुक्, निघातः । कृणुष्व, कृविर्हिंसाकरणयोश्चेति धातुः, इदितो-
नुम्, व्यत्ययेनात्मनेपदं, लोटस्थास्, थासस्से (पां ३ । ४ । ८० ।) इति
थासः से आदेशः, सवाभ्यां वामौ (पां ३ । ४ । ९१ ।) इति व आदेशः,
कर्त्तरि शपि प्राप्ते, धिन्विकृण्व्योरच (पां ३ । १ । ८० ।) इत्यु प्रत्ययः,
तत्सन्नियोगेन वकारस्याकारः, तस्य, अतोलोपः (पां ६ । ४ । ४८ ।)
इति लोपः, अचः परस्मिन् पूर्वविधौ (पां १ । १ । ५७ ।) इत्यकार-
लोपस्य स्थानिवद्भावाल्लघूपधगुणो न भवति, अत्र सतिशिष्टस्वर-
बलीयस्त्वमन्यत्र विकरणेभ्य इति सति शिष्टमपि विकरणस्वरं बाधित्वा
थङ एव प्रत्ययाद्युदात्तत्वं । राधः, असुन्नन्तो नित्त्वादाद्युदात्तः ।
अद्रिवः, अद्रिर्वज्रं तदस्यास्तीति मतुप्, छन्दसीरः (पां ८ । २ ।
१५ । इति मस्य वत्वं, सम्बुद्धौ, उगिदचां (पां ७ । १ । ७० ।) इति नुम्,
हल्ङ्यादिसंयोगान्तलोपौ, मतुवसोरुसम्बुद्धौ छन्दसि (पां ८ । ३ ।
१ ।) इति रुत्वं, विसर्ज्जनीयः, आमन्त्रितस्य चेति निघातः ॥ ७ ॥

अष्टमीमृचमाह न हि त्वेति । हे इन्द्र, ऋघायमाणं शत्रुवधं
कुर्वाणं त्वां रोदसी द्यावापृथिव्यावपि त्वदीयं महिमानं नहि
इन्वतः, व्याप्तुं न समर्थे इत्यर्थः, तादृशस्त्वं स्वर्वतीः .स्वर्लोकयुक्ता
अपो वृष्टिरूपाः जेषो जयेः, प्रेरयेत्यर्थः, अपां स्वर्गसम्बन्धश्चान्यत्र
दिवो वृष्टिं * च्यावयति सततमिति, किञ्च वृष्टिप्रदानाच्चान्नसम्पत्तेरूर्द्धं
अस्मभ्यं क्षीरादिरसप्रदा गाः संधूनुहि सम्यक्प्रेरय । नहि, नञो
हिशब्देन, सहसुपा (पां २ । १ । ४ ।) इति समासः, समासत्वादन्तो-
दात्तत्वं । त्वा, अनुदात्तं सर्वमित्यनुवृत्तौ, त्वामौ द्वितीयाया इति
त्वादेशः । रोदसी, रुदेरसुन्, नित्त्वादाद्युदात्तः, उगितश्च (पां ४ । १ ।
६ ।) इति ङीप् । उभे, प्रातिपदिकस्वरेणान्तोदात्तः, समासएकदेश
उदात्तः । ऋघायमाणं, नॄन् हन्तीति ऋघा, अन्येभ्योऽपिदृश्यन्ते (पां ३ ।
२ । ७५ ।) इति विच्, दृशिग्रहणस्यविध्यन्तरोपसङ्ग्रहणार्थत्वान्नकार-
लोपो हकारस्य च घकारः, अनृघा ऋघा भवतीत्यभूततद्भावे, लोहि-

( * च्यवयतीति कांभं )

१ ९ १ आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः ।
इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरं ॥

तादिडाजभ्यः क्यष् ( पां ३ । १ । १३ । ) इति क्यष्प्रत्ययो भवति, सत्याकृतिगणः, लोपश्च हलइत्यनुवर्त्तनेनकारलोपश्च, वाक्यषः ( पां १ । ३ । ९० । ) इत्यात्मनेपदं, लटः शानच्, शपोऽदुपदेशात् परत्वाच्छानचो लसार्वधातुकानुदात्तत्वं, क्यषः प्रत्ययस्वरः, एकादेशस्योदात्तत्वं । इन्वतः, इति व्याप्तौ, इदितो नुम्धातोः (पां ७ । १ । ५८ । ) इतिनुम्, शपः पित्त्वादनुदात्तत्वं, लडादेशस्य तसश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते, हिचेति निषेधात्तिङ् तिङ इति निघातो न भवति । जेषः जयेः, प्रार्थनायां, लिङर्थे लेट् ( पां ३ । ४ । ७ ) इतिलिङर्थे लेट, तस्य मध्यमपुरुषैकवचनं सिप्, इतश्चलोपः परस्मैपदेषु ( पां ३ । ४ । ९७ । ) इति इकारलोपः, कर्त्तरि शपि प्राप्ते तदपवादः, सिब्बहुलं लेटि ( पां ३ । १ । ३४ । ) इति सिप्, अडागमस्यानुदात्तत्वाद्धातुस्वर एव शिष्यते । स्वर्वतीः, स्वरासामस्तीति सर्वत्यः, न्यङ्स्वरौ स्वरिताविति फिट्सूत्रेण स्वरशब्दः स्वरितः, मतुब्ङीपौ पित्त्वादनुदात्तौ, संहितायां, स्वरितात् संहितामनुदात्तानां ( पां १ । २ । ३९ । ) इत्येकश्रुतिः स्वरित एव शिष्यते । अपः, ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । धूनुहि, धूञ्कम्पने, लोटः सिप्, सेर्ह्यपिच ( पां ३ । ४ । ८७ । ) इति सेर्हिरादेशः, स्वादिभ्यः श्नुः ( पां ३ । १ । ७३ । ) इति श्नुः, उतश्च प्रत्ययादसंयोगपूर्वात् ( पां ६ । ४ । १०६ । ) इति प्राप्तस्य लुक्छान्दसत्वादभावः ॥ ८ ॥

अभिप्लवषडहस्योक्थ्येषु तृतीयसवनेऽच्छावाकस्य षट्स्तोत्रियानुरूपयुगलेषु द्वितीयस्मिन् युगलआश्रुत्कर्णेति तृचोऽनुरूपः, एत्यूष्विति खण्डे श्रुधीहवन्तिरश्चा आश्रुत्कर्णश्रुधीहवमिति सूचितं, तस्मिंस्तृचे प्रथमां, सूक्ते नवमीमृचमाह आश्रुत्कर्णेति । हे आश्रुत्कर्ण सर्वतः श्रोतारौ कर्णौ यस्य तादृशेन्द्र, हवमस्मदीयमाह्वानं नु क्षिप्रं श्रुधि शृणु, मे मम होतुर्गिरश्चित्स्तुतीरपि दधिष्व चित्ते धारय, किञ्च मम मदीयमिमं स्तोमं स्तोत्ररूपं वाक्समूहं युजश्चित् सखीयसश्चदपि अन्तरं कृष्व आसन्नं कुरु, यथा वचनस्य प्रियं मन्यसे तद्वदस्मदीयस्तोत्रेष्वपि प्रीतिं कुर्वित्यर्थः । आश्रुत्कर्ण, आ समन्ताच्छृणुत इत्याश्रुत,

। १० । विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतं ।
वृषन्तमस्य हूमह ऊतिं सहस्रसातमां ॥

क्विप्, ह्रस्वस्य पिति कृति तुक् ( पां ६ । १ । ७१ ) इति तुक्, तादृशौ कर्णौ यस्य, आमन्त्रितस्य च ( पां ८ । १ । १९ । ) इत्याद्युदात्तत्वं । श्रुधि, श्रु श्रवणे, लोटो हिः, श्रुवः शृ च ( पां ३ । १ । ७४ । ) इति विहितश्नोर्बहुलं छन्दसीति लुक् तत्सन्नियोगशिष्टत्वात् शृभावोऽपि निवर्त्तते, श्रुशृणुपॄकृवृभ्यश्छन्दसि ( पां ६ । ४ । १०२ । ) इति हेर्धिरादेशः, सतिशिष्टत्वात् प्रत्ययस्वरः, आमन्त्रितं पूर्व्वमविद्यमानवत् ( पां ८ । १ । ७२ । ) इत्यविद्यमानवत्त्वेन पदादपरत्वात्तिङ्ङतिङ इति निघातो न भवति, संहितायां, अन्येषामपि दृश्यते ( पां ६ । ३ । १३७ । ) इति दीर्घः । हवं, ह्वेञ् स्पर्द्धायां शब्दे च, बहुलं छन्दसीत्यनेनानिमित्ते सम्प्रसारणे कृते पश्चादुकारान्तत्वेन, ऋदोरप् ( पां ३ । ३ । ५७ । ) इत्यप्प्रत्ययः, अपः पित्त्वाद्धातुस्वरः । नू, संहितायां, ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणां ( पां ६ । ३ । १३३ । ) इति दीर्घः । चित्, चादिरनुदात्तः । दधिष्व, दधातेर्लोट्, थासस्से, सवाभ्यां वामौ, शपः श्लुः, अभ्यासस्य ह्रस्वत्वादिः, छन्दस्युभयथा ( पां ३ । ४ । ११७ । ) इत्यार्द्धधातुकत्वस्यापि सीयुटादिडागमः, आकारलोपः, निघातः । मे, तेमयावेकवचनस्य (पां ८ । १ । २२) इति षष्ठ्येकवचनान्तस्यास्मच्छब्दस्य मे आदेशोऽनुदात्तत्वञ्च । मम, तवममौ ङसि ( पां ७ । २ । ९६ । ) इत्यनेन मपर्य्यन्तस्य ममादेशः, प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते, युष्मदस्मदोर्ङसि ( पां ६ । १ । २११ । ) इत्याद्युदात्तत्वं । कृष्व, डुकृञ् करणे, लोट्, थासस्से, सवाभ्यां वामौ, शपो बहुलं छन्दसीति लुक्, सति शिष्टत्वात् प्रत्ययस्वरः, पदादित्वान्न निघातः । युजः, सावेकाच इति विभक्तेरुदात्तत्वं । अन्तरं, वृषादित्वादाद्युदात्तः । ॥ ९ ॥

दशमीमृचमाह विद्महीति हे इन्द्र, त्वां विद्म जानीमः । कीदृशं त्वां वृषन्तमं, कामानामतिशयेन वर्षितारं । पुनः कीदृशं, वाजेषु सङ्ग्रामेषु हवनश्रुतं, अस्मदीयस्याह्वानस्य श्रोतारं । वृषन्तमस्यातिशयेन कामादीनां वर्षितुस्तव ऊतिं रक्षामस्मद्विषयामुद्दिश्य हूमहे त्वामाह्वयामः । कीदृशीमूतिं, सहस्रसातमां अतिशयेन धनसङ्घानां दात्रीं । विद्म, विदो लटो वा ( पां ३ । ४ । ८३ । ) इति

११११ आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब ।
नव्यमायुः प्रसूतिर कृधी सहस्रसामृषिं ॥

मसो मादेशः, प्रत्ययस्वरेणान्तोदात्तः, द्व्यचोऽतस्तिङः ( पां ६ । ३ । १३५ ) इति संहितायां दीर्घः । वृषन्तमं, वृषु वृषु मृषु सेचने, कनिन्यु वृषि तक्षि राजि धन्वि द्यु प्रतिदिव इति कनिन्, नित्त्वादाद्युदात्तः, तमपः पित्त्वात् स एव शिष्यते, अयस्मयादीनि छन्दसि ( पां १ । ४ । २० । ) इति भत्वेन पदत्वाभावान्नलोपाभावः, पदत्वाभावाट्टिलोपाभावः । वाजेषु, वाजशब्दो वृषादित्वादाद्युदात्तः । श्रवनश्रुतं, श्रुइत्यनुवृत्तौ, बहुलं छन्दसीति ल्युटि सम्प्रसारणं, श्रवनं श्रुणोतीति क्विप्, तुगागमः । वृषन्तमस्य उक्तं । हुमहे, ह्वयतेर्बहुलं छन्दसीति सम्प्रसारणं, शप इत्यनुवृत्तौ, बहुलं छन्दसीति शपो लुक् । ऊतिं, ऊति यूति जूति सातीत्यादिना भावे क्तिन्नन्त उदात्तो निपातितः । सहस्रसातमां, सहस्रं सनोतीति सहस्रसा, षणु दाने, धात्वादेः षः स इति सत्वं, जन सन खन क्रम गमो विट्, ( पां ३ । २ । ६७ । ) इति विट्, विड्वनोरनुनासिकस्यात् ( पां ६ । ४ । ४१ । ) इत्याकारादेशः, कृदुत्तरपदप्रकृतिस्वरत्वं, तमपः पित्त्वात्तदेव शिष्यते ॥ १० ॥

एकादशीमृचमाह आ तु न इन्द्रेति । हे इन्द्र, तू क्षिप्रं नोऽस्मान् प्रत्यागच्छेति शेषः, हे कौशिक कुशिकपुत्रेन्द्र, मन्दसानो हृष्टो भूत्वा सुतमभिषुतं सोमं पिब, यद्यपि विश्वामित्रः कुशिकस्य पुत्रस्तथापि तद्रूपेणेन्द्रस्यैवोत्पन्नत्वात् कुशिकपुत्रत्वमविरुद्धं । अयं वृत्तान्तोऽनुक्रमणिकायामुक्तः, कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार, तस्य इन्द्र एव गाथीपुत्रो यज्ञे इति । हे इन्द्र, नव्यं सर्वैर्देवैः स्तुत्यं कर्म्मानुष्ठानपरं आयुर्जीवितं प्रसूतिर प्रकर्षेण सुष्ठु वर्द्धय, ततो मां सहस्रसङ्ख्याकलाभोपेतं ऋषिमतीन्द्रियद्रष्टारं कृधि कुरु । तु, संहितायां ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणां ( पां ६ । ३ । १३३ । ) इति दीर्घः । नः, संहितायां, उदात्तादनुदात्तस्य स्वरितः (पां ८ । ४ । ६६ । ) इत्युदात्तात्परस्यानुदात्तस्य स्वरितत्वं । इन्द्र, आमन्त्रित निघातः । कौशिक, निघातः । मन्दसानो हृष्यन्, मदि स्तुति मोद मद स्वप्न कान्ति गतिषु, असानजित्यनुवृत्तौ, ऋञ्जि वृधि मन्दि सहिभ्यः किदित्यसानच्प्रत्ययः, चित्त्वादन्तोदात्तः । सुतं, प्रत्ययस्वरः । नव्यं, णु स्तुतौ, अचोयत् ( पां

1121 परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः॥ २०॥

३।१।९७।) इति यत्, गुणः, वान्तो यि प्रत्यये ( पां ६।१।७९।) इत्यवादेशः, यतोऽनावः ( पां ६।१।२१३।) इत्याद्युदात्तत्वं। आयुः, उसिरित्यनुवृत्तौ, एतेर्णिच्चेत्युसिः प्रत्ययः, णित्त्वाद्वृद्ध्यायादेशौ, नित्त्वादाद्युदात्तः। सु, निपातस्य च ( पां ६।३।१३६।) इति संहितायां दीर्घत्वं। तिर, तरतेर्व्यत्ययेन शः, ऋत इद्धातोः ( पां ७।१।१००।) इतीत्वं, अतो हेः ( पां ६।४।१०५।) इति हेर्लुक्। श्रुधी, श्रुश्रवणे, बहुलं छन्दसीति शपो लुक्, श्रु शृणु पॄ कृ वृभ्यश्छन्दसि ( पां ६।४।१०२।) इति हेर्धिरादेशः। सहवसामित्युक्तपूर्वं। ऋषिं, ऋष गतौ, इन्नित्यनुवृत्तौ इगुपधात् किदिति कित्, कित्त्वाद्गुणाभावः, नित्त्वादाद्युदात्तत्वं॥११॥

प्रवर्ग्ये परित्वेत्यभिष्टुयात्, स्पृहोदकमिति खण्डे परि त्वा गिर्वणो गिरोऽधिद्वयोरदधात् उक्थं वच इति सूत्रितं, तथा हविर्धानप्रवर्त्तने सेयं परिधानीया, हविर्धाने प्रवर्त्तयन्तीति खण्डे परि त्वा गिर्वण इति परिदध्यादिति सूत्रितं; तथा च ब्राह्मणं परि त्वा गिर्वणो गिर इत्युत्तमया परिदधातीति, तामेतां द्वादशीमृचमाह परि त्वेति। हे गिर्वणः, अस्मदीयस्तुतिभागिन्द्र, विश्वतः सर्वेषु कर्मसु प्रयुज्यमाना इमा गिरोऽस्मदीयाः स्तुतयस्त्वां परिभवन्तु सर्वतः प्राप्नुवन्तु। कीदृश्यो गिरः, वृद्धायुमनु, प्रवृद्धेनायुष्येणोपेतं त्वामनुसृत्य वृद्धयो वर्द्धमानाः, किञ्चैता गिरो जुष्टास्त्वया सेविताः सत्यो जुष्टयोऽस्माकं प्रति हेतवो भवन्तु। गिर्वणः, गीर्भिर्वन्यत इति गिर्वणः, वन षण सम्भक्तौ, सर्वधातुभ्योऽसुन्, गिर उपधाया दीर्घाभावश्छान्दसः, आमन्त्रितनिघातः। विश्वतः, ञितीतिप्रत्ययात् पूर्वस्योदात्तत्वं। वृद्धायु, वृधु वृद्धौ, क्तप्रत्ययः, उदितो वा ( पां ७।२।५६।) इति इटः क्त्वाप्रत्यये विकल्पितत्वात्, यस्य विभाषा ( पां ७।२।१५।) इति इडभावः, प्रत्ययस्वरः, इण् गतौ, छन्दसीणः ( पां ८।२।१५।) इत्युण्,* णित्त्वादाद्युदात्तः, आयादेशश्च, वृद्धमायुर्यस्येति बहुव्रीहौ पूर्वपदप-

---

* णित्वाद्वृद्धिः। का, पं।

## एकादशसूक्तं।

१ १ १ इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः।
रथीतमं रथीनां वाजानां सत्पतिं पतिं ॥

इतिस्वरत्वं। वृद्धयः, वृधेः क्तिनि, तितुत्रतथसिसुसरकसेषु च (पां ७।२।९।) इतीडभावः निञ्चादाद्युदात्तत्वं। जुष्टाः, श्वीदितो निष्ठायां (पां ७।२।१४।) इतीडभावः, जुष्टार्पितइत्यनुवृत्तौ, नित्यं मन्त्रे (पां ६।१।२१०।) इत्याद्युदात्तत्वं। जुष्टयः, जुषीप्रीतिसेवनयोः, क्तिन्, तितुत्रेतीडभावः निञ्चादाद्युदात्तः ॥ १२ ॥ इति प्रथमस्य प्रथमे विंशो वर्गः ॥ २० ॥

इन्द्रं विश्वा इत्यष्टर्चंसूक्तस्य मधुच्छन्दसः पुत्रो जेतनामक ऋषिः, तथाचानुक्रान्तं इन्द्रमष्टौ जेता माधुच्छन्दस इति, छन्दश्चानुष्टुभमिति पूर्वसूक्तोक्तं, इन्द्रो देवतानुवर्त्तते, विनियोगस्तु महाव्रते निष्केवल्ये कृत्स्नं सूक्तं शंसनीयं उक्त इति खण्डे शौनकेन सूचितं इन्द्रं विश्वा अवीवृधन्नित्यानुष्टुभं तस्य प्रथमायाः पूर्वमर्द्धर्चं शस्त्वोत्तरेणार्द्धर्चेनोत्तरस्याः पूर्वमर्द्धर्चं व्यतिषजति, पादैः पादाननुष्टुप्कारं प्रागुत्तमाया इति, आम्नायश्च प्रथमारण्यके पठ्यते, प्रवामच इति खण्डे इन्द्रं विश्वा अवीवृधन्निति पदानुषक्ता इति, तथा एकस्य पञ्चमेऽहनि निष्केवल्ये शस्त्रे इन्द्रं विश्वा अवीवृधन्नित्यनुरूपस्तृचः, स्तोमे वर्द्धमानइतिखण्डे सूचितं, उपनो हरिभिः सुतमिन्द्रं विश्वा अवीवृधन्निति। अस्मिन् सूक्ते प्रथमामृचमाह इन्द्रं विश्वा अवीवृधन्निति। विश्वाः सर्वा गिरोऽस्मदीयाः स्तुतय इन्द्रमवीवृधन् वर्द्धितवत्यः। कीदृशमिन्द्रं समुद्रव्यचसं, समुद्रवद्व्याप्तवन्तं। पुनः कीदृशं रथीनां रथयुक्तानां योद्धृणां मध्ये रथीतमं अतिशयेन रथयुक्तं। पुनः कीदृशं वाजानामन्नानां पतिं स्वामिनं। पुनः कीदृशं सत्पतिं, सतां सन्मार्गवर्त्तिनां पालकं। विश्वाः, विशेः क्वन्, नित्स्वरः। अवीवृधन्, वृधेर्णिचि चङ्ङीट्, ऋदित्यनुवृत्तौ नित्यं छन्दसि (पां ७।४।८।) इति ऋकारस्य ऋकारविधानाल्लघूपधगुणाभावः, निघातस्वरः। समुद्रव्यचसं, व्यचेरसुन् गाङ्कुटादिभ्योऽञ्णिन्ङित् (पां १।२।१।)

121 सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।
त्वामभिप्रणोनुमो जेतारमपराजितं ॥

इति प्राप्तस्य ङित्त्वस्य व्यचेः कुटादित्वमनसीति वार्त्तिकेन अनसि निषेधात्, ग्रहिज्यावयिव्यधि (पा ६ । १ । १६ ।) इत्यादिना ङिति विधीयमानं सम्प्रसारणं न भवति, समुद्रस्यव्यच इव व्यचोयस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । रथीतमं रथीणां, रथशब्दादुत्पन्नस्येनश्छान्दसं दीर्घत्वं प्रत्ययस्वरेणोदात्तत्वञ्च । वाजानां, वृषादित्वादाद्युदात्तत्वं, सत्पतिं, पत्यावैश्वर्य्ये (पा ६ । २ । १८ ।) इति पूर्वपदप्रकृतिस्वरत्वं ॥ १ ॥

द्वितीयामृचमाह सख्ये त इति । हे शवसस्पते बलस्य पालकेन्द्र, ते तव सख्ये अनुग्रहप्रयुक्ते सखित्वे वर्त्तमाना वयं वाजिनोऽन्नवन्तो भूत्वा मा भेम शत्रुभ्यो भीतिं प्राप्ता माभूम, अतस्त्वामभयहेतुं अभिप्रणोनुमः सर्वतः प्रकर्षेण स्तुमः । कीदृशन्त्वां जेतारं युद्धेषु जयशीलं । पुनः कीदृशं अपराजितं क्वापि पराजयरहितं । सख्ये, सख्युः कर्म्म सख्यं, सख्युर्य्यः (पा ५ । १ । १२६ ।) इति यप्रत्ययः, प्रत्ययस्वरः । वाजिनः, वाजोऽन्नमेषामस्तीति वाजिनः प्रत्ययस्वरः । भेम, ञि भी भये, लुङ्, उत्तमपुरुषबहुवचनं मस्, नित्यं ङितः (पा ३ । ४ । ९९ ।) इति सलोपः, बहुलं छन्दसीति च्लेर्लुक्, छन्दस्युभयथेति तिङ आर्द्धधातुकत्वेन ङित्त्वाभावाद्गुणः, नमाङ्योगे (पा ६ । ४ । ७४ ।) इत्यडागमप्रतिषेधः । शवसस्पते, षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु (पा ८ । ३ । ५३ ।) इति शवसो विसर्जनीयस्य संहितायां सत्वं, सुबामन्त्रिते पराङ्गवत्स्वरे (पा २ । १ । २ ।) इति पराङ्गवद्भावेन पदद्वयनिघातः । नोनुमः, णु स्तुतौ, णोनः (पा ६ । १ । ६५ ।) इति नत्वं यङोलुक् प्रत्ययलक्षणेन, सन्यङोः (पा ६ । १ । ९ ।) इति द्विर्भावः, गुणो यङ्लुकोः (पा ७ । ४ । ८२ ।) इत्यभ्यासस्य गुणः, प्रत्ययलक्षणेन धातुसञ्ज्ञायां लटोमस्, अदादिवद्भावाच्छपोलुक्, उपसर्गादसमासेऽपि णोपदेशस्य (पा ८ । ४ । १४ ।) इति संहितायां णत्वं । जेतारं, जि जये, ताच्छील्यादिषु तृन्, ञ्नित्यादिर्नित्यं (पा ६ । १ । १९७ ।) इत्याद्युदात्तत्वं । अपराजितं, अव्ययपूर्वपदप्रकृतिस्वरत्वेन नञउदात्तत्वं ॥ २ ॥

।३। पूर्वीरिन्द्रस्य रातयो न विदस्यन्त्यूतयः ।
यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघं ॥
।४। पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्म्मणो धर्त्ता वज्री पुरुष्टुतः ॥

तृतीयामृचमाह पूर्वीरिन्द्रस्येति । इन्द्रस्य सम्बन्धिन्यो रातयो धनदानानि पूर्वीः अनादिकालसिद्धाः प्रभूता वा अस्येन्द्रस्य सर्वदा यष्टृभ्यो धनदानमेव स्वभाव इत्यर्थः, एवं सति इदानीन्तनोऽपि यजमानः स्तोतृभ्यो ऋत्विग्भ्यो गोमतो गोसहितस्य वाजस्यान्नस्य पर्य्याप्तं मघं धनं यदि मंहते दक्षिणारूपेण ददाति, तदानीं ऊतयो बहुधनदानपूर्वकाणीन्द्रस्यास्मद्विषयाणि रक्षणानि न विदस्यन्ति विशेषेण नोपक्षीयन्ते । मघं रेक्णः इत्यादिष्वष्टाविंशतिसङ्ख्यकेषु धननामसु मघशब्दः पठितः । दाति दासति इत्यादिषु दशसु दानकर्म्मसु मंहत इति पठितं । पूर्वीः, पुरुशब्दस्य, वोतो गुणवचनात् (पां ४।१।४४।) इति ङीष्प्रत्ययः, आद्यस्योकारस्य दीर्घश्छान्दसः, जसि, दीर्घाज्जसि च (पां ६।१।१०५।) इति निषेधं बाधित्वा, वा छन्दसि (पां ६।१।१०६।) इति पूर्वसवर्णदीर्घत्वं । ङीषः प्रत्ययस्वरेणोदात्तत्वं । रातयः, मन्त्रे वृषेषपच मन विद भूवीरा उदात्तः (पां ३।३।९६।) इति क्तिन्नुदात्तः । दस्यन्ति, दसु उपक्षये, दिवादिभ्यः श्यन्, निघातः । ऊतयः, ऊति यूति जूति साति हेति कीर्त्तयश्च (पां ३।३।९७।) इति क्तिन्नुदात्तः । यदि, निपातत्वादाद्युदात्तः, संहितायां, निपातस्य च (पां ६।३।१३६।) इति दीर्घत्वं । वाजस्य, गोमत इति पूर्वं गतं । स्तोतृभ्यः, ष्टुञ् स्तुतौ, धात्वादेः षः सः (पां ६।१।६४।) इति ष्टोः षस्य सत्वं, तृचश्चित्त्वादन्तोदात्तत्वं । मंहते, महि दाने, इदितो नुम् धातोः (पां ७।१।५८।) इति नुमागमः, शप्, शपः पित्त्वादनुदात्तत्वं, तिङश्च लसार्वधातुकस्वरेण तिङ्ङतिङ इति निघातो न भवति, निपातैर्यद्यदिहन्त (पां ८।१।३०।) इत्यादिना निपातयुक्ततिङन्तस्यानुदात्तता निषेधात् ॥ ३ ॥

अभिप्लवषडहस्योक्थेषु तृतीयसवनेऽच्छावाकस्य पुरां भिन्दुर्युवाकविरिति स्तोत्रियस्तृचः, तथाच सूत्रितं एह्युष्वित्युपक्रम्य पुरां भिन्दु-

१ ५ १ त्वं बलस्य गोमतोऽपावरद्रिवो * बिलं ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥

युवा कविरमितौजा असि राधस इति तस्मिंस्तृचे प्रथमायां सूक्ते चतुर्थीमृचमाह पुरां भिन्दुरिति। अयमिन्द्र उच्यमानगुणयुक्तोऽजायत सम्पन्नः। कीदृश इति तदुच्यते, पुरामसुरपुराणां भिन्दुर्भेत्ता । युवा कदाचिदपि वलीपलितादिवार्द्धकरहितः । कविर्मेधावी । अमितौजाः प्रभूतबलः । विश्वस्य कर्म्मणः कृत्स्नस्य ज्योतिष्टोमादेर्धर्त्ता पोषकः । वज्री यजमानरक्षणार्थं सर्वदा वज्रयुक्तः । पुरुष्टुतः, बहुविधतत्तत्कर्म्मणि स्तुतः । भिन्दुः, भिदिर् विदारणे, कुरित्यनुवृत्तौ, एभिदि व्यधि गृधि धृषि दृशिभ्य इति कुप्रत्ययः तस्य छन्दस्युभयथेति सार्वधातुकसंज्ञायां, रुधादिभ्यः श्नम् ( पां ३ । १ । ७८ । ) इति श्नम्, मित्त्वादन्त्यादचः परो भवति, श्नसोरल्लोपः ( पां ६ । ४ । १११ । ) इत्यकारलोपः, अनुस्वारपरसवर्णौ, अचः परस्मिन् पूर्वविधौ ( पां १ । १ । ५७ । ) इति प्राप्तस्य स्थानिवद्भावस्य न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु (पां १ । १ । ५८ ।) इति तन्निषेधः। युवा, यु मिश्रणामिश्रणयोः, कनिन् यु वृषि तक्षि राजि धन्वि द्यु प्रतिदिव इति कनिन्, नित्त्वादाद्युदात्तः। कविः, कु शब्दे, अच इरित्यौणादिक इः प्रत्ययः, प्रत्ययस्वरः। अमितौजाः, अमितशब्दस्याव्ययपूर्वपदप्रकृतिस्वरत्वं, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते। विश्वस्य, अशू प्रुषि लटि कणि खटि विशिभ्यः क्वन्निति क्वन्प्रत्ययः, कित्त्वाद्गुणाभावः, नित्त्वादाद्युदात्तः । कर्म्मणः, डुकृञ् करणे, अन्येभ्योऽपि दृश्यन्ते ( पां ३ । २ । १६८ । ) इति मनिन्प्रत्ययो नित्स्वरः । धर्त्ता, तृच् चित्त्वादन्तोदात्तत्वं। वज्री, मत्वर्थीय इनिःप्रत्ययः, प्रत्ययस्वरः। पुरुष्टुतः, स्तुतस्तोमयोश्छन्दसि ( पां ८ । ३ । १०५ । ) इति षत्वं, बहुषु प्रदेशेषु स्तुतः, थाथ घञ् क्ताजबित्रकाणां ( पां ६ । २ । १४४ । ) इत्यन्तोदात्तत्वं, तृतीयासमासे हि थाथादिस्वरापवादः, तृतीया कर्म्मणि ( पां ६ । २ । ४८ । ) इति पूर्वपदप्रकृतिस्वरः स्यात् ॥ ४ ॥

पञ्चमीमृचमाह त्वं बलस्येति। बलनामकः कश्चिदसुरो देवसम्ब-

* विलमिति वर्गीयवकारो लिखितमूलपुस्तके दृष्टः।

न्धिनीर्गा अपहृत्य कस्मिंश्चिद्बिले गोपितवान् तदानीमिन्द्रस्तद्बिलं
स्वसैन्येन समावृत्य तस्माद्बिलाद्गा निःसारयामास, तदिदमुपाख्यानं,
इन्द्रो बलस्य बिलमपोर्णोदित्यादिब्राह्मणेषु मन्त्रान्तरेषु च प्रसिद्धं,
तदेतद्धृदि निधायायं मन्त्रः प्रवर्त्तते। हे अद्रिवो वज्रयुक्तेन्द्र त्वं गोमतो
बलस्य गोभिर्युक्तस्य बलनामकस्यासुरस्य सम्बन्धि बिलं अपावः, स्वसै-
न्यमुखेनापावृतवानसि, तदानीं तुज्यमानासो बलेन हिंस्यमाना देवा
अबिभ्युषस्त्वदीयरक्षया बलादभीताः सन्तस्त्वामाविषुः प्राप्तवन्तः।
अप, निपातत्वादाद्युदात्तः। अवः, वृञ् वरणे, लङ्सिप्, इतश्चलोपः
परस्मैपदेषु (पां ३।४।९७।) इति सिप इकारलोपः, स्वादिभ्यः
श्नुः, तस्य बहुलं छन्दसीति लुक्, गुणोरपरत्वं, हल्ङ्याब्भ्यो दीर्घात्
(पां ६।१।६८।) इत्यादिना हल्ङ्यादिलोपः, विसर्जनीयः, अडा-
गमः। अद्रिवः, अद्रिरस्यास्तीति मतुप्, छन्दसीरः (पां ८।२।
१५।) इति वत्वं, सम्बोधने, उगिदचां सर्वनामस्थाने धातोः (पां
७।१।७०।) इति नुमागमः हल्ङ्यादिलोपः संयोगान्तस्य लोपः
(पां ८।२।२३।) इति संयोगान्तलोपः, मतुवसोरु सम्बुद्धौ
छन्दसि (पां ८।३।१।) इति रुत्वं। बिलं, नब्विषयस्यानिसन्त-
स्येत्याद्युदात्तत्वं। अबिभ्युषः, ञिभी भये, लिट् द्विर्भावः अभ्यासस्य
ह्रस्वजश्त्वे, लिटः क्वसुरादेशः, क्रादिनियमात् प्राप्तइट्, वस्वेकाजा-
द्घसां (पां ७।२।६७।) इति नियमान्निवर्त्तते, जसि सर्वनामस्थाने
ऽपि व्यत्ययेन भत्वाद्वसोः सम्प्रसारणं परपूर्वत्वं, शासि वसि घसीनाञ्च
(पां ८।३।६०।) इति षत्वं, अचि श्नुधातुभ्रुवां य्वोरियङुवङौ (पां
६।४।७७।) इति सूत्रेण प्राप्तमियङादेशं बाधित्वा, एरनेकाचो
ऽसंयोगपूर्वस्य (पां ६।४।८२।) इति यणादेशः, नञ्समासः,
अव्ययपूर्वपदप्रकृतिस्वरत्वं। तुज्यमानासः, तुजेर्हिंसार्थात्परस्य कर्म्मणि
लटः स्थाने शानच्, सार्वधातुके यक् (पां ३।१।६७।) इति
यक्, तस्माददुपदेशादुत्तरस्य लसार्वधातुकस्यानुदात्तत्वं, यक एव
प्रत्ययस्वरः शिष्यते। आविषुः, अव रक्षणगतिकान्तिप्रीतिषु, अस्मा-
द्गत्यर्थाल्लुङोऽभि, तस्य, सिजभ्यस्त विदिभ्यश्च (पां ३।४।१०९।) इति
जुस्, सिच इडागमः, आडजादीनां (पां ६।४।७२।) इत्यडागमः,
आदेशप्रत्यययोः (पां ८।३।५९।) इति षत्वं॥ ५॥

१ ६ । तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।
उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ॥

षष्ठीमृचमाह तवाहमिति। हे शूर, सङ्ग्रामे शौर्य्ययुक्तेन्द्र, तव रातिभिः कर्म्मसु त्वदीयैर्धनदानैर्निमित्तभूतैरहं होता प्रत्यायं त्वां पुनरागतोऽस्मि, पुरा बहुषु कर्म्मसु त्वत्तो धनस्य लब्धत्वादस्मिन् कर्म्मणि प्रत्यागमनमित्युच्यते, किं कुर्व्वन्, सिन्धुं स्यन्दमानं सोममावदन् सर्वतः कथयन्, अस्मिन् सोमयागे त्वदीयां धनदानकीर्त्तिं प्रकटयन्नित्यर्थः, हे गिर्वणः गीर्भिर्वननीय इन्द्र, कारवः कर्त्तार ऋत्विग्यजमाना उपातिष्ठन्त, पुरा धनलाभार्थं त्वामुपस्थितवन्तः, उपस्थाय च तस्य तादृशस्यौदार्य्योपेतस्य ते तव धनदानं विदुर्जानन्ति। गिर्वणस्शब्दं यास्क इत्थं निर्ब्रूते, गिर्वणो देवो भवति गीर्भिर्वनयन्तीति। रेभो जरितेत्यादिषु त्रयोदशसु स्तोतृनामसु कारुशब्दः पठितः। तव, युष्मदस्मदोर्ङसि (पा ६।१।२११।) इत्याद्युदात्तत्वं। रातिभिः, रा दाने, मन्त्रे वृषेषपच मन विद (पा ३।३।९६।) इत्यादिना क्तिमुदात्तः। आयं, इणो लङ्, तस्थस्थमिपां (पा ३।४।१०१।) इत्यमादेशः, अदिप्रभृतिभ्यः शपः (पा २।४।७२।) इति शपो लुक्, आडागमः, वृद्ध्यायादेशौ, तिङ्ङतिङ इति निघातः। सिन्धुं, स्यन्दू प्रस्रवणे, णिदित्यनुवृत्तौ, स्यन्देः सम्प्रसारणं धश्चेत्युः प्रत्ययः, सम्प्रसारणं, धकारश्चान्तादेश उणादिसिद्धः, नित्त्वादाद्युदात्तः। आवदन्, वद व्यक्तायां वाचि, लटः शतृ, शपः पित्त्वादनुदात्तत्वं, शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते, आङा समासः, कुगति प्रादयः (पा २।२।१८।) इति समासः, कृदुत्तरपदप्रकृतिस्वरत्वं। अतिष्ठन्त, उपान्मन्त्रकरणे (पा १।३।२५।) इत्यात्मनेपदं। गिर्वणः, वनषणसम्भक्तौ, असुन्, आमन्त्रितस्य च (पा ८।१।१९।) इति निघातः। विदुः, विद ज्ञाने, लट्, अदिप्रभृतिभ्यः शप इति शपो लुक्, विदो लटो वा (पा ३।४।८३) इति झेरुसादेशः, पादादित्वान्न निघातः, संहितायां युष्मत्तत्ततक्षुःष्वन्तः पादं (पा ८।३।१०३।) इति षत्वं, ष्टुना ष्टुः (पा ८।४।४१।) इत्युत्तरस्य तकारस्य ष्टुत्वं, तस्य, सावेकाचस्तृतीयादिः (पा ६।१।१६८।) इति विभक्तेरुदात्तत्वं प्राप्तं, नगोश्वन् साववर्णेति निषिध्यते। कारवः, कृवा पाजि मिस्वदिसाध्यशूभ्य उण् इत्युण्प्रत्ययः, प्रत्ययस्वरः ॥ ६ ॥

१ ७ १ मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।
विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥
१ ८ १ इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ २१ ॥

सप्तमीमृचमाह मायाभिरिति । हे इन्द्र, त्वं मायिनं नानाविधकपटोपेतं, शुष्णं भूतानां शोषणहेतुमेतन्नामकमसुरं, मायाभिस्तत्प्रतिकूलैः कपटविशेषैः, यद्वा तद्वधोपायगोचरप्रज्ञाभिरवातिरः हिंसितवानसि, एतच्च यास्केनोक्तं, इन्द्रः शुष्णं जघानेति, शुष्णं पिप्रुमित्यादिमन्त्रे चायमर्थो विस्पष्टः । मेधिराः मेधावन्तोऽनुष्ठातारस्तस्य तादृशस्य ते तव महिमानं विदुर्जानन्ति, तेषां जानतामनुष्ठातॄणां श्रवांस्यन्नानि उत्तिर वर्द्धय । केतः केतुरित्यादिष्वेकादशसु प्रज्ञानामसु माया वयुनमिति पठितं । श्रवःशब्दं यास्को निर्वक्ति, श्रव इत्यन्ननाम श्रूयत इति सत इति । मायाभिः, माङ्माने, माछा ससिभ्यो य इति य प्रत्ययः, प्रत्ययस्वरः । मायिनं, मायास्यास्तीति मायी, व्रीह्यादित्वादिनिप्रत्ययः, प्रत्ययस्वरः । शुष्णं, शुष शोषणे, अस्मादन्तर्भावितण्यर्थान्नदित्यनुवृत्तौ, तृषि शुषि रुषिभ्यः किच्चेति न प्रत्ययः, नित्त्वादाद्युदात्तः । अतिरः, तरतेर्लङि व्यत्ययेन शः, तस्य ङित्त्वेन गुणाभावात्, ऋत इद्धातोः (पां ७ । १ ।१०० ।) इतीत्वं, रपरत्वं । विदुष्टेतस्य, गतमन्यत्रगतं । मेधिराः, मिधृ मेधाहिंसनयोः, बाहुलकादिरन्, नित्त्वादाद्युदात्तः । श्रवांसि, नब्विषयत्वादाद्युदात्तः ॥ ७ ॥

अष्टमीमृचमाह इन्द्रमीशानमिति । स्तोमाः स्तोतार ऋत्विज ओजसा बलेन ईशानं जगतो नियामकमिन्द्रं अभ्यनूषत सर्वत्र स्तुतवन्तः, यस्य इन्द्रस्य रातयो धनदानानि सहस्रं सहस्रसङ्ख्योपेतानि सन्ति, उतवा अथवा भूयसीः सहस्रसङ्ख्याया अप्यधिकाः सन्ति, तमिन्द्रमिति पूर्वेणान्वयः । इन्द्रं, ऋज्रेन्द्रेत्यादिना रन्, नित्त्वादाद्युदात्तः, ईशानं, लटः शानच्, अदिप्रभृतिभ्यः शपः ( पां २ । ४ । ७२ । ) इति शपोलुक्, धातोरनुदात्तेत्त्वात्, तास्यनुदात्तेन्ङिददुपदेशात् (पां ६ । १ । १८६ । ) इति शानचोऽनुदात्तत्वं । ओजसा, नब्विषयस्यानिसन्तस्येत्याद्युदात्तः । स्तोमाः, अर्त्तिस्तुसुहुसृधृक्षि इत्यादिना मन्प्रत्ययो नित्त्वादाद्युदात्तः । अनूषत, णु स्तुतौ, णोनः ( पां ६ । १ । ६५ । ) इति नत्वं, लुङ्

## द्वादशसूक्तं।

१ ११ १ अग्निं दूतं वृणीमहे होतारं विश्ववेदसं।
अस्य यज्ञस्य सुक्रतुं ॥

व्यत्ययेन तस्यादादेशः, च्लेः सिच् ( पां ३ । १ । ४४ । ) इति च्लेः सिच्, अस्य कुटादित्वेन सिचोङित्त्वाद्गुणाभावः, इडभावश्छान्दसः, दीर्घत्वञ्च, अडागमः। सद्वयं, कर्द्दमादीनाञ्चेति द्वितीयाच्चरमुदात्तं। रातयः, मन्क्तिन्व्याख्यानेत्यादिना क्तिन्नुदात्तः। उत, प्रातिपदिकस्वरः। वा, चादिरनुदात्तः। सन्ति, प्रत्ययाद्युदात्तत्वं, तिङ्ङतिङ इति निघातो न भवति, यद्वृत्तान्नित्यं (पां ८। १। ६६।) इति निषेधात्, सर्वत्र व्यवहितेऽपि भवतीत्युक्तं। भूयसीः, सद्वयादतिशयेन बह्व्यो भूयस्यः, अत्र विभक्तव्यस्य सद्वयस्य सन्निधिवशादुपपदत्वप्रतीतेः, द्विवचनविभज्योपपदे तरबीयसुनौ ( पां ५ । ३ । ५७ ।) इति बहुशब्दादीयसुन्, बहोर्लोपो भू च बहोः ( पां ६ । ४ । १५८ । ) इति ईकारलोपः प्रकृतेर्भूरित्यादेशश्च, ईयसुनो नित्त्वादाद्युदात्तत्वं, उगितश्च (पां ४ । १ । ६ । ) इति ङीप् ॥ ८ ॥ इति प्रथमस्य प्रथमे एकविंशो वर्गः ॥

अग्निं दूतमित्यादिकस्य द्वादशर्चस्य सूक्तस्य काण्वपुत्रो मेधातिथिर्ऋषिः, अपवादाभावादनुवर्त्तमानं प्राग्घिरण्यस्तूपादित्युक्तं, गायत्रमेव छन्दः, अग्निदेवताकत्वं विस्पष्टं, अतएवानुक्रम्यते, अग्निं द्वादश, मेधातिथिः काण्व आग्नेयमग्निनेति, पादोऽग्निर्देवतो निर्मथ्य आहवनीयश्चेति, विनियोगस्तु प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दसि अग्निं दूतमिति सूक्तं, अथैतस्या रात्रेर्विवासकाल इति खण्डे अग्निमीळे, अग्निं दूतमिति सूत्रितं, तथा * एतस्याहस्य द्वितीयेऽहनि इदमेव सूक्तमाज्यशस्त्रं एतस्याभिप्लवेनोक्तो अहनीति खण्डे सूत्रितं, अग्निं दूतमिति द्वितीय इति दर्शपूर्णमासयोः सामिधेनीष्वग्निं दूतमित्येषा, नमः प्रवक्त्र इति खण्डे सूत्रितं ईळेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमह इति, अस्मिन् सूक्ते प्रथमामृचमाह अग्निं दूतमिति। अग्नेर्दूतत्वमेतन्मन्त्रव्याख्याने तैत्तिरीयब्राह्मणे समाम्नायते, अग्निर्देवानां दूत आसी

---

* षडहस्येति मो।

१ २ १ अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिं १
हव्यवाहं पुरुप्रियं ॥

दुश्चना काव्यो सूरायामिति, तादृशं देवदूतमग्निमस्मिन् कर्म्मणि वृणीमहे सम्भजामः। कीदृशमग्निं होतारं देवानामाह्वातारं। विश्ववेदसं सर्वधनोपेतं। अस्य प्रवर्त्तमानस्य यज्ञस्य निष्पादकत्वेन सुक्रतुं शोभनकर्म्माणं शोभनप्रज्ञं वा। मघमित्यादिष्वष्टाविंशतिसङ्ख्यकेषु धननामसु वेदस्शब्दः पठितः। होतारं, ह्वेञ् स्पर्द्धायां शब्दे च, ताच्छील्यादिषु तृन्, बहुलं छन्दसीति सम्प्रसारणे परपूर्वत्वे गुणः, नित्त्वादाद्युदात्तः, विश्ववेदसं, बहुव्रीहौ विश्वं सञ्ज्ञायां (पा ६।२।१०६।) इति पूर्व्वपदान्तोदात्तत्वं, अस्य, ऊडिदम्पदाद्यप्पुम्(पा ६।१।१७१।) इत्यादिना विभक्तेरुदात्तत्वं। सुक्रतुं, क्रत्वादयश्च (पा ६।२।११८।) इत्याद्युदात्तत्वं ॥ १ ॥

द्वीतियामृचमाह अग्निमग्निमिति। यद्यप्यग्निः स्वरूपेणैक एव तथापि प्रयोगभेदादाहवनीयादिस्थानभेदात् पावकादिविशेषणभेदाद्वा बहुविधत्वमभिप्रेत्याग्निमग्निमिति वीप्सान्तं, हवीमभिराह्वानकारणैर्मन्त्रैः सदा हवन्त निरन्तरमनुष्ठातार आह्वयन्ति। कीदृशन्तं, विश्पतिं विशां प्रजानां होत्रादीनां पालकं। हव्यवाहं, यजमानसमर्पितस्य हविषो देवान् प्रति वोढारं, अतएव पुरुप्रियं बहूनां प्रीत्यास्पदं। अग्निमग्निं, नित्यवीप्सयोः (पा ८।१।४।) इति वीप्सायां द्विर्भावः, तस्य परमाम्रेडितं (पा ८।१।२।) इत्युत्तरस्याम्रेडितसञ्ज्ञायां, अनुदात्तञ्च (पा ८।१।३।) इत्यनुदात्तत्वं। हवीमभिः, ह्वेञ् स्पर्द्धायां शब्दे च, आह्वानकारणभूतेषु मन्त्रेषु स्वव्यापारस्वातन्त्र्यात् कर्तृविवक्षया, अन्येभ्योऽपि दृश्यन्त इति कर्त्तरि मनिन् प्रत्ययस्तस्य छान्दस ईडागमः, बहुलं छन्दसीति धातोः सम्प्रसारणं, परपूर्वत्वं, गुणावादेशौ, नित्त्वादाद्युदात्तत्वं। सदा, सर्व्वैकान्यकिं यत्तदः (पा ५।३।१५।) इत्यादिना सर्वशब्दाद्दाप्रत्ययः, सर्वस्य सोऽन्यतरस्यां दि (पा ५।३।६।) इति सर्वस्य सभावः, व्यत्ययेनाद्युदात्तत्वं। हवन्त, ह्वेञो लट्, झस्यान्तादेशः, टेरेत्वाभावश्छान्दसः, शपि, बहुलं छन्दसीति सम्प्रसारणं, तिङ्ङतिङ इति निघातः। विश्पतिं, पत्यावैश्वर्य्ये (पा ६।२।१८।) इति पूर्वपदप्रकृतिस्वरे प्राप्ते परादिश्छन्दसि बहुलं

१३। अग्ने देवाँ इहावह जज्ञानो वृक्तबर्हिषे।
असि होता न ईड्यः॥
१४। ताँ उशतो विबोधय यदग्ने यासि दूत्यं।
देवैरासत्सि बर्हिषि॥

(पा° ६।२।९९।) इत्युत्तरपदान्तोदात्तत्वं। हव्यवाहं, वह प्रापणे, वहश्च (पा° ३।२।६४।) इति ण्विप्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वं। पुरुप्रियं, पुरूणां प्रियं, समासान्तोदात्तत्वं॥२॥

तृतीयामृचमाह अग्ने देवाँ इति। हे अग्ने, जज्ञानः अरणेरुत्पन्नस्त्वं वृक्तबर्हिषे आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय तं यजमानमनुग्रहीतुमिह कर्म्मणि हविर्भुजो देवानावह, सोऽस्मदर्थं होता देवानामाह्वाता त्वमीड्यः स्तुत्योऽसि। देवानित्यत्र, संहितायां दीर्घादटि समानपाद इति रुत्वं। जज्ञानः, जनी प्रादुर्भावे, लिटः कानच्, गमहनेत्युपधालोपः, द्विर्वचनेऽचि (पा° १।१।५९।) इति तस्य स्थानिवद्भावाद्द्विर्वचनं, चित्त्वादन्तोदात्तः। वृक्तबर्हिषे, ओव्रश्चू छेदने, निष्ठा (पा° ३।२।१०२।) इति क्तप्रत्ययः, यस्य विभाषा (पा° ७।२।१५।) इति इट्प्रतिषेधः, वृक्तं बर्हिर्यजमानाय येन वा ऋत्विजा, बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। असि, अस्तेः सिप्, अदिप्रभृतिभ्यः शप इति शपो लुक्, तासस्त्योर्लोपः (पा° ७।४।५०।) इति सकारस्य लोपः, पादादित्वान्न निघातः। होता, ह्वयते स्ताच्छील्यादिषु तृन्, बहुलं छन्दसीति सम्प्रसारणं, नित्त्वादाद्युदात्तः। ईड्यः, ईड स्तुतौ, ऋहलोर्ण्यत् (पा° ३।१।१२४।) इति ण्यत्, तित्स्वरिते प्राप्ते, ईडवन्दवृशंसदुहां ण्यतः (पा° ६।१।२१४।) इत्याद्युदात्तत्वं॥३॥

चतुर्थीमृचमाह ताँ उशत इति। हे अग्ने यद्यस्मात् कारणात् दूत्यं यासि देवानां दूतकर्म्म प्राप्नोषि, तस्मात् कारणात् उशतो हविः कामयमानान् देवान् हविः स्वीकारार्थं विबोधय, विबोध्य च बर्हिष्यस्मिन् कर्म्मणि तैर्देवैः सहासत्सि आसीद आगत्योपविश। तान्, दीर्घादटिसमानपाद इति संहितायां रुत्वं, आतोऽटि नित्यं (पा° ८।३।३।) इत्यनुनासिकभावः। उशतः, वश कान्तौ, लटः शतृ,

१ ५ १ घृताहवन दीदिवः प्रति ष्म रिषतो दह ।
अग्ने त्वं रक्षस्विनः ॥

अदिप्रभृतिभ्यः शप इति शपो लुक्, षष्ठ्याद्यावयविय्यधि ( पां ६ । १ । १६ । ) इति सम्प्रसारणं, शतुरनुमोनद्यजादी ( पां ६ । १ । १७३ । ) इति विभक्तेरुदात्तत्वं । यासि, यद्वृत्तान्नित्यं ( पां ८ । १ । ६६ । ) इति निघातप्रतिषेधः । दूतस्य भागः कर्म्म वेति दूत्यं, दूतस्य भागकर्म्मणी ( पां ४ । ४ । १२० । ) इति यत्, तस्य तित्स्वरितापवादत्वेन, यतोऽनावः ( पां ६ । १ । २१३ । ) इति प्राप्तमाद्युदात्तत्वं सर्वे विधयश्छन्दसि विकल्पन्त इति निवर्त्तते, अतस्तित्स्वरितमित्येव भवति, शेषनिघातः । सत्सि, सीदसि, षद्लृ विशरणगत्यवसादनेषु, लटः सिपि शपो बहुलं छन्दसीति लुक्, नलुमताङ्गस्य ( पां १ । १ । ६३ । ) इति प्रत्ययलक्षणप्रतिषेधात्, पा घ्रा ध्मा स्था म्ना दाण् दृश्यर्त्ति सर्त्ति-शद सदां ( पां ७ । ३ । ७८ । ) इत्यादिना सीदादेशो न भवति । बर्हिषि, बृह बृहि वृद्धौ, बृंहेर्न लोपश्चेति इषिः प्रत्ययः, प्रत्यय स्वरेणेकार उदात्तः ॥ ४ ॥

पञ्चमीमृचमाह घृताहवन इति । हे घृताहवन घृतेनाहूयमान, दीदिवो दीप्यमानाग्ने, त्वं रक्षस्विनो रक्षोयुक्तान् रिषतो हिंसकान् शत्रून् प्रति अस्माकं प्रतिकूलान् दहस्म सर्वथा भस्मीकुरु । घृताहवन, घृतेनाहूयतेऽस्मिन्निति, करणाधिकरणयोश्च ( पां ३ । ३ । ११७ । ) इत्यधिकरणे ल्युट्, अत्र जुहोतेरविवक्षितकर्म्मत्वेनाकर्म्मकत्वात् घृतस्य करणत्वमेव न तु कर्म्मत्वं, अतो नैषा, तृतीया च होश्छन्दसि ( पां २ । ३ । ३ । ) इति कर्म्मणि तृतीया, किन्तु, कर्तृकरणयोस्तृतीया, ( पां २ । ३ । १८ । ) इति करणवाचिन्येव, अतः, कर्तृकरणे कृता बहुलं ( पां २ । १ । ३२ । ) इति समासः, तत्र पूर्वपदप्रकृतिस्वरापवादे कृदुत्तरपदप्रकृतिस्वरे प्रातिपदिकावस्थायामेव कृते सति पश्चाद्विभक्तावुत्पन्नायां, आमन्त्रितस्य च ( पां ६ । १ । १९८ । ) इत्याद्युदात्तत्वं । दीदिवः, दीव्यतेर्लिटः क्वसुस्तस्य, वस्वेकाजाद्घसां ( पां ७ । २ । ६७ । ) इति नियमादिडभावः, द्विर्वचनं, हलादिशेषः, उत्तरवकारस्य, लोपो व्योर्वलि ( पां ६ । १ । ६६ । ) इति लोपः, क्वसोः कित्त्वाद्गुणाभावः, तुजादीनां दीर्घोऽभ्यासस्य ( पां ६ । १ । ७ । ) इति

। ६। अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा।
हव्यवाड्जुह्वास्यः ॥ २२ ॥

दीर्घत्वं, अभ्यासस्य समुद्धौ, उगिदचां सर्वनामस्थाने धातोः ( पां ७।१।७०।) इति नुम्, संयोगान्तस्य लोपः ( पां ८।२।२३।) इति सकारलोपे नकारस्य, मतुवसो रु सम्बुद्धौ छन्दसि ( पां ८।३।१।) इति रुत्वं, विसर्गः, पदात्परत्वादामन्त्रितनिघातः। ननु पूर्वामन्त्रितस्याविद्यमानवत्त्वात् पादादित्वेन न निघातोपपत्तिः, न च नामन्त्रिते समानाधिकरणे सामान्यवचनं ( पां ८।१।७३।) इत्यविद्यमानवत्त्वप्रतिषेधः, उभयोरग्निपदविशेषणत्वेन विशेषवचनत्वात्, अतएव परस्परमन्वयेनासामर्थ्यात्, समर्थः पदविधिः ( पां २।१।१।) इति च नियमात् पूर्वस्य न पराङ्गवद्भावः, येनैकपद्येन निघातः स्यात्। अतएव ईडेन्तोदिते सरस्वतीत्यादौ पृथक् पृथगाद्युदात्तत्वमिति, उच्यते, अत्र दीदिव इति नाग्निपदस्य विशेषणं, किन्तु घृताहवनपदस्यैव द्योतनार्थं, घृताहवन इति विशेष्यत्वेन विवक्षितत्वात्, विशिष्टस्य तु पश्चादग्निविशेषणता, तत्र दीदिवः पदं प्रति घृताहवनपदस्य विशेष्यत्वात्, नामन्त्रिते समानाधिकरण इत्यविद्यमानवत्प्रतिषेधान्निघातोपपत्तिः, अतएव परस्परविशेषणविशेष्यभावेन सामर्थ्यात्, सुबामन्त्रिते पराङ्गवत्स्वरे ( पां २।१।२।) इति पराङ्गवद्भावे शेषनिघातेनापि स्वरोपपत्तिरिति, ईडेन्त इत्यादौ तु नैवं परस्परान्वय इति वैषम्यं। रिषतः, रुष रिष हिंसार्थाविति भौवादिकस्य लटः शत्रादेशे अपि छान्दसो गुणाभावः, तौदादिकस्य वा रुश रिश हिंसायामित्यस्य छान्दसं षत्वं. विकरणस्य शस्य ङित्वाद्गुणाभावः। रक्षस्विनः रक्षस्शब्दात्, अस्मायामेधास्रजो विनिः ( पां ५।२।१२१।) इति मत्वर्थीयो विनिस्तस्य प्रत्ययाद्युदात्तत्वं ॥ ५ ॥

अग्निमन्थने अग्निनाग्निः समिध्यत इत्येषानुवचनीया, प्रातर्वैश्वदेव्यां प्रेषित इति खण्डे सूत्रितं अग्निनाग्निः समिध्यते त्वं ह्यग्ने, अग्निनेति, एषैवाग्निमत इत्यस्यानुवाक्या, अथाग्नेय्य इति खण्डे अग्नावग्निप्रणयन इत्युपक्रम्य सूत्रितं, यद्वो वयं प्रमिनामव्रतान्यग्निनाग्निः समिध्यत इति, तामेतां षष्ठीमृचमाह अग्निनाग्निरिति। अग्निराहवनीयाख्यः स्वस्मिन् प्रक्षिप्यमाणेनाग्निना निर्मथ्येन प्रणीतेन वा सह समि-

१७१ कविमग्निमुपस्तुहि सत्यधर्म्माणमध्वरे।
देवममीवचातनं ॥

ध्यते सम्यग्दीप्यते। कीदृशोऽग्निः कविर्मेधावी। गृहपतिर्गृहस्य पालकः। युवा नित्यतरुणः। हव्यवाट्, हविषोवोढा। जुह्वास्यः, जुह्व-रूपेण मुखेन युक्तः। गृहपतिः, पत्यावैश्वर्य्ये (पां ६।२।१८।) इति पूर्वपदप्रकृतिस्वरत्वं। युवा, युमिश्रणे, कनिन्युवृषि तक्षि राजि धन्विद्युप्रतिदिवइति कनिन्प्रत्यय औणादिकः, नित्त्वादाद्युदात्तः। हव्यं वहतीति हव्यवाट्, वहश्च (पां ३।२।६४।) इति ण्विप्रत्ययः, णित्त्वादुपधावृद्धिः, गतिकारकोपपदात् कृत् (पां ६।२।१०९।) इति कृदुत्तरपदप्रकृतिस्वरत्वं। जुह्वास्यः, हूयतेऽनयेति जुहूः, जुहोत्यादिभ्यः श्लुः (पां २।४।७५।) इति श्लुः, हुवः श्लुवच्चेत्यौणादिकः क्विप्, ततसन्नियोगाद्दीर्घश्च, श्लुवद्भावाद्द्विर्भावः, श्चुत्वजश्त्वे, प्रातिपदिक-स्वरेणान्तोदात्तः, जुह्वरास्यं यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव शिष्यते, शेषनिघातः, यणादेशे, उदात्तस्वरितयोर्यणः स्वरि-तोऽनुदात्तस्य (पां ८।२।४।) इत्याकारः स्वरितः ॥ ६ ॥ इति प्रथ-मस्य प्रथमे द्वाविंशो वर्गः ॥

सूक्ते सप्तमीमृचमाह कविमग्निमिति। हे स्तोतृसंघ, अध्वरे क्रतौ अग्निमुपस्तुहि, उपेत्य स्तुतिं कुरु। कीदृशमग्निं, कविं मेधाविनं। सत्यधर्म्माणं, सत्यवदनरूपेण धर्म्मेणोपेतं। देवं, द्योतमानं। अमो-वचातनं, अमीवानां हिंसकानां शत्रूणां रोगाणां वा घातकं। सत्यं धर्म्मो यस्येति सत्यधर्म्मा, धर्म्मादनिच् केवलात् (पां ५।४।१२४।) इत्यनिच्, समासान्तः, अन्तः पदेन तस्य समासत्वाभिधानाद्बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे शेषनिघातेनानुदात्तत्वं। अमीवशब्दो अमरो-गइत्यस्मात्, शेव यह्व जिह्वा ग्रीवा प्वामीवा इति वन्प्रत्यये इडागमे च निपातः, नित्त्वादाद्युदात्तः। चत चद यातनेचेत्यस्माद्धिंसार्थात् णिजन्तान्नन्द्यादित्वाल्ल्युः, युवोरनाकौ (पां ७।१।१।) इति योरनादेशः, णेरनिटि (पां ६।४।५१।) इति णेर्लोपः, लिति (पां ६।१।१९३।) इति धातोरकारस्योदात्तत्वं, नच स्वरे कर्त्तव्ये णिलोपस्य स्थानिवद्भावः, न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानु-स्वारदीर्घजश्चर्विधिषु (पां १।१।५८।) इति तन्निषेधात्,

। ८ । यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति ।
तस्य स्म प्राविता भव ॥

। ९ । यो अग्निं देववीतये हविष्माँ आविवासति ।
तस्मै पावक मृळय ॥

अमीवानां चातन इति समासे कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते ॥ ७ ॥

अष्टमीमृचमाह यस्त्वामग्न इति । हे अग्ने देव, यो हविष्पतिर्यजमानो दूतं देवदूतं त्वां सपर्यति परिचरति, तस्य यजमानस्य प्राविता भव स्म, अवश्यं रक्षको भव । हूयत इति हविः, अर्चिशुचि हुसृप्यादिना इसिः प्रत्यय औणादिकः, प्रत्ययस्वरेणेकार उदात्तः, हविषःपतिर्हविष्पतिः, नित्यं समासेऽनुत्तरपदस्थस्य ( पां ८ । ३ । ४५ । ) इति षत्वं, पत्यावैश्वर्य्ये इति पूर्वपदप्रकृतिस्वरत्वं । सपर्यति, सपरशब्दात्, कण्ड्वादिभ्योयक् ( पां ३ । १ । २७ । ) इति यक्, धातुप्रकरणाद्धातुप्रतिषेधात्, यकः कित्त्वाच्च, सपरशब्दस्य धातुत्वात्, ततो विहितस्य यक आर्द्धधातुकत्वे सति, अतोलोपः ( पां ६ । ४ । ४८ । ) इत्यकारलोपः, सनाद्यन्ताधातवः ( पां ३ । १ । ३२ । ) इति धातुसञ्ज्ञायां तिप्, कर्त्तरि शप्, तस्मिन् पूर्वस्य, अतोगुणे ( पां ६ । १ । ९७ । ) इति पररूपत्वं, यकः प्रत्ययस्वरेणोदात्तत्वं, शपः सत्त्वैकादेशस्य एकादेश उदात्तेनोदात्त इत्युदात्तत्वं, तिङ्ङतिङ इति निघातो न भवति, यद्वृत्तान्नित्यं ( पां । ८ । १ । ६६ । ) इति प्रतिषेधात ॥ ८ ॥

गार्हपत्याहवनीययोः परस्परसंसर्गे विहितस्य हविषो याज्या योऽग्निं देववीतय इत्येषा, अथाग्नेय्य इष्टय इति खण्डे सूचितं, यो अग्निं देववीतये कृवित्सु नो गविष्टय इति, तामेतां याज्यां सूक्तगतां नवमीमृचमाह यो अग्निमिति । हविष्मान् हविर्युक्तो यो यजमानो देववीतये देवानां हविर्भक्षणहेतुयागार्थमग्निमाविवासति, अग्नेः समीपे विशेषेणागत्य परिचर्य्यां करोति, हे पावकाग्ने, तस्मै मृळय तं यजमानं सुखय । देववीतये, वीगतिप्रजननकान्त्यशनखादनेष्वित्यस्मादशनार्थात् क्तिन्, देवानां वीतिर्यस्मिन् यागे स देववीतिः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । हविष्मान्, मन्विषयस्यानिसन्तस्येति पर्य्युदा-

१९०।स नः पावक दीदिवोऽग्ने देवाँ इहावह ।
उप यज्ञं हविश्च नः ॥

साद्धविःशब्दोऽन्तोदात्तः, मतुपः सर्वानुदात्तत्वात् स एव शिष्यते। आविवासति, वागतिगन्धनयोरित्यस्मादन्तर्भावितण्यर्थादागमयितुमिच्छतीत्यस्मिन्नर्थे सन्, आङ्नेच्छा परिचर्य्यायां पर्य्यवस्यतीति विवासतिशब्दः परिचर्य्यार्थे निघण्टौ पठितः, द्विर्भावः, अभ्यासस्य ह्रस्वः, सन्यतः (पां ७।४।७९।) इतीत्वं, ञ्नित्यादिर्नित्यं (पां ६।१।१९७।) इत्याद्युदात्तत्वं, तिङ्ङतिङ इति निघातो न भवति, यद्वृत्तान्नित्यमिति प्रतिषेधात्, तिङ्चोदात्तवति (पां ८।१।७१।) इत्यडो निघातः, सहसुपा (पां २।१।४।) इत्यत्र सहेतियोगविभागात्, आङ्विवासस्य समासे समासान्तोदात्तत्वे प्राप्ते, परादिश्छन्दसि बहुलं (पां ६।२।१९९।)* इत्युत्तरपदाद्युदात्तत्वं। तस्मै, क्रियाग्रहणं कर्त्तव्यमिति वार्त्तिकेन सम्प्रदाने चतुर्थी ॥ ९ ॥

पवमानेष्टावग्नेः पावकस्यानुवाक्या, स नः पावक दीदिव इति, पौर्णमासेष्टि पशुसोमा उपदिष्टा इति खण्डे सूचितं स नः पावक दीदिवोऽग्ने पावकरोचिषेति। तामेतामनुवाक्यां सूक्तगतां दशमीमृचमाह स नः पावक इति। हे दीदिवो दीप्यमान पावक शोधकाग्ने, स त्वं नोऽस्मदर्थं इह देवयजनदेशे देवानावह, ततो नोऽस्मदीयं यज्ञं तत्रत्यं हविश्च उप देवसमीपे प्रापयेति शेषः। दीदिवः, दिवु क्रीडादौ, छन्दसि लुङ्लङ्लिटः (पां ३।४।६।) इति वर्त्तमाने लिट्, क्रमाद्द्विर्भावो हलादिशेषः, तुजादीनां दीर्घोऽभ्यासस्य (पां ६।१।७।) इत्यभ्यासस्य दीर्घत्वं, वस्वेकाजाद्घसां (पां ७।२।६७।) इति नियमाद्वसो रिट्प्रतिषेधः, लोपो व्योर्वलि (पां ६।१।६६।) इति वकारलोपः, सम्बुद्धौ, उगिदचां (पां ७।१।७०।) इत्यादिना नुम्, हल्ङ्यादिलोपः, मतुवसोरु सम्बुद्धौ (पां ८।३।१।) इति रुत्व, विसर्गः। अग्ने, पादादित्वान्न निघातः। देवाँ इत्यत्र, दीर्घादटि समानपादे (पां ८।३।९।) इति रुत्वं, आतोऽटि नित्यं (पां ८।३।३।) इत्याकारः सानुनासिकः, भो भगो अघो अपूर्वस्य

---

* उत्तरपदान्तोदात्तत्वं मं।

१११ स नः स्तवान आभर गायत्रेण नवीयसा।
रयिं वीरवतीमिषं॥

११२ अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः।
इमं स्तोमं जुषस्व नः॥२३॥

योऽशि (पां ८।३।१७।) इति रोर्यकारः, स च, लोपः शाकल्यस्य (पां ८।३।१९।) इति लुप्यते, तस्यासिद्धत्वाद्गुणो न भवति। इह, इदमो हः (पां ५।३।११।) इति सप्तम्यन्ता द्धः प्रत्ययः, तद्धितान्तत्वात् प्रातिपदिकत्वे, सुपो धातुप्रातिपदिकयोः (पां २।४।७१।) इति सप्तम्या लुक्, तद्धितश्चासर्वविभक्तिः (पां १।१।३८।) इत्यव्ययसञ्ज्ञायां, अव्ययादाप्सुपः (पां २।४।८२।) इत्युत्तरस्याः सप्तम्या लुक्, अकारः प्रत्ययस्वरेणोदात्तः॥१०॥

एकादशीमृचमाह स नः स्तवान इति। हे अग्ने, नवीयसा नवतरेण पूर्वैरसम्पादितेन गायत्रेण गायत्रीछन्दस्केनानेन सूक्तेन स्तवानः स्तूयमानः स त्वं नोऽस्मदर्थं रयिं धनं, वीरवतीं शूरपुत्रप्रभृत्यपत्ययुक्तां इषमन्नञ्चाभर सम्पादय। स्तवानः, ष्टुञ् स्तुतौ, धात्वादेः षः सः (पां ६।१।६४।) इति षः सः। स्वरितञितः कर्त्रभिप्राये (पां १।३।७२।) इत्यादिनात्मनेपदं, लटः शानच्, कर्त्तरि शप्, बहुलं छन्दसीति लुगभावः, गुणावादेशौ, आने मुक् (पां ७।२।८२।) इति मुग् न भवति, अनित्यमागमशासनमित्यागमानुशासनस्यानित्यत्वाच्छपः पित्त्वादनुदात्तत्वं शानचश्चित्त्वादन्तोदात्तत्वादुपदेशाच्छपः परत्वाल्लसार्वधातुकानुदात्तत्वं, धातुस्वर एव शिष्यते। भर, द्व्यचोऽतस्तिङ इति दीर्घः, छन्दसीति भत्वं। गायत्रेण, गायत्र्याः सम्बन्धि गायत्रं, तस्येदं (पां ४।३।१२०।) इत्यण्प्रत्ययः प्रत्ययस्वरः। नवीयसा, नवशब्दादातिशायनिक ईयसुन्प्रत्ययः, नित्त्वादाद्युदात्तः। वीरवतीं, मतुप्ङीपोः पित्त्वादनुदात्तत्वं, अकारः प्रातिपदिकस्वरेणोदात्तः॥११॥

द्वादशीमृचमाह अग्ने शुक्रेणेति। हे अग्ने, शुक्रेण शोचिषा त्वदीयेन तेजसा दीप्त्या विश्वाभिर्देवहूतिभिस्त्वत्कृतसर्वदेवताह्वानसाधनस्तोत्रैश्च युक्तस्त्वं नोऽस्मदीयमिमं स्तोमं स्तोत्रविशेषं जुषस्व सेवस्व। विश्वाशब्दो विशेः क्वन्निति क्वन्नन्तो नित्त्वादाद्युदात्तः। देवहूतिभिः,

## त्रयोदशसूक्तं।

१ १ १ सुसमिद्धो न आवह देवाँ अग्ने हविष्मते।
होतः पावक यक्षि च ॥१॥

देवशब्दः पचाद्यजन्तश्चित्त्वादन्तोदात्तः, देवानां हूतय आह्वानान्यासु स्तुतिष्विति देवहूतयः स्तुतयः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। स्तूयतेऽनेनेति स्तोमः, अर्त्तिस्तुसुह्वित्यादिना मन्, नित्त्वादाद्युदात्तः ॥१२॥
इति प्रथमस्य प्रथमे त्रयोविंशो वर्गः ॥ २३ ॥

सुसमिद्ध इत्यादिकं द्वादशर्चमाप्रीसूक्तं, तस्य काण्वो मेधातिथिर्ऋषिः, गायत्रं छन्दः, प्रत्यृचं प्रतीयमानाः सुसमिद्धतनूनपादादिका द्वादशदेवताः, तथा चानुक्रमणिकायामृक्सङ्ख्यार्षिच्छन्दस्त्वानुवृत्तिबलात् सिद्धवत्कृत्य देवता उदाहृताः, सुसमिद्ध इत्याप्यः समिद्धो वाग्निस्तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार उषासा नक्ता दैव्या होतारौ प्रचेतसा तिस्रो देव्यः सरस्वतीळाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतय इति प्रत्यृचं देवता एतदाप्रीसूक्तमिति, विनियोगस्तु पशौ सुसमिद्धो न आवहेति, काण्ववदाप्रीसूक्तं, एकादशप्रयाजा इति खण्डे सूचितं, समिद्धो अद्येति सर्वेषां यथर्षिवेति, तस्मिन् सूक्ते प्रथमामृचमाह सुसमिद्धो न इति। हे अग्ने, सुसमिद्धनामकस्त्वं नोऽस्मदीयाय हविष्मते यजमानाय तदनुग्रहार्थं देवानावह, हे पावक शोधक होतर्होमनिष्पादकाग्ने यक्षि च यज च। सुसमिद्धः, समः क्रियाविशेषणत्वेन गतिसञ्ज्ञकत्वात् प्रादिसमासः, शोभनवाचिनः सुशब्दस्य तु, विशेषणं विशेष्येण बहुलं (पां २। १। ५७।) इति समिद्धपदेन कर्मधारयः समासः, सुशब्दः प्रातिपदिकस्वरेणोदात्तः, कर्मधारयेऽनिष्ठा (पां ६। २। ४६।) इति पूर्वपदप्रकृतिस्वरत्वं, क्रियाविशेषणत्वे हि सुशब्दस्य गतिसञ्ज्ञकत्वात् प्रादिसमासे, गतिरनन्तरः (पां ६। २। ४६।) इति समो यदुदात्तत्वं तदेव कृदुत्तरपदप्रकृतिस्वरत्वेन स्यादिति सुशब्दोऽनुदात्तः स्यात्। देवाँ अग्ने, पूर्ववद्रुत्वानुनासिकौ। हविष्मते, हविरस्यास्तीति मतुप्, तसौ मत्वर्थे (पां १। ४। १९।) इति भत्वेन पदत्वस्य बाधितत्वान्न रुत्वं। होतः पावकशब्दयोरामन्त्रितयोः पृथक् पृथगेव क्रियान्वये परस्परमसामर्थ्यात् पराङ्गवद्भावाभावात् तन्निबन्धनमेकस्वर्यं, न च द्वितीयस्यामन्त्रितस्याष्टमिक

१२१ मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे ।
अद्या कृणुहि वीतये ॥

निघातेनैकस्वर्य्यं, आमन्त्रितं पूर्वमविद्यमानवत् (पां ८।१।७२।) इति पूर्वस्याविद्यमानवत्त्वेन पदात्परत्वाभावात्, पादादित्वाच्च परस्परसामानाधिकरण्येऽपि होतरित्यस्य विशेषणत्वेन समानमेवाविद्यमानवत्त्वं, अतएवाविद्यमानवत्त्वात् सामर्थ्येऽपि न पराङ्गवद्भाव इति नैकस्वर्य्यसिद्धिः, अतो होतरिति विशेष्यं, अतः पुनातीति पावक इत्यवयवप्रसिद्धिस्वीकारेण विशेषणत्वात् होतरितिविशेष्यं, तच्च सामान्यवचनमिति, नामन्त्रिते समानाधिकरणे इत्यविमानवत्त्वप्रतिषेधात्, पदात्परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिकनिघातेन पराङ्गवद्भावे सति शेषनिघातेन सर्वानुदात्तत्वसिद्धिः। यक्षि, यजेर्लोटः सिप्, बहुलं छन्दसीति शपोलुक्, व्रश्चादिना षत्वं, षढोः कः सीति कत्वं, सेर्ह्यादेशश्छान्दसत्वान्न भवति, सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वर एव शिष्यते, न च तिङ्ङतिङ इति निघातः, पूर्वस्य पावकेत्यामन्त्रितस्याविद्यमानवत्त्वेन पदादपरत्वात्, अतएव तस्याव्यवधायकत्वेन होतरित्यपेक्षया निपातः स्यादिति चेन्न, यक्षिपदापेक्षया होतरित्यस्यापि पूर्वत्वेनाविद्यमानवत्त्वात्, ननु नामन्त्रिते समानाधिकरण इति तस्य निषिद्धमविद्यमानवत्त्वं, न च पावकस्याविद्यमानवत्त्वेन समानाधिकरणपरत्वाभावः, यक्षिपदस्यैव हि कार्य्यं प्रातिपदिकपदं पूर्वत्वादविद्यमानवत्स्यात्, होतरिति पदं कार्य्यमविद्यमानवत्त्वप्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवति, एवं होतरित्यस्याविद्यमानवत्त्वप्रतिषेधः, अतस्तस्य विद्यमानवत्त्वात्तदपेक्षया यक्षीत्यस्य निघातः प्राप्नोत्येव, सत्यं, अत्र यक्षीत्यस्य चशब्दपरत्वात्, चादिषु च (पां ८।१।५८।) इति निघातप्रतिषेधो भविष्यतीत्यदोषः ॥१॥

द्वितीयामृचमाह मधुमन्तमिति । हे कवे मेधाविन् अग्ने, तनूनपादेतन्नामकस्त्वं अद्यास्मिन्दिने नोऽस्मदीयं मधुमन्तं रसवन्तं यज्ञं हविर्वीतये भक्षणार्थं देवेषु कृणुहि कुरु प्रापयेत्यर्थः। मधुमन्तं, फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्चेति मन्यतेरुः प्रत्ययो धकारश्चान्तादेशः, निदित्यनुवृत्तेः प्रत्ययस्य नित्त्वादाद्युदात्तो मधुशब्दः।

। ३ । नराशंसमिह प्रियमस्मिन्यज्ञ उपह्वये ।
मधुजिह्वं हविष्कृतं ॥

तनूनपात्, आमन्त्रितनिघातः । अद्य, सद्यःपरुत्परार्य्यैषमः (पां ५ । ३ । २२ ।) इत्यादिना अस्मिन् काल इत्यर्थे द्यप्रत्ययान्तो निपातितः, प्रत्ययस्वरेणान्तोदात्तः, अत्र, तद्धितश्चासर्वविभक्तिः (पां १ । १ । ३८ ।) इत्यव्ययत्वात्, अव्ययादाप्सुपः (पां २ । ४ । ८२ ।) इत्युपरि सप्तम्या लुक्, संहितायां, अन्येषामपि दृश्यते (पां ६ । ३ । १३७ ।) इति दीर्घत्वं । कृणुहि, कृविहिंसाकरणयोश्च, इदितोनुम् धातोः (पां ७ । १ । ५८ ।) इति नुम्, लोटः सेर्हिरादेशः, धिन्विकृण्व्योरच (पां ३ । १ । ८० ।) इति शपोऽपवादो विकरण उः प्रत्ययः, तत्सन्नियोगेन उकारस्याकारः, तस्य अतोलोपः (पां ६ । ४ । ४८ ।) इति लोपः, तस्य स्थानिवद्भावाल्लघूपधगुणो न भवति, उतश्च प्रत्ययादसंयोगपूर्वात् (पां ६ । ४ । १०६ ।) इति हेर्लुङ् न भवति, उतश्च प्रत्ययाच्छन्दो वा-वचनमिति वचनात्, तिङ्ङतिङ इति निघातः । वीतये, मन्त्रे-वृषेषपचमनविदभूवीरा उदात्ताः (पां ३ । ३ । ९६ ।) इति क्तिन्नुदात्तः ॥ २ ॥

तृतीयामृचमाह नराशंसमिति । इह देवयजनदेशे अस्मिन् प्रवर्त्तमाने यज्ञे नराशंसमेतन्नामकमग्निं उपह्वये आह्वयामि । कीदृशमग्निं प्रियं देवानां प्रीतिहेतुं । मधुजिह्वं मधुरभाषिजिह्वोपेतं माधुर्य्यरसास्वादकजिह्वोपेतं वा । हविष्कृतं, हविषो निष्पादकं । नराशंसमित्यत्र, नराशब्दो नृनय इत्यस्मादवन्तः, प्रत्ययस्य पित्त्वाद्धातुस्वर एव शिष्यते, शंसत्यस्मिन्निति शंसः, हलश्च (पां ३ । ३ । १२१ ।) इत्यधिकरणे घञ्, नराणां शंस इति समासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते, उभे वनस्पत्यादिषु युगपत् (पां ६ । २ । १४० ।) इति पूर्वोत्तरपदे प्रकृतिस्वरे भवतः, अतएव वनस्पत्यादिषु पाठान्नराशब्दस्य दीर्घत्वं । इह, इदमो हः (पां ५ । ३ । ११) इति हः प्रत्ययः, इदम इश्, (पां ५ । ३ । ३ ।) इति इशादेशः, प्रत्ययस्वरः । प्रियं प्रीणातीति प्रियः, इगुपधज्ञाप्रीकिरः कः (पां ३ । १ । १३५ ।) इति कः प्रत्ययः प्रत्ययस्वरः । अस्मिन्, ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । ह्वये, निघातः । मधुशब्दस्याद्युदात्तत्वमुक्तं, बहुव्रीहौ पूर्वपदप्रकृति-

। ४ । अग्ने सुखतमे रथे देवाँ ईळित आवह।
असि होता मनुर्हितः ॥

स्वरेण स एव शिष्यते। हविष्कृतं, हविष्करोतीति हविष्कृत्, क्विपि, ह्रस्वस्य पिति कृति तुक् (पां ६।१।७१।) इति तुक्, नित्यं समासेऽनुत्तरपदस्थस्य (पां ८।३।४५।) इति षत्वं, कृदुत्तरपदप्रकृतिस्वरत्वं ॥ ३ ॥

चतुर्थीमृचमाह अग्ने सुखतम इति। इट्शब्दाभिधेय हे अग्ने, ईळितोऽस्माभिः स्तुतः सन् सुखतमेऽतिशयेन सुखहेतौ कस्मिंश्चिद्रथे देवान् स्थापयित्वा कर्म्मभूमावावह, इट्शब्दाभिधेयत्वमत्र सूचयितुं ईळित इति विशेषणं। मनुर्हितः मनुना मन्त्रेण, मनुष्येण वा यजमानादिरूपेण हितोऽत्र स्थापितस्त्वं होता देवानामाह्वातासि। सुखतमे, सुखमस्मिन्नस्तीति मतुप्, तस्य गुणवचनेभ्यो मतुपो लुगिष्ट इति लुक्, अतिशयेन सुखः सुखतमः, तमपोऽनुदात्तत्वात् प्रातिपदिकस्वरः। रथे, रमु क्रीडायां, रमन्तेऽस्मिन्निति रथः, हनिकुषिनीरमिकाशिभ्यः क्थन्निति क्थन्प्रत्ययः, एकाच उपदेशेऽनुदात्तात् (पां ७।२।१०।) इति इट्प्रतिषेधः, अनुदात्तोपदेशे (पां ६।४।३७।) इत्यादिना मकारलोपः, नित्त्वादाद्युदात्तत्वं। ईळितः, ईड स्तुतौ, निष्ठा (पां ३।२।१०२।) इति क्तः, इडागमस्तस्यागमा अनुदात्ता इत्यनुदात्तत्वं, प्रत्ययस्वरः। देवाँ, देवानिति नकारस्य संहितायां, दीर्घादटि समानपाद इति रुत्वं, आतोऽटि नित्यं (पां ८।३।३।) इत्याकारस्य सानुनासिकभावः, भोभगो अघो (पां ८।३।१७।) इत्यादिना रोर्यत्वं, तस्य, लोपः शाकल्यस्य (पां ८।३।१९।) इति लोपः, तस्यासिद्धत्वाद्गुणो न भवति। आ, निपातत्वादाद्युदात्तः। असि, अस भुवि, लटः सिप्, अदिप्रभृतिभ्यः शपः (पां २।४।७२।) इति शपो लुक्, तासस्त्योर्लोपः (पां ७।४।५०।) इति सकारस्य लोपः, होता, ताच्छील्ये तृन्, सौ, ऋदुशनस्पुरुदंशो, (पां ७।१।९४।) इत्यादिना अनङ्, ङित्त्वादन्तादेशः, अप्तृन्तृच् स्वसृ (पां ६।४।११।) इत्यादिना उपधादीर्घः, हल्ङ्यादिलोपनलोपौ, नित्त्वादाद्युदात्तः। मनुर्हितः, मन्यत इति मनुः, मन ज्ञाने, शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्युः प्रत्ययश्चोत्वा-

१ ३ १ नराशंसमिह प्रियमस्मिन्यज्ञ उपह्वये १
मधुजिह्वं हविष्कृतं ॥

तनूनपात्, आमन्त्रितनिघातः । अद्य, सद्यःपरुत्परार्य्यैषमः (पां ५ । ३ । २२ ।) इत्यादिना अस्मिन् काल इत्यर्थे द्यप्रत्ययान्तो निपातितः, प्रत्ययस्वरेणान्तोदात्तः, अत्र, तद्धितश्चासर्वविभक्तिः (पां १ । १ । ३८ ।) इत्यव्ययत्वात्, अव्ययादाप्सुपः (पां २ । ४ । ८२ ।) इत्युपरि सप्तम्या लुक्, संहितायां, अन्येषामपि दृश्यते (पां ६ । ३ । १३७ ।) इति दीर्घत्वं । कृणुहि, कृवि हिंसाकरणयोश्च, इदितो नुम् धातोः (पां ७ । १ । ५८ ।) इति नुम्, लोटः सेर्हिरादेशः, धिन्विकृण्व्योरच (पां ३ । १ । ८० ।) इति शपोऽपवादो विकरण उः प्रत्ययः, तत्सन्नियोगेन उकारस्याकारः, तस्य अतो लोपः (पां ६ । ४ । ४८ ।) इति लोपः, तस्य स्थानिवद्भावाल्लघूपधगुणो न भवति, उतश्च प्रत्ययादसंयोगपूर्वात् (पां ६ । ४ । १०६ ।) इति हेर्लुङ् न भवति, उतश्च प्रत्ययाच्छन्दो वावचनमिति वचनात्, तिङ्ङतिङ इति निघातः । वीतये, मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः (पां ३ । ३ । ९६ ।) इति क्तिन्नुदात्तः ॥ २ ॥

तृतीयामृचमाह नराशंसमिति । इह देवयजनदेशे अस्मिन् प्रवर्त्तमाने यज्ञे नराशंसमेतन्नामकमग्निं उपह्वये आह्वयामि । कीदृशमग्निं प्रियं देवानां प्रीतिहेतुं । मधुजिह्वं मधुरभाषिजिह्वोपेतं माधुर्य्यरसास्वादकजिह्वोपेतं वा । हविष्कृतं, हविषो निष्पादकं । नराशंसमित्यत्र, नराशब्दो नृनयइत्यस्मादवन्तः, प्रत्ययस्य पित्त्वाद्धातुस्वर एव शिष्यते, शंसत्यस्मिन्निति शंसः, हलश्च (पां ३ । ३ । १२१ ।) इत्यधिकरणे घञ्, नराणां शंस इति समासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते, उभे वनस्पत्यादिषु युगपत् (पां ६ । २ । १४० ।) इति पूर्वोत्तरपदे प्रकृतिस्वरे भवतः, अतएव वनस्पत्यादिषु पाठान्नराशब्दस्य दीर्घत्वं । इह, इदमो हः (पां ५ । ३ । ११) इति हः प्रत्ययः, इदम इश्, (पां ५ । ३ । ३ ।) इति इशादेशः, प्रत्ययस्वरः । प्रियं प्रीणातीति प्रियः, इगुपधज्ञाप्रीकिरः कः (पां ३ । १ । १३५ ।) इति कः प्रत्ययः प्रत्ययस्वरः । अस्मिन्, ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । ह्वये, निघातः । मधुशब्दस्याद्युदात्तत्वमुक्तं, बहुव्रीहौ पूर्वपदप्रकृति-

। ४ । अग्ने सुखतमे रथे देवाँ ईळित आवह ।
असि होता मनुर्हितः ॥

स्वरेण स एव शिष्यते। हविष्कृतं, हविष्करोतीति हविष्कृत्, क्विपि, ह्रस्वस्य पिति कृति तुक् (पां ६।१।७१।) इति तुक्, नित्यं समासे ऽनुत्तरपदस्थस्य (पां ८।३।४५।) इति षत्वं, कृदुत्तरपदप्रकृतिस्वरत्वं ॥ ३ ॥

चतुर्थीमृचमाह अग्ने सुखतमइति । इट्शब्दाभिधेय हे अग्ने, ईळितोऽस्माभिः स्तुतः सन् सुखतमेऽतिशयेन सुखहेतौ कस्मिंश्चिद्रथे देवान् स्थापयित्वा कर्म्मभूमावावह, इट्शब्दाभिधेयत्वमत्र सूचयितुं ईळित इति विशेषणं। मनुर्हितः मनुना मन्त्रेण, मनुष्येण वा यजमानादिरूपेण हितोऽत्र स्थापितस्त्वं होता देवानामाह्वातासि। सुखतमे, सुखमस्मिन्नस्तीति मतुप्, तस्य गुणवचनेभ्यो मतुपो लुगिष्ट इति लुक्, अतिशयेन सुखः सुखतमः, तमपोऽनुदात्तत्वात् प्रातिपदिकस्वरः । रथे, रमु क्रीडायां, रमन्तेऽस्मिन्निति रथः, हनिकुषिनीरमिकाशिभ्यः क्थन्निति क्थन्प्रत्ययः, एकाच उपदेशेऽनुदात्तात् (पां ७।२।१०।) इति इट्प्रतिषेधः, अनुदात्तोपदेशे (पां ६।४।३७।) इत्यादिना मकारलोपः, नित्त्वादाद्युदात्तत्वं । ईळितः, ईड स्तुतौ, निष्ठा (पां ३।२।१०२।) इति क्तः, इडागमः क्तस्यागमा अनुदात्ता इत्यनुदात्तत्वं, प्रत्ययस्वरः । देवाँ, देवानिति नकारस्य संहितायां, दीर्घादटि समानपाद इति रुत्वं, आतोऽटि नित्यं (पां ८।३।३।) इत्याकारस्य सानुनासिकभावः, भोभगो अघो (पां ८।३।१७।) इत्यादिना रोर्यत्वं, तस्य, लोपः शाकल्यस्य (पां ८।३।१९।) इति लोपः, तस्यासिद्धत्वाद्गुणो न भवति। आ, निपातत्वादाद्युदात्तः । असि, अस भुवि, लटः सिप्, अदिप्रभृतिभ्यः शपः (पां २।४।७२।) इति शपो लुक्, तासस्त्योर्लोपः (पां ७।४।५०।) इति सकारस्य लोपः, होता, ह्वेञ् ताच्छील्ये तृन्, सौ, ऋदुशनस्पुरुदंशो, (पां ७।१।९४।) इत्यादिना अनङ्, ङित्त्वादन्तादेशः, अप्तृन्तृच्स्वसृ (पां ६।४।११।) इत्यादिना उपधादीर्घः, हल्ङ्यादिलोपनलोपौ, नित्त्वादाद्युदात्तः। मनुर्हितः, मन्यत इति मनुः, मनज्ञाने, शृस्वृस्निहित्रप्यसि वसिहनि क्लिदिबन्धिमनिभ्यश्चेत्युः प्रत्यय चोदा-

१ ५ १ स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः ।
यत्रामृतस्य चक्षणं ॥

दिकः, तत्र निदित्यनुवृत्तेर्नित्वादाद्युदात्तः । हितः, दधातेर्निष्ठेति कर्म्मणि क्तः, दधातेर्हिः ( पां ७ । ४ । ४२ । ) इति हिरादेशः, मनुना-हित इति समासे तृतीयायाः स्थाने, सुपांसुलुक् ( पां ७ । १ । ३९ । ) इत्यादिना सिव्यादेशस्तस्य रुत्वं, सुलुगभावश्छान्दसः, तृतीया कर्म्मणि ( पां ६ । २ । ४८ । ) इति पूर्वपदप्रकृतिस्वरत्वं ॥ ४ ॥

पञ्चमीमृचमाह स्तृणीत बर्हिरिति । हे मनीषिणो बुद्धिमन्तऋत्विजो, बर्हिरास्तरणीयं दर्भं स्तृणीत वेदेरुपर्य्याच्छादयत, अत्रापि बर्हिर्नामकोऽग्निः स्तूयते । कीदृशं बर्हिरास्तरणीयं आनुषक् अनुक्रमेण सक्तं परस्परं सम्बद्धं । पुनः कीदृशं घृतपृष्ठं घृतपूर्णानां स्रुवां बर्हिष्यासादितत्वात् घृतं पृष्ठे उपरिभागे यस्य बर्हिष स्तद्घृतपृष्ठं, यत्र यस्मिन् बर्हिषि अमृतस्य अमृतसमानस्य घृतस्य चक्षणं दर्शनं भवति, यद्वा अमृतस्य मरणरहितस्य देवस्य बर्हिर्नामकस्याग्नेर्दर्शनं भवति, तद्बर्हिस्तृणीतेति पूर्वत्रान्वयः । स्तृणीत, स्तृञ् आच्छादने, लोट्, मध्यमपुरुषस्य बहुवचनं, लोटोलङ्वत् ( पां २ । ४ । ८५ । ) इति लोटो लङ्वद्भावः, तस्थस्थमिपान्ताम्तन्तामः ( पां ३ । ४ । १०१ । ) इति थस्य तादेशः, क्र्यादिभ्यः श्ना ( पां ३ । १ । ८१ । ) इति श्ना, ईहल्यघोः ( पां ६ । ४ । ११३ । ) इतीत्वं, ऋवर्णाच्चेति वक्तव्यमिति वार्त्तिकेन णत्वं, प्वादीनां ह्रस्वः (पां ७ । ३ । ८० । ) इति धातोर्ह्रस्वत्वं, सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्य इत्यतस्तिङ एव प्रत्ययस्वरेणोदात्तत्वं । बर्हिः, बृंहेर्नलोपश्चेति इसप्रत्ययनलोपौ, प्रत्ययस्वरः । आ समन्तादनुषज्यतीत्यानुषक्, षन्ज सङ्गे, धात्वादेः षः सः ( पां ६ । १ । ६४ । ) इति षस्य सत्वं, क्विप्च ( पां ३ । २ । ७६ । ) इति क्विप्, अनिदितांहलः ( पां ६ । ४ । २४ । ) इति नलोपः, आङन्वोरुपसर्गयोः प्राक्प्रयोगः, गतिसमासः, उपसर्गात्सुनोति ( पां ८ । ३ । ६५ । ) इत्यादिना षत्वं । घृतपृष्ठं, घृक्षरणदीप्त्योः, निष्ठेति क्तः, प्रत्ययस्वरेणोदात्तः, घृतयुक्तं पृष्ठमस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । मनीषिणः, आमन्त्रितनिघातः । अमृतस्य, न विद्यते मृतं मरणमस्मिन्नित्यमृतं बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं बाधित्वा, नञ्सुभ्यां ( पां ६ । २ । १७२ । ) इत्यु-

१६। विश्रयन्तामृतावृधो द्वारो देवीरसश्चतः ।
अद्या नूनं च यष्टवे ॥ २४ ॥

त्तरपदान्तोदात्तत्वे प्राप्ते, नञो जरमरमित्रमृताः (पा ६।२।११६।) इत्युत्तरपदाद्युदात्तत्वं। चक्षणं, चक्षिङ् व्यक्तायां वाचि, वागभिव्यक्तिवाची धातुरिहाभिव्यक्तिमात्रं लक्षयति, ल्युट्च (पा ३।३।११५।) इति भावे ल्युट्, योरनादेशः, तस्यार्द्धधातुकत्वात्, चक्षिङः ख्याञ् (पा २।४।५४।) इति ख्याञादेशे प्राप्ते, असनयोश्चेति वार्त्तिकेन प्रतिषेधः ॥ ५ ॥

षष्ठीमृचमाह विश्रयन्तामिति। द्वारो यज्ञशालाद्वाराणि विश्रयन्तां कवाटोद्घाटनेन विश्रियन्तां। कीदृशो द्वारः, ऋतावृधः, ऋतस्य सत्यस्य यज्ञस्य वा वर्द्धयित्र्यः,। देवीर्द्योतमानाः। असश्चतः, असजन्त्यः, उद्घाटनेन न प्रवेष्टृपुरुषसङ्गरहिताः। यद्वा असश्चतः प्रवेष्टृपुरुषरहितान् यत्र गृहान् तत्पुरुषप्रवेशाय द्वाराभिमानिन्यः, एतत्स्थिमका अग्निविशेषमूर्त्तयो विश्रयन्तां विशेषेण सेवन्तां, द्वारसेवया तत्र पुरुषप्रवेशेन वा किं प्रयोजनमिति तदुच्यते, अद्य अस्मिन्दिने नूनमवश्यं यष्टवे यष्टुं, चकाराद्दिनान्तरेष्वपीति द्रष्टव्यं। ऋतावृधः, ऋतं वर्द्धयन्तीत्यर्थे वृधेरन्तर्भावितण्यर्थात्, क्विप्च (पा ३।२।७६।) इति क्विप्, उपपदसमासः, अन्येषामपि दृश्यते (पा ६।३।१३७।) इति पूर्वपदस्य दीर्घत्वं, वृधिर्धातुस्वरेणोदात्तः, कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। देवीः, वा छन्दसि (पा ६।१।१०६।) इति पूर्वसवर्णदीर्घत्वं, देवशब्दात् पचाद्यजन्तात्, पुंयोगादाख्यायां (पा ४।१।४८।) इति ङीष्, प्रत्ययस्वरेणोदात्तः, विभक्त्या सह, एकादेश उदात्तेनोदात्तः (पा ८।२।५।) इत्युदात्तः। असश्चतः, षस्ज सङ्गतौ, जकारस्य व्यत्ययेन चकारः, लटः शत्रादेशः, द्वाराभावे न विद्यन्ते सजन्तो गच्छन्तो येषु प्राग्वंशादिषु तान् असश्चतः। अद्य, अस्मिन्काल इत्यर्थे, सद्यः परुत् (पा ५।३।२२।) इत्यादिना द्यप्रत्ययान्तो निपातितः, तद्धितश्चासर्वविभक्तिः (पा १।१।३८।) इत्यव्ययसञ्ज्ञकत्वात् परस्या विभक्तेर्लुक्, प्रत्ययस्वरेणान्तोदात्तः, संहितायां, अन्येषामपि दृश्यते (पा ६।३।१३७।) इति दीर्घत्वं। नूनं, एवमादीनामन्त इत्यन्तोदात्तत्वं। यष्टवे, यजेः, तुमर्थे सेसेनसे-

१७। नक्तोषासा सुपेशसास्मिन्यज्ञ उपह्वये।
इदं नो बर्हिरासदे॥
१८। ता सुजिह्वा उपह्वये होतारा दैव्या कवी।
यज्ञं नो यक्षतामिमं॥

कृत्ये कृत्येनध्यै अध्यैन् कध्यै कध्यैन् शध्यै शध्यैन् तवै तवेङ् तवेनः (पां ३।४।९।) इति तुमर्थे तवेन् प्रत्ययः, नत्वादिना षत्वं, नित्त्वादाद्युदात्तः॥६॥ इति प्रथमस्य प्रथमे चतुर्विंशो वर्गः॥२४॥

इदानीं सप्तमीमृचमाह नक्तोषासेति। नक्तशब्दः, उषस्शब्दश्च रात्रिदिवसकालवाचिनौ, इह तु तत्कालाभिमानिवह्निमूर्त्तिद्वये प्रयुज्येते, नक्तोषासा नक्तोषोनामिके वह्निमूर्त्ती अस्मिन् प्रवर्त्तमाने यज्ञकर्म्मणि उपह्वये आह्वयामः, किमर्थं नोऽस्मदीयमिदं वेद्यामास्तीर्णं बर्हिर्दर्भमासदे आसत्तुं प्राप्तुं। कीदृश्यौ मूर्त्ती, सुपेशसा, शोभनरूपयुक्ते। पुनः कीदृशे नक्तोषासा, नक्ता चोषाश्च नक्तोषासा, प्रथमाद्विवचनस्य, सुपांसुलुक् (पां ७।१।३९।) इत्याकारः, मनोपोपधादीर्घो छान्दसौ, देवताद्वन्द्वे च (पां ६।२।१४१।) इति पूर्वोत्तरपदयोर्युगपत् प्रकृतिस्वरत्वं। सुपेशसा, शोभनं पेशो रूपं ययोस्ते, पूर्ववदाकारः, पेशस्शब्दो नब्विषयत्वादाद्युदात्तः, बहुव्रीहौ, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तस्यापवादत्वेनाद्युदात्तत्वं, आद्युदात्तं द्व्यच्छन्दसि (पां ६।२।११९।) इति उत्तरपदाद्युदात्तत्वं। अस्मिन्, ऊडिदम्पदाद्यप्पुम् (पां ६।१।१७१।) इति विभक्तिरुदात्ता। आसदे, षद्लृविशरणगत्यवसादनेषु, धात्वादेः षः सः (पां ६।१।६४।) इति षस्य सत्वं, आङ्पूर्वादस्मात् सम्पदादिभ्यो भावे क्विप्, प्रादिसमासः, कृदुत्तरपदप्रकृतिस्वरत्वं॥७॥

अष्टमीमृचमाह ता सुजिह्वाविति। तच्छब्दोऽत्र सर्वनामत्वात् प्रसिद्धार्थवाची। ता तौ याज्ञिकप्रसिद्धौ दावग्नी उपह्वये आह्वयामि, नोऽस्मदीयमिमं यज्ञं यक्षतां, तावुभौ यजतामनुतिष्ठतां। कीदृशौ तौ सुजिह्वा, शोभनजिह्वोपेतौ, प्रियवचनौ, शोभनज्वालौ वेत्यर्थः। होतारा, होमनिष्पादकौ। दैव्या दैव्यौ देवसम्बन्धिनौ, अतएवेमावग्नी दैव्यहोतृनामकौ। कवी मेधाविनौ। ता, तौ, द्वितीयाद्विवचनस्य,

९। इला सरस्वती मही तिस्रो देवीर्मयोभुवः।
बर्हिः सीदन्त्वस्रिधः॥

सुपां सुलुगित्याकारः, एकादेश उदात्तेनोदात्त इत्युदात्तः। सुजिह्वा, शोभना जिह्वा ययोस्तौ, नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं, पूर्ववदेकादेशस्वरः, संहितायामावादेशः, तस्य, लोपः शाकल्यस्येति लोपः। होतारा, जुहोतेस्तृन्, द्विवचने, ऋतोऽङिसर्वनामस्थानयोः (पां ७।३।११०।) इति गुणः, अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणां (पां ६।४।११।) इत्युपधादीर्घः, पूर्ववदाकारः, नित्त्वादाद्युदात्तः। दैव्या, देवानामिमौ, देवाद्यञञाविति वार्त्तिकेन यञ्, यस्येति च (पां ६।४।१४८।) इत्यकारलोपः, ञ्नित्यादिर्नित्यं (पां ६।१।१९७।) इति ञित्त्वादाद्युदात्तः, पूर्ववदाकारः। यक्षतां, यजतां, लेटि अपि परतः, सिब्बहुलं लेटि (पां ३।१।३४।) इति बहुलग्रहणात् सिप्, कुत्वचर्त्वषत्वानि ॥ ८॥

नवमीमृचमाह इला सरस्वती महीति। अत्र महीशब्दो महत्त्वगुणयुक्तां भारतीमाचष्टे, अन्येष्वपि सूक्तेषु सदृशेषु इला सरस्वती-भारतीत्याम्नातत्वादिलाशब्दाभिधेया वह्निमूर्त्तयस्तिस्रो देवीर्दीप्यमाना बर्हिर्वेद्यामास्तीर्णं सीदन्तु प्राप्नुवन्तु। कीदृश्यो मूर्त्तयः, मयोभुवः, सुखोत्पादिकाः। अस्रिधः, शोषेण क्षयेण वा रहिताः। इला, ईडस्तुतौ, छान्दसं ळत्वं, क्विप्, धातुस्वरः, आपश्चैव हलन्तानां यथा वाचा दिशा निशेति टाप्। सरस्वती, असुन्नन्तो नित्त्वादाद्युदात्तः, तदस्यास्तीति मतुप्, मादुपधत्वाद्वत्वं, तसौ मत्वर्थे (पां १।४।१९।) इति भत्वेन पदत्वस्य बाधितत्वाद्रुत्वाद्यभावः, उगितश्च (पां ४।१।६।) इति ङीप्, मतुप्ङीपौ पित्त्वादनुदात्तौ। मही, महतीशब्दे तकारलोपश्छान्दसः, यस्येति च (पां ६।४।१४८।) इत्यकारलोपः, उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं। तिस्रः, त्रिशब्दाज्जसि, त्रिचतुरोः स्त्रियां तिसृचतसृ (पां ७।२।९९।) इति तिस्रादेशः, अचि र ऋतः (पां ७।२।१००।) इति रेफादेशः, तिसृभ्यो जसः (पां ६।१।१६६।) इति जस उदात्तत्वं। देवीः, देवानां पत्न्यो देव्यः, पुंयोगादाख्यायां (पां ४।१।४८।) इति ङीष्, यस्येति च (पां ६।४।१४८।) इत्यकारलोपः, प्रत्ययस्वरेण ङीष उदात्तत्वं, जसि, दीर्घा-

। १० । इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये ।
अस्माकमस्तु केवलः ॥

जसि च (पां ६।१।१०५।) इति निषिद्धं दीर्घत्वं, वा छन्दसि (पां ६।१।१०६।) इति पक्षेऽभ्यनुज्ञायते । मयोभुवः, मीञ् हिंसायां, हिनस्ति दुःखमिति मयः सुखं, यास्तद्भावयन्तीति मयोभुवः, अन्तर्भावितण्यर्थाद्भुवः क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वं । बर्हिः, बृंहेर्नलोपश्चेति इसिप्रत्ययः, प्रत्ययस्वरः । सीदन्तु, षद्लृ विशरणगत्यवसादनेषु, पाघ्राध्मास्थाम्नादाण् (पां ७।३।७८।) इत्यादिना सीदादेशः । अस्रिधः, स्रिधिर्हिंसार्थस्य शोषणार्थस्य वा सम्पदादिभ्यो भावे क्विपि नञा बहुव्रीहिः, पूर्वपदप्रकृतिस्वरं बाधित्वा, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तत्वं ॥ ९ ॥

पत्नीसंयाजे त्वष्टुः पुरोऽनुवाक्या इह त्वष्टारमग्रियमिति, शंयुवाकाय सञ्चेषित इति खण्डे सूचितं, सन्तु पयांसि समुयन्तु वाजा इह त्वष्टारमग्रियमिति, तामेतां पुरोऽनुवाक्यां सूक्ते दशमीमृचमाह इह त्वष्टारमग्रियमिति । त्वष्टारं त्वष्टृनामकमग्निमिह कर्मण्युपह्वये । कीदृशं अग्रियं श्रेष्ठं, विश्वरूपं बहुविधरूपोपेतं । सोऽस्माकं केवलोऽसाधारणोऽस्तु, इतरयजमानेभ्योऽप्यधिकमनुग्रहं करोत्वित्यर्थः । त्वष्टारं, त्वक्षू तक्षू तनूकरणे, तृन्, स्वरतिसूतिसूयतिधूञूदितो वा (पां ७।२।४४।) इति इडभावपक्षे, स्कोः संयोगाद्योरन्ते च (पां ८।२।२९।) इति ककारलोपः, ष्टुत्वं, द्वितीयैकवचने, ऋतोऽङि सर्वनामस्थानयोः (पां ७।३।११०।) इति गुणे, अप्तृन् (पां ६।४।११।) इत्यादिना उपधाया दीर्घः, नित्त्वादाद्युदात्तत्वं । अग्रियं, अग्रादित्यनुवृत्तौ, घच्छौ च (पां ४।४।११७।) इति घः प्रत्ययः, आयनेयीनीयियः (पां ७।१।२।) इत्यादिना घकारस्य इयादेशः, यस्येति च (पां ६।४।१४८।) इत्यलोपः, आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति उपदेशिवद्भावात् प्रत्ययाद्युदात्तत्वात्, नवा क्वचिच्चित्करणादिति भाष्यात् घच्छश्चित्त्वादन्तोदात्तत्वं । विश्वरूपं, विश्वानि रूपाणि त्वष्टृकृतत्वेन यस्य, त्वष्टा वै पशूनां मिथुनानां रूपकृदिति श्रुतेः, विश्वशब्दस्याद्युदात्तत्वात् पूर्वपदप्रकृतिस्वरत्वे प्राप्ते, बहुव्रीहौ विश्वं संज्ञायां (पां ६।२।१०६।) इति

। ११ । अवसृजा वनस्पते देव देवेभ्यो हविः ।
प्रदातुरस्तु चेतनं ॥
। १२ । स्वाहा यज्ञं कृणोतनेन्द्राय यज्वनो गृहे ।
तत्र देवाँ उपह्वये ॥ २५ ॥

पूर्वपदान्तोदात्तत्वं। अस्माकं, अस्तु लोपश्चे, युष्मस्मिभ्यां मदिगिति मदिक् प्रत्यय औणादिकः, प्रत्ययस्वरेणान्तोदात्तः, षष्ठीबहुवचनमाम्, अत्र परमपि, योऽचि (पां ७। २। ८९।) इति यत्वं बाधित्वा, नित्यत्वात् प्रतिपदविधित्वाच्च, साम आकम् (पां ७।१।३३।) इति आम आकमादेशे कृते, अनादेश इति निषेधेन यत्वाभावात्, शेषे लोपः (पां ७।२।९०।) इति दकारलोपे अकारान्तत्वेन पश्चात् प्राप्तस्यापि सुटः साम इति निर्देशे स्थानिन्यन्तर्भावेन निवृत्तिः, एवमर्थ एव हि साम इति ससुट्कनिर्देशः। केवलः, वृषादेराकृतिगणत्वादाद्युदात्तः ॥ १० ॥

एकादशीमृचमाह अवसृजेति । हे वनस्पते, एतन्नामकाग्ने देव, हविर्भुग्भ्यो देवेभ्योऽस्मदीयं हविरवसृज समर्पयेत्यर्थः, प्रदातुर्यजमानस्य चेतनं परलोकविषयं विज्ञानं त्वत्प्रसादादस्तु । वनस्पते, आमन्त्रितनिघातः। देव, पादादित्वान्न निघातः, षाष्ठिकमामन्त्रिताद्युदात्तत्वं। हविः, अर्चि शुचि हु सृपि छदि छर्दिभ्य इसिरिति इसिः प्रत्ययः, प्रत्ययस्वरः। दातुः, ददातेस्तृच्, चितः (पां ६।१।१६३।) इत्यन्तोदात्तः, ङसि, ऋत उत् (पां ६।१।१११।) इत्युत्त्वमेकादेशः, रपरत्वं, रात्सस्य (पां ८।२।२४।) इति सलोपः, एकादेशस्वरेणोकार उदात्तः। चेतनं, चिती संज्ञाने, करणे ल्युट्, योरनादेशः, लघूपधगुणः, लिति (पां ६।१।१९३।) इति प्रत्ययात् पूर्वस्योदात्तत्वं ॥ ११ ॥

द्वादशीमृचमाह स्वाहा यज्ञमिति । स्वाहाशब्दो हविःप्रदानवाची सन्, एतन्नामकमग्निविशेषं लक्षयति, तदग्निसम्पादितं यज्ञं इन्द्रायेन्द्रतुष्ट्यर्थं यज्वनो यजमानस्य गृहे ऋत्विजः कृणोतन कुरुत, तत्र यज्ञे देवान् उपह्वये। कृणोतन, कृवि हिंसाकरणयोश्च, इदित्वान्नुम्, लोण्मध्यमपुरुषबहुवचनस्य, तस्थस्थमिपां तान्तन्तामः (पां

## चतुर्दशसूक्तं ॥

१ ११ एभिरग्ने दुवो गिरो विश्वेभिः सोमपीतये।
देवेभिर्याहि यक्षि च ॥

३।४।१०१।) इति तादेशः, तप्तनप्तनथनाश्च (पां ७।१।४५।) इति तनबादेशः, अपि प्राप्ते, धिन्विकृण्व्योरच (पां ३।१।८०।) इत्युप्रत्ययः, तत्सन्नियोगेन वकारस्य चाकारस्तस्य, अतो लोपः (पां ६।४।४८।) इति लोपस्तस्य, अचः परस्मिन् पूर्वविधौ (पां १।१।५७।) इति स्थानिवद्भावादकारस्य लघूपधगुणो न भवति, तनपः पित्त्वेनाङित्त्वादुकारस्य गुणः। इन्द्राय, इदि परमैश्वर्य्ये इति धातोः, ऋज्रेन्द्राग्रेत्यादिना रन्प्रत्यय औणादिकः, ञित्वादाद्युदात्तः। यज्वनः, यजदेवपूजा सङ्गतिकरणदानेषु, सुयजोर्ङ्वनिप् (पां ३।२।१०३।) इति ङ्वनिप्, ङसि भसञ्ज्ञायां अल्लोपे प्राप्ते, नसंयोगाद्वमन्तात् (पां ६।४।१३७।) इति निषेधः, ङ्वनिपः पित्त्वेन धातुस्वर एव शिष्यते। गृहे, ग्रह उपादाने, गेहे कः (पां ३।१।१४४।) इति कप्रत्ययः, ग्रहिज्या (पां ६।१।१६।) इत्यादिना सम्प्रसारणं, परपूर्वत्वं। देवानुपेत्यत्र संहितायां, दीर्घादटिसमानपादे (पां ८।३।९।) इति नकारस्य रुत्वं, आतोऽटिनित्यं (पां ८।३।३।) इत्याकारः सानुनासिकः, भो भगो अघो अपूर्वस्य योऽशि (पां ८।३।१७।) इति यत्वं, तस्य, लोपः शाकल्यस्य (पां ८।३।१९।) इति लोपः ॥१२॥ इति प्रथमस्य प्रथमे पञ्चविंशो वर्गः ॥२५॥

एभिरग्न इत्यादिकस्य द्वादशर्चस्य सूक्तस्य ऋषिच्छन्दसी पूर्ववत्, तच्च सूक्तं बहुदेवताकं, अतएवानुक्रम्यते एभिर्वैश्वदेवमिति। विनियोगस्तु व्यूढद्वादशाहस्य प्रथमे छन्दोमे तृतीयसवने वैश्वदेवशस्त्रे एभिरग्ने दुवो गिर इति सूक्तं, तथा च सूत्रितं, अथ छन्दोमाः समुद्रादूर्म्मिरित्युपक्रम्य एभिरग्ने दुवो गिर इति वैश्वदेवं तत्, तत्र प्रथमामृचमाह एभिरग्न इति। हे अग्ने, एभिरस्मिन् यज्ञे सम्भावितैर्विश्वेभिः सर्वैर्देवैः सह सोमपीतये सोमपानोपेतयागार्थं दुवोऽस्मदीयां परिचर्य्यां, गिरोऽस्मदीयाः स्तुतीश्च प्रति आयाहि आगच्छ, आगत्य यक्षि च यज च। एभिः, पूर्वमनिर्दिष्टानां देवानामिदमा परामर्शात्,

१ २ । आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः।
देवेभिरग्न आगहि ॥

इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ (पां २।४।३२।) इत्यशनुदात्तः, शित्त्वात्सर्वादेशः, नेदमदसोः (पां २।१।११।) इति भिस ऐसादेशाभावः, विभक्तिरनुदात्तैव, न च ऊडिदमित्यादिना विभक्तेरुदात्तत्वं, तत्रान्तोदात्तादित्यधिकारात्। इवः, नब्विषयस्यानिसन्तस्येत्याद्युदात्तत्वं। विश्वेभिः, विश्वशब्दो, विशेः क्वन्निति क्वन्नन्तो नित्त्वादाद्युदात्तः, बहुलं छन्दसीति भिस ऐस् न भवति, बहुवचने झल्येत् (पां ७।३।१०३।) इत्येत्वं। सोमपीतये, सोमशब्दः, अर्त्तिस्तुसु इत्यादिना मन्नन्तो नित्त्वादाद्युदात्तः, सोमस्य पीतिर्यस्मिन्यागे स सोमपीतिस्तस्मै, तादर्थ्ये चतुर्थी। देवेभिः, बहुलं छन्दसीति भिस ऐसादेशाभावः, बहुवचने झल्येदित्येत्वं। यक्षि, यजेर्लोटः सिप्, बहुलं छन्दसीति शपो लुक्, व्रश्च भ्रस्ज (पां ८।२।३६।) इति षत्वं, षढोः कः सि (पां ८।२।४१।) इति कत्वं, सेर्हिरादेशश्छान्दसत्वान्न भवति, सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वर एव ॥ १ ॥

द्वितीयामृचमाह आ त्वा कण्वेति। हे विप्र मेधाविन्नग्ने, कण्वा मेधाविन ऋत्विजः, त्वा यज्ञनिष्पादकं त्वां, अहूषत आह्वयन्ति, तथा ते धियस्त्वदीयानि कर्म्माणि गृणन्ति कथयन्ति, अतो हे अग्ने, देवेभिर्देवैः सह आगहि आगच्छ। विप्र इत्यादिषु चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु कण्वा ऋभुरिति पठितं। त्वा, त्वामौ द्वितीयायाः (पां ८।१।२३।) इति त्वादेशः सर्वानुदात्तः। कण्वा, कण शब्दार्थे, अशू प्रुषि लटि कणि खटि विशिभ्यः क्वन्निति क्वन्प्रत्यय औणादिकः, नित्त्वादाद्युदात्तः। अहूषत, ह्वेञ् स्पर्द्धायां शब्दे च, छन्दसि लुङ् लङ्लिटः (पां ३।४।६।) इति वर्त्तमाने लुङ्, ञित्त्वादात्मनेपदं, झस्य, आत्मनेपदेष्वनतः (पां ७।१।५।) इत्यदादेशः, च्लेः सिच्, एकाच उपदेशेऽनुदात्तात् (पां ७।२।१०।) इतीट्प्रतिषेधः, बहुलं छन्दसीति सम्प्रसारणं, परपूर्वत्वं, हलः (पां ६।४।२।) इति दीर्घत्वं, आदेशप्रत्यययोः (पां ८।३।५०।) इति षत्वं, छान्दसत्वादुकारस्य न गुणः, अडागमः। गृणन्ति, गृ शब्दे, लटो झि, झोऽन्तः (पां ७।१।३।) इति झस्यान्तादेशः, क्र्यादिभ्यः श्ना (पां ३।१।८१।)

१ ३ १ इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगं।
आदित्यान्मारुतं गणं॥

इति ग्मा, घादीनां ह्रस्वः (पां ७।४।८०।) इति धातोर्ह्रस्वत्वं, श्नाभ्यस्तयोरातः (पां ६।४।११२।) इत्याकारलोपः, ऋवर्णाच्चेति वक्तव्यमिति वार्त्तिकेन णत्वं, तिङ्स्वर एव शिष्यते। विप्र, आमन्त्रितनिघातः। ते, अनुदात्तमित्यनुवृत्तौ, तेमयावेकवचनस्य (पां ८।१।२२।) इति षष्ठ्यन्ते इत्यादेशः। देवेभिः, छान्दस ऐसाभावः। गच्छ, गम्लृ सृप्लृ गतौ, लोटः सिप्, सेर्ह्यपिच्च (पां ३।४।८७।) इति सेर्हिरादेशः, कर्त्तरि शप् (पां ३।१।६८।) इति शप्, तस्य, बहुलं छन्दसीति लुक्, अनुदात्तोपदेशे (पां ६।४।३२।) इत्यादिना मकारस्य लोपः, तस्य, असिद्धवदत्राभात् (पां ६।४।२२।) इत्यसिद्धत्वात्, अतो हेः (पां ६।४।१०५।) इति हेर्लुङ्न भवति॥ २॥

तृतीयामृचमाह इन्द्रवायू बृहस्पतिमिति। इन्द्रादिदेवान्, मारुतं मरुतां वायूनां सम्बन्धिनं गणञ्च, हे अग्ने यक्षीति पदद्वयमनुवर्त्तते। इन्द्रश्च वायुश्च इन्द्रवायू, देवताद्वन्द्वे च (पां ६।३।२६।) इति प्राप्तस्यानङः, उभयत्र वायोः प्रतिषेधो वक्तव्य इति वार्त्तिकेन प्रतिषेधः, देवताद्वन्द्वे च (पां ६।२।१४१।) इति प्राप्तस्योभयपदप्रकृतिस्वरत्वे, नोत्तरपदेऽनुदात्तादौ (पां ६।२।१४२।) इति निषेधः, समासान्तोदात्तत्वमेव। बृहस्पतिं, तद्बृहतोः करपत्योश्चोरदेवतयोरभिधेययोः सुट् तलोपो वक्तव्य इति वार्त्तिकेन तलोपः सुडागमश्च, बृहच्छब्दमाद्युदात्तं केचिदधीयन्तीति वामनः, पा रक्षणे, पातीति पतिः, पातेर्डतिः प्रत्ययः, प्रत्ययस्वरेणाद्युदात्तः, समासे, उभे वनस्पत्यादिषु युगपत् (पां ६।२।१४०।) इत्युभयपदप्रकृतिस्वरत्वं। मित्रा, द्वितीयायाः, सुपांसुलुगित्यादिना विभक्तेराजादेशः। चित्त्वादन्तोदात्तत्वं। आदित्यान्, दितेरपत्यानि आदित्याः, दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः (पां ४।१।८५।) इति ण्यः प्रत्ययः, प्रत्ययस्वरः। मारुतं, मरुतां विकारः, अनुदात्तादेश्च (पां ४।३।१४०।) इत्यञ्, ञित्त्वादाद्युदात्तः॥ ३॥

---

१४। प्र वो भ्रियन्त इन्दवो मत्सरा मादयिष्णवः।
द्रप्सा मध्वश्चमूषदः॥

१५। ईलते त्वामवस्यवः काण्वासो वृक्तवर्हिषः।
हविष्मन्तो अरङ्कृतः॥

चतुर्थीमृचमाह प्र वो भ्रियन्त इति। हे इन्द्रादिदेवाः, वो युष्मदर्थमिन्दवः सोमाः प्रभ्रियन्ते प्रकर्षेण सम्पाद्यन्ते। कीदृशाः, मत्सरास्तृप्तिकारकाः। मत्सरः सोमो मन्दतेस्तृप्तिकर्म्मण इति यास्कः। मादयिष्णवः, हर्षहेतवः। द्रप्सा विन्दुरूपाः। मध्वः, मधुराः। चमूषदः, चमूषु चमसादिपात्रेष्ववस्थिताः। प्र, व्यवहिताश्च (पां १। ४।८२।) इति व्यवहितप्रयोगः। भ्रियन्ते, भृञो यकि, रिङ्शयग्लिङ्क्षु (पां ७।४।२८।) इति रिङादेशः, हृञो वा, हृग्रहोर्भश्छन्दसीति हकारस्य भकारः। इन्दवः, उन्दी क्लेदने, उन्दन्ति पात्राणीति, निदित्यनुवृत्तौ, उन्देरिच्चादेरिति उप्रत्यय औणादिकः, आदेरिकारश्च, नित्त्वादाद्युदात्तत्वं,। मत्सराः, मद तृप्तियोगे, चिदित्यनुवृत्तौ, मधूमादिभ्यः किदिति सरःप्रत्ययः, तितु त्र त सि सु सरकसेषु च (पां ७।२।९।) इतीट्प्रतिषेधः, चित्त्वादन्तोदात्तः। मादयिष्णवः, मदी हर्षग्लेपनयोः, मदेर्ण्यन्तात्, णेश्छन्दसि (पां ३।२।१३७।) इतीष्णुच्, णेरनिटि (पां ६।४।५१।) इति णिलोपे प्राप्ते अयामन्ताल्वाय्येत्विष्णुषु (पां ६।४।५५।) इति अयादेशः, चित्त्वादन्तोदात्तः। मध्वः, मधुशब्द आद्युदात्त उक्तः, मधुशब्दस्य व्यत्ययेन पुंल्लिङ्गत्वं, सञ्ज्ञापूर्वको विधिरनित्य इति परिभाषया, जसि च (पां ७।३।१०९।) इति गुणो न भवति। चमूषदः, चमु छमु जमु अदने, चम्यते भक्ष्यते येषु चमसेषु ते चम्वः, कृषि चमीत्यादिना ऊः प्रत्यय औणादिकः, तत्र सीदन्तीति चमूषदः, सत्सूद्विष (पां ३।२।६१।) इत्यादिना क्विप्, सुषामादेराकृतिगणत्वात् षत्वं, कृदुत्तरपदप्रकृतिस्वरत्वं॥ ४॥

पञ्चमीमृचमाह ईळते त्वामिति। हे अग्ने, त्वामीळते ऋत्विजः स्तुवन्ति। कीदृशाः, अवस्यवः, अवनं रक्षणं तद्धेतुम् देवानिच्छन्तः। कण्वासो मेधाविनः। वृक्तबर्हिषः, आस्तरणार्थं छिन्नदर्भाः। हविष्मन्तो हविर्युक्ताः। अरङ्कृतः, अलङ्कर्त्तारः। ईळते, ईड स्तुतौ, अनुदात्तेत्वा-

z

। ६ । घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः ।
आ देवान्त्सोमपीतये ॥ २६ ॥

झटो झः, अदिप्रभृतिभ्यः शपः ( पां २ । ४ । ७२ । ) इति शपो लुक्, आत्मनेपदेष्वनतः ( पां ७ । १ । ५ । ) इति झस्यादादेशः, टित आत्मनेपदानां टेरे ( पां ३ । ४ । ७९ । ) इति टेरेत्वं, तास्यनुदात्तेत् ( पां ६ । १ । १८६ । ) इत्यादिना लसार्वधातुकस्यानुदात्तत्वाद्धातुस्वरः शिष्यते । अवस्यवः, अवन्तीत्यवा देवास्ताननिशयेनेच्छन्ति, सुप आत्मनः क्यच् ( पां ३ । १ । ८ । ) इति क्यच्, क्यचि च ( पां ७ । ४ । ३३ । ) इति ईत्वं न भवति, न छन्दस्यपुत्रस्य ( पां ७ । ४ । ३५ । ) इति निषेधात्, सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्य इति वार्त्तिकेन सुक्, क्याच्छन्दसि (पां ३ । २ । १७० ।) इति उप्रत्ययः, अतो लोपः ( पां ६ । ४ । ४८ । ) इत्यकारस्य लोपः, प्रत्ययस्वरेणान्तोदात्तत्वं । कण्वासः, कणशब्दार्थे, कणन्ति ध्वनन्ति स्तोत्रादिपाठेनेति कण्वा ऋत्विजः, अशू प्रुषि लटीत्यादिना क्वन्प्रत्यय औणादिकः, नित्त्वादाद्युदात्तः, आज्जसेरसुक् ( पां ७ । १ । ५० । ) इत्यसुक् । वृक्तबर्हिषः, वृक्तमुक्तं, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । हविष्मन्तः, हविरेषामस्तीति हविष्मन्तः, तसौ मत्वर्थे (पां १ । ४ । १९ । ) इति भत्वेनापदत्वान्न रुत्वं । अरङ्कृतः, अलङ्कुर्वन्तीत्यलङ्कृतः, क्विप् च (पां ३ । २ । ७६ । ) इति क्विप्, ह्रस्वस्य पिति कृति तुक् ( पां ६ । १ । ७१ । ) इति तुक्, कपिलादीनां सञ्ज्ञाछन्दसोर्वा लोरत्वमापद्यते, इति लकारस्य रेफादेशः ॥ ५ ॥

षष्ठीमृचमाह घृतपृष्ठा इति । हे अग्ने, त्वा त्वां ये अश्वा रथेन वहन्ति । कीदृशाः, घृतपृष्ठाः, पुष्टाङ्गत्वेन दीप्तपृष्ठाः । मनोयुजः, मनःसङ्कल्पमात्रेण रथे युज्यमानाः । वह्नयो वोढारः । तैरश्वैः सोमपीतये सोमपानहेतुयागार्थं देवानावहेति शेषः । घृतपृष्ठाः, घृ क्षरणदीप्तिकान्तिगतिषु, घृतं दीप्तं पृष्ठं येषान्ते घृतपृष्ठाः, घृतशब्दः प्रत्ययस्वरेणान्तोदात्तः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । मनोयुजः, मनसा युज्यन्त इति मनोयुजः, ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ( पां ३ । २ । ५९ । ) इति क्विन्प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वं । त्वा, त्वामौ द्वितीयायाः ( पां ८ । १ । २३ । ) इत्यनुदात्तस्त्वादेशः, वहन्ति, शप्तिपोरनुदात्तत्वाद्धातुस्वरः, यद्वृत्तयोगान्निघाताभावः । वह्नयः, वहि-

१७१ तान्यजत्राँ ऋतावृधोऽग्ने पत्नीवतस्कृधि।
मध्वः सुजिह्व पायय॥

त्यनुवृत्तौ, वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्‌ इति निः प्रत्यय औणादिकः, तस्य नित्त्वादाद्युदात्तत्वं। आ देवान्त्सोमपीतये, सोमपीतये, उक्त-पूर्वमिति। सकारे परतो नकारस्य संहितायां, नश्च (पां ८।३।३०।) इति धुडागमः, खरि च (पां ८।४।५५।) इति चर्त्वं, चयो-द्वितीयाः शरि पौष्करसादेरिति वाच्यमिति वार्त्तिकेन द्वितीयस्थकारः॥९॥ इति प्रथमस्य प्रथमे षड्विंशो वर्गः॥२६॥

सूक्ते सप्तमीमृचमाह तान्यजत्रानिति। हे अग्ने, तानिन्द्रादीन्देवान् यजत्रान्‌ यजनीयान्, ऋतावृधः, ऋतस्य सत्यस्य यज्ञस्य वा वर्द्धकान्, पत्नीवतः पत्नीयुक्तान्‌ कृधि कुरु। हे सुजिह्व शोभनजिह्वोपेत, मध्वो मधुरस्य सोमस्य भागं देवान्‌ पायय। यजत्रान्, अमि नक्षि यजि वन्धि पतिभ्योऽत्रन्निति यजेरत्रन्‌ प्रत्यय औणादिकः। ऋतावृधः, वृधु-वृद्धौ, अन्तर्भावितण्यर्थात्, क्विप्‌ च (पां ३।२।७६।) इति क्विप्, अन्येषामपि दृश्यते (पां ६।३।१३७।) इति पूर्वपदस्य दीर्घत्वं, वृधेर्धातुस्वरः समासे कृदुत्तरपदप्रकृतिस्वरत्वं। अग्ने, पादादित्वा-दामन्त्रितनिघातः, षाष्ठिकमाद्युदात्तत्वं। पत्नीवतः, पत्युर्नो यज्ञसंयोगे (पां ४।१।३३।) इति ङीप्, इकारस्य च नकारः, ता एषां सन्तीति मतुप्, छन्दसीरः (पां ८।२।१५।) इति वत्वं, पतिशब्दो डति-प्रत्ययान्तत्वादाद्युदात्तः, ङीप्मतुपोरनुदात्तत्वात्‌ स एव शिष्यते। कृधि, कृञो लोटः सिप्, सेर्ह्यपिच्च (पां ३।४।८७।) इति सेर्हिरादेशः, बहुलं छन्दसीति विकरणलुक्, श्रु शृणु पृ कृ वृभ्यश्छन्दसि (पां ६।४।१०२।) इति हेर्धिरादेशः, हेर्ङित्त्वाद्गुणाभावः,। मध्वः, उक्त एवः। सुजिह्व, आमन्त्रितनिघातः। पायय, पा पाने, पिबन्तं प्रयुङ्क्ष्व इत्यर्थे, हेतुमति च (पां ३।१।२६।) इति णिच्, शाच्छासाह्वाव्यावेपां युक्, (पां ७।३।३७) इति युक्, पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वे, अतएवाक्यवधायक-त्वान्मध्व इत्यपेक्ष्य, तिङ्ङतिङः (पां ८।१।२८।) इति निघातः॥७॥

अष्टमीमृचमाह ये यजत्रा इति। ये देवा यजत्रा यष्टव्यास्तथा ये देवा ईड्याः स्तुत्यास्ते सर्वेऽपि वषट्कृति वषट्कारकाले वषट्कारयुक्ते यागे वा, हे अग्ने, ते त्वदीयया जिह्वया मधोर्मधुरस्य सोमस्य भागं पिबन्तु।

१ ८ १ ये यजत्रा य ईड्यास्ते ते पिबन्तु जिह्वया ।
मधोरग्ने वषट्कृति ॥

१ ९ १ आकीं सूर्य्यस्य रोचनाद्विश्वां देवां उषर्बुधः ।
विप्रा होतेह वक्षति ॥

यजत्रा इति गतं। ईड्याः, ईड स्तुतौ, ऋहलोर्ण्यत् ( पां ३ । १ । १२४ । ) इति ण्यत्प्रत्ययः, तित्स्वरिते प्राप्ते, ईडवन्दवृशंसदुहां ण्यतः ( पां ६ । १ । २१४ । ) इत्याद्युदात्तत्वं। ते, ते, इत्युभयत्र द्वितीयस्य ते इति शब्दस्य युष्मदादेशस्य सर्वानुदात्तत्वं। मधोः, प्रत्ययस्य नित्त्वादाद्युदात्तत्वमुक्तं। अग्ने, आमन्त्रितनिघातः। वषट्कृति, करोतेः सम्पदादिभ्यो भावे क्विप्, वषडित्यस्य करणं यस्मिन् याग इति बहुव्रीहिः, वषडित्यस्य निपातत्वादाद्युदात्तत्वं, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ ८ ॥

नवमीमृचमाह, आकीं सूर्य्यस्येति। विप्रो मेधावी होता होमनिष्पादकोऽग्निः उषर्बुधः, उषः काले यागसमये यागगमनाय प्रबुध्यमानान् विश्वान् देवान् सूर्य्यस्य सम्बन्धिनो रोचनात्स्वर्गलोकादिह कर्म्मणि आकीं वक्षति आवहतु। आकीं, निपात आद्युदात्तः। सूर्य्यस्य, सूर्य्यशब्दो, राजसूयसूर्य्यमृषोद्य ( पां ३ । १ । ११४ । ) इत्यादिना क्यप्प्रत्ययान्तो निपातितः, क्यपः पित्त्वाद्धातुस्वरेणाद्युदात्तः। रोचनात्, रोचमानात्, रुच दीप्तौ, अनुदात्तेतश्च हलादेः ( पां ३ । २ । १४९ । ) इति कर्त्तरि युच्, चितः (पां ६ । १ । १६३ । ) इति चित्त्वादन्तोदात्तत्वं। विश्वान्, विश्वशब्दो विशेः क्वन्निति क्वन्नन्तो नित्त्वादाद्युदात्तः। उषर्बुधः, उषसि बुध्यन्त इत्युषर्बुधः, क्विप् च ( पां ३ । २ । ७६ । ) इति क्विप्, धातुस्वरेणोकार उदात्तः, समासे कृदुत्तरपदप्रकृतिस्वरत्वं। विप्र, ऋज्रेन्द्रेत्यादिना रन्प्रत्यय औणादिकः, नित्त्वादाद्युदात्तः। होता, हूयतेस्ताच्छील्ये तृन्, बहुलं छन्दसीति सम्प्रसारणं, परपूर्वत्वं, गुणः, नित्त्वादाद्युदात्तः। इह, इदमो हः ( पां ५ । ३ । ११ । ) इति हः प्रत्ययः, इदम इश् ( पां ५ । ३ । ३ । ) इति इश्प्रत्ययः, इशः शित्त्वात् सर्वादेशः, प्रत्ययस्वरः। वक्षति, वहेः प्रार्थनायां लिङर्थे लेट्, तस्य तिप्, कर्त्तरि शप्, शपि परतः, सिब्बहुलं लेटि ( पां ३ । १ । ३४ । ) इति सिप्, ढत्वकत्वषत्वानि, तिङ् तिङ इति निघातः ॥ ९ ॥

१ १० १ विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना १
पिबा मित्रस्य धामभिः ॥
१ ११ १ त्वं होता मनुर्हितोऽग्ने यज्ञेषु सीदसि १
सेमं नो अध्वरं यज १

अग्निष्टोमे प्रउगशस्त्रस्य याज्या विश्वेभिः सोम्यं मध्विति, स्तोत्रमग्ने, शस्त्रादितिखण्डे सूत्रितं विश्वेभिः सोम्यं मध्विति याज्येति, तामेतां याज्यां सूक्ते दशमीमृचमाह विश्वेभिः सोम्यं मध्विति। हे अग्ने, त्वं विश्वेभिः सर्वैः पूषभगादिभिर्देवैरिन्द्रेण वायुना मित्रस्य सम्बन्धिभिर्धामभिस्तेजोभिर्मूर्त्तिविशेषरूपैश्च सह सोम्यं सोमसम्बन्धि, मधु मधुरं भागं पिब। विश्वेभिः, बहुलं छन्दसीति भिस ऐसादेशाभावः। सोम्यं, सोममर्हति य इत्यनुवृत्तौ, मये च (पां ४। ४। १३८।) इति यः प्रत्ययः, सोमस्य विकार इत्यर्थे, यस्येति च (पां ६। ४। १४८।) इत्यन्त्याकारलोपः, प्रत्ययस्वरः। मधु, फलि पाटि नमि मनि जनां गुक् पटिनाकिधतश्चेति उः प्रत्यय औणादिकः, निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः। वायुना, कृ वा पाजि मि स्वदि साध्यशूभ्य उणिति उण्प्रत्यय औणादिकः, आतो युक् चिण्कृतोः (पां ७। ३। ३३।) इति युगागमः, प्रत्ययस्वरः। पिब, पा पाने, लोटः सेर्हिरादेशः, शपि, पा घ्रा ध्मा स्थाम्नादाम् (पां ७। ३। ७८।) इत्यादिना पिबादेशः, अतो हेः (पां ६। ४। १०५।) इति हेर्लुक्, शपः पित्त्वाद्धातुस्वरः पादादित्त्वान्ननिघातः, द्व्यचोऽतस्तिङः (पां ६। ३। १३५।) इति संहितायां दीर्घः, धामभिः, धाञ् धातोः, आतो मनिन् (पां ३। २। ७४।) इति मनिन् प्रत्ययो नित्स्वरः ॥१०॥

एकादशीमृचमाह त्वं होतेति। हे अग्ने, मनुर्हितः मनुषा होत्रादिरूपेण मनुष्येण हितः सम्पादितो होता होमनिष्पादको यस्त्वं यज्ञेषु सीदसि तिष्ठसि, स त्वं नोऽस्मदीयमिममध्वरं यज्ञं यज निष्पादय। मनुर्हितः, मन्यत इति मनुः, जनेरुसिरित्यनुवृत्तौ, बहुलमन्यत्रापि उस्, अर्त्ति पृ वपीत्यादिना, निदित्यनुवृत्तौ नित्त्वादाद्युदात्तः, हितः, धाञ् धातोः, निष्ठा (पां ३। २। १०२।) इति क्तः प्रत्ययः, दधातेर्हिः (पां ७। ४। ४२।) इति दधातेर्हिरादेशः, मनुषा हितो मनुर्हितः, कर्तृकरणे कृता बहुलं (पां २। १। ३२।) इति

। १२ । युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः ।
ताभिर्देवाँ इहावह ॥ २७ ॥

समासः, कृत्स्वरापवादेन, तृतीयाकर्म्मणि (पां ६ । २ । ४८ ।) इति पूर्वपदप्रकृतिस्वरत्वं । सीदसि, षद्लृ विशरणगत्यवसादनेषु, लटः सिप्, शपि, पाघ्राध्मा (पां ७ । ३ । ७८ ।) इत्यादिना सीदादेशः, निघातः । सेमं, इत्यत्र संहितायां, सोऽचिलोपेचेत्पादपूरणं (पां ६ । १ । १३४ ।) इति सोर्लोपे गुणः । अध्वरं, न विद्यते ध्वरो यस्मिन् सो ऽध्वरः, नञ्सुभ्यां (पां ६ । २ । १७२ ।) इत्युत्तरपदान्तोदात्तत्वं । मोऽअध्वरमित्यत्र संहितायां, एङः पदान्तादति (पां ६ । १ । १०९ ।) इति पूर्वरूपं प्राप्तं, प्रकृत्यान्तः पादमव्यपरे (पां ६ । १ । ११५ ।) इति प्रकृतिभावान्निवर्त्तते ॥ ११ ॥

द्वादशीमृचमाह युक्ष्वा हीति । हे देवाग्ने, रोहितो रोहिच्छब्दाभिधेयास्त्वदीया वडवा रथे युक्ष्व योजय, हिशब्दः पादपूरणार्थः । कीदृशीर्वडवाः, अरुषीर्गतिमतीः । हरितः, हर्त्तुं रथारूढान् पुरुषान् नेतुं समर्थाः । ताभिर्वडवाभिरिहास्मिन् कर्म्मणि देवानावह । युक्ष्व, युजिर् योगे, लोटः स्वरितेत्त्वादात्मनेपदं थास्, थासःसे (पां ३ । ४ । ८० ।) इति थासः से आदेशः, सवाभ्यां वामौ (पां ३ । ४ । ९१ ।) इति वादेशः, रुधादिभ्यः श्नम्, बाहुलकाल्लुक्, कुत्वषत्वे, प्रत्ययस्वरेणान्तोदात्तः, संहितायां, द्व्यचोऽतस्तिङः (पां ६ । ३ । १३५ ।) इति दीर्घः । अरुषीः, ऋ गतौ, रन्ति गच्छन्तीत्यरुष्यो वडवाः, ऋहनिभ्यामुषन् इति उषन्प्रत्यय औणादिकः, धातोर्गुणो रपरत्वं, नित्त्वादाद्युदात्तोऽरुषशब्दस्तस्मात् स्त्रियां छान्दसो ङीप्, शसि, प्रथमयोः पूर्वसवर्णः (पां ६ । १ । १०२ ।) इति दीर्घः । रथे, हनिकुषिनीरमिकाशिभ्यः क्थन्निति रमेरौणादिकः क्थन्प्रत्ययः, नित्त्वादाद्युदात्तः । हरितः, हृसृरुहियुषिभ्य इति रिति हरतेरितिप्रत्ययः, इकारः प्रत्ययस्वरेणोदात्तः । रोहितः, रुहेरपि तेनैव सूत्रेणेतिः प्रत्ययः, इकारः प्रत्ययस्वरेणोदात्तः । ताभिः, सावेकाचस्तृतीयादिः (पां ६ । १ । १६८ ।) इति विभक्तेः प्राप्तमुदात्तत्वं, नगोश्वन्साववर्ण (पां ६ । १ । १८२ ।) इति निषिध्यते । देवानित्यत्र पूर्ववत् रुत्वानुनासिकौ ॥ १२ ॥ इति प्रथमस्य प्रथमे सप्तविंशो वर्गः ॥ २७ ॥

VOL. I.] MARCH. [No. 3.

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE

Hon. Court of Directors of the East India Company,

AND THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

EDITED BY DR. E. RÖER.




माधवाचार्य्यकृतभाष्यसहित ऋग्वेदसंहितायाः प्रथमाष्टकस्य प्रथमावधि द्वितीयाध्याय पर्य्यन्तं।

THE FIRST TWO LECTURES OF THE SANHITA OF THE

# RIG VEDA,

WITH THE COMMENTARY OF MÁDHAVÁCHÁRYA, AND AN ENGLISH TRANSLATION OF THE TEXT.

BY DR. E. RÖER.

FASCICULUS III.

CALCUTTA:

PRINTED BY J. THOMAS, AT THE BAPTIST MISSION PRESS, CIRCULAR ROAD.

1848.

**ORIENTAL SECTION—ASIATIC SOCIETY.**

1848.

G. A. BUSHBY, Esq.
WELBY JACKSON, Esq.
BABU DEBENDRANÁTHA THÁKURA.
H. M. ELLIOT, Esq.
W. SETON KARR, Esq.
BABU HARÍMOHANA SENA.
BABU RÁJENDRALÁL MIṬTRA.
Dr. E. ROER, Secretary, Oriental Department.

---

HONORARY (NON-RESIDENT) MEMBERS.

B. H. HODGSON, Esq., *Darjíling.*
WALTER ELLIOTT, Esq., *Madras.*
H. H. WILSON, Esq. Boden Professor of Sanscrit, *Oxford.*

## पञ्चदशसूक्तं।

। १ । इन्द्र सोमं पिब ऋतुना त्वा विशन्त्विन्दवः।
मत्सरासस्तदोकसः ॥

। २ । मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन।
यूयं हि ष्ठा सुदानवः ॥

इन्द्रसोममित्यादिकस्य द्वादशर्चस्य सूक्तस्य ऋषिच्छन्दसी पूर्ववत्, यद्यप्येतत् सूक्तं क्रत्स्नमृतुदेवताकं, तथापि प्रत्यृचमिन्द्रादिदेवतान्तराणि मिलितानि, तथाचानुक्रम्यते इन्द्र सोममृतव्यं, तत्रैन्द्रीमारुती त्वाष्ट्र्याग्नेय्यैन्द्री मैत्रावरुणी चतस्रो द्रविणोदस आश्विन्याग्नेय्यृतुदेवताः सर्वत्रेति। विनियोगस्तु स्मार्त्तो द्रष्टव्यः, तस्मिन् सूक्ते प्रथमामृचमाह इन्द्रसोममिति। हे इन्द्र, ऋतुना सह सोमं पिब, इन्दवः पीयमानाः सोमाः त्वा त्वां आविशन्तु। कीदृशाः, मत्सरासः तृप्तिकराः। तदोकसस्तन्निवासाः, सर्वदा त्वदुदरस्थायिन इत्यर्थः। इन्द्र, षाष्ठिकमामन्त्रितायुदात्तत्वं। सोमं, अर्त्तिस्तुस्वित्यादिना मन्प्रत्यय औणादिकः, नित्त्वादाद्युदात्तः। पिब, पिबामित्रस्येत्यत्रोक्तं। आ त्वा विशन्त्वित्युत्तरवाक्यगतास्थातार्थेन सह समुच्चयार्थश्चकारो लुप्तः,। अतः, चादिलोपे विभाषा (पां ८।१।६३।) इतीयं प्रथमातिङ्विभक्तिर्न निहन्यते। विशन्त्वितिलोपसाम्येऽपि द्वितीयात्वान्निहन्यत एव, संहितायां, आद्गुणः (पां ६।१।८७।) इति प्राप्तस्य गुणस्य, ऋत्यकः (पां ६।१।१२८।) इति शाकल्यमते प्रकृतिभावादभावः। इन्दवः, प्र वो भ्रियन्त इत्यत्रोक्तं। मत्सरासः, तत्रैवोक्तं, आज्जसेरसुक् (पां ७।१।५०।) इत्यसुक्, इत्ययं मात्र विशेषः। तदोकसः, तदेवौकः स्थानं येषां ते तथोक्ताः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ १॥

द्वितीयामृचमाह मरुत इति। हे मरुतः, ऋतुना सह पोत्रात् पोतृनामकस्य ऋत्विजः पात्रात् सोमं पिबत, ततोऽस्मदीयं यज्ञं पुनीतन, शोधयत,। हे सुदानवः, शोभनदातारो मरुतः हि यस्माद्यूयं स्थ, युष्माकं शोधयितृत्वं प्रसिद्धं, तस्माच्छोधयतेत्यर्थः। पिबत, अत्र तिङोऽदुपदेशाच्छपः परत्वाल्लसार्वधातुकानुदात्तत्वं, धातुस्वरः, पूर्वामन्त्रितस्याविद्यमानवत्त्वेन पदादपरत्वान्निघाताभावः, पूर्ववत्प्रकृतिभावः।

पोत्रात्, पोतुः सम्बन्धि पात्रं पोत्रं, तस्येदं ( पां ४।३।१२०। ) इत्यण्, तद्धितेष्वचामादेः ( पां ७।२।११७। ) इति प्राप्ता वृद्धिः, सर्वे विधयश्छन्दसि विकल्प्यन्त इति परिभाषया न भवति। नन्वेव-मन्त्यस्य ऋकारस्य, अचोञ्णिति ( पां ७।२।११५। ) इति वृद्धिः प्राप्नोति। तस्याञ्जाग तद्दत्यत्रपि, विप्रतिषेधे परं कार्य्यं ( पां १।४। २। ) इति परया आदिवृद्ध्या अन्त्योपधालक्षणा वृद्धिर्बाध्यत इत्युक्तं, इह तु परस्या आदिवृद्धेश्छान्दसत्वेन निवृत्तत्वादन्त्यवृद्धिः प्राप्नोत्येवेति, एवं तर्हि अत्राप्यादिवृद्धिरौकारः क्रियतां, तस्य तु छान्दस ओकारो भविष्यति। पुनीतन, पूञ् पवने, लोट्, लोटो लङ्वद्भावात्, तस्थस्थ-मिपां ताम् तम् तामः ( पां ३।४।१०१। ) इति तादेशः, क्र्यादिभ्यः श्ना ( पां ३।१।८१। ) इति श्ना, ईहल्यघोः ( पां ६।४।११३। ) इतीकारः, तप्तनप्तनथनाश्च (पां ७।१।४५।) इति तनादेशः, प्वादीनां ह्रस्वः ( पां ७।३।८०। ) इति ह्रस्वः, प्रत्ययस्यापि, सार्वधातुकमपित् ( पां १।२।४। ) इति ङित्त्वात् स्वपूर्वयोरिकोर्गुणाभावः। यूयं, युष्मदःपरस्य जसो, ङेप्रथमयोरम् ( पां ७।१।२८। ) इत्यमादेशः, न विभक्तौ तुस्माः ( पां १।३।४। ) इति मकारस्येत् सञ्ज्ञाप्रतिषेधः, यूयवयौ जसि ( पां ७।२।९३। ) इति मपर्य्यन्तस्य यूयादेशः शेषेलोप इति सूत्रेणात्र यूयादेशात् प्रागेवान्तरङ्गत्वात् प्रातिपदिकस्यान्तोदा-त्तत्वं, शेषनिघातस्ततो यूयादेशः, स्थानेऽन्तरतमः ( पां १।१।५०। ) इति सर्वानुदात्तः, तत्र, शेषेलोपोऽन्त्यलोप इति पक्षे पूर्वसवर्णदीर्घत्वं बाधित्वा योऽयं, अमिपूर्वः ( पां ६।१।१०७। ) इति पूर्व्वरूप-मेकादेशस्तेन प्रातिपदिकान्तेनादात्तेन सहानुदात्तस्य सुपः, एका देश उदात्तेनोदात्तः ( पां ८।२।५। ) इत्यनुदात्तत्वं, टिलोपपक्षे तु उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं। स्थ, अस भुवि, लटो मध्यम पुरुषबहुवचनं थः, अदिप्रभृतिभ्यः शपः ( पां २।४।७२। ) इति शपो लुक्, श्नसोरल्लोपः ( पां ६।४।१११। ) इत्यकारलोपो व्यत्ययेन षत्वं, थि च ( पां ८।१।३४। ) इति निषेधात्, तिङ्ङतिङः ( पां ८।१।२८। ) इति निघातो न भवति, संहितायां, अन्येषामपि दृश्यते ( पा ६।३।१३७। ) इति दीर्घत्वं, हे सुदानवः यूयं हि स्थेति विवक्षितं, सुदानवः, दावाभ्यां नुरिति नुः, सोः प्रादिसमासः, आम-न्त्रितनिघातः, अत्र यूयमित्युद्दिश्य सुदानवः स्थेति न विधीयते, येन आमन्त्रितत्वान्निघातो न स्यात्, किन्तु सुदानव इति सुदानमिद्धव-

। ३ । अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना ।
त्वं हि रत्नधा असि ॥

द्वारत्वेन सम्बोधनेऽन्येषु मारुतसूक्तेषु मरुतां प्रसिद्धत्वात् प्रभावातिशयाद्वयं स्थेति युष्मच्छब्देन प्रतिनिर्दिश्य पुनीतनेति प्रार्थनवचने तेषां हेतुत्वं हिशब्देनोच्यते ॥ २ ॥

तृतीयामृचमाह अभि यज्ञमिति । ग्नाशब्दः स्त्रीवाची, तथाच यास्क आह गेना ग्ना इति स्त्रीणां, गेना गमयन्त्येनां, ग्ना गच्छन्त्येनामिति, ग्ना अस्य सन्तीति ग्नावान्, नेष्टृशब्दोऽत्र त्वष्टारं देवमाह, कस्मिंश्चिद्देवसत्रे नेष्टृत्वेन त्वष्टुः कृतत्वात्, हे ग्नावः पत्नीयुक्त नेष्टस्त्वष्टः, नोऽस्मदीयं यज्ञं अभिगृणीहि, अभितो देवानां समीपे स्तुहि, ऋतुना सह त्वं सोमं पिब, हि यस्मात्त्वं रत्नधा असि, रत्नानां दाता असि भवसि, तस्मात् सोमं पातुमर्हसीत्यर्थः । अभि, उपसर्गाश्चाभिवर्जमिति पर्य्युदासादभेरन्तोदात्तत्वं । गृणीहि, गॄ शब्दे, लोटः सिपो हिः, क्र्यादिभ्यः श्ना इति श्ना, हेर्ङित्त्वात् ई हल्यघोः (पां ६ । ४ । ११३ ।) इति ईत्वं, श्नाप्रत्ययस्य ङित्त्वाद्गुणाभावः, प्वादीनां ह्रस्वः (पां ८ । २ । ८० ।) इति ह्रस्वः, तिङ्ङतिङः (पां ८ । १ । २८ ।) इति निघातः । ग्नावः, ग्ना अस्य सन्तीति मतुप्, व्यत्ययेन वत्वं, सम्बुद्धौ, मतुवसोरु (पां ८ । ३ । १ ।) इति रुत्वं, विसर्गः, पादादित्वेनामन्त्रितनिघाताभावात् षाष्ठिकामन्त्रिताद्युदात्तत्वं, ग्नाव इत्यस्य विशेषकतया विशेषवचनत्वात्, नामन्त्रिते समानाधिकरणे (पां ८ । १ । ७३ ।) इति निषेधाभावात्, अविद्यमानवत्त्वेनोत्तरस्य नेष्टृशब्दस्य षाष्ठिकमाद्युदात्तत्वं । पिब, शपः पित्त्वाद्धातुस्वरः, पूर्वयोरामन्त्रितयोरविद्यमानवत्त्वेन निघाताभावः । रत्नानि दधातीति रत्नधाः, क्विप् च (पां ३ । २ । ७६ ।) इति क्विप्, धातुस्वरः, समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । असि, सिपः पित्त्वाद्धातुस्वरः, तिङ्ङतिङ इतिनिघातो न भवति, हिच (पां ३ । २ । ७६ ।) इति प्रतिषेधात् ॥ ३ ॥

१ ४ १ अग्ने देवाँ इहावह सादया योनिषु त्रिषु ।
परिभूष पिब ऋतुना ॥

१ ५ १ ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु ।
तवेद्धि सख्यमस्तृतं ॥

चतुर्थीमृचमाह अग्ने देवानिति । हे अग्ने, देवानिह कर्म्मणि आवह, ततो योनिषु स्थानेषु त्रिषु सवनेषु सादय देवानुपवेशय, ततस्तान् परिभूषालङ्कुरु, ऋतुना सह त्वं सोमं पिब । अग्ने देवानित्ययं पादो गतः । योनिषु, यु मिश्रणे, वह्निश्रीत्यादिना निःप्रत्यय औणादिकः, नित्त्वादाद्युदात्तः । त्रिषु, षट्त्रिचतुर्भ्यो हलादिः (पां ६ । १ । १७९ । ) इति विभक्तेरुदात्तत्वं । परिभूष, भूष अलङ्कारे, तिङ् तिङ इति निघातः । पिब ऋतुना इति शब्दौ गतौ ॥ ४ ॥

पञ्चमीमृचमाह ब्राह्मणादिति । हे इन्द्र, ब्राह्मणात्, ब्राह्मणाच्छंसिसम्बन्धात्, राधसो धनभूतात् पात्रात् सोमं पिब, किं कृत्वा ऋतून् ऋतुदेवान् अनुसृत्य ऋतवोऽपि पिबन्त्वित्यर्थः । हि यस्मात्तवेत् तवैव सख्यं ऋतूनामविच्छिन्नं तस्मादृतुभिः सह पानं युक्तं । ब्राह्मणात्, ब्रह्मशब्देनात्र ब्रह्मवर्गे द्वितीयो ब्राह्मणाच्छंसी कथ्यते, स च पुंलिङ्गे शेषनिघातेनानुदात्तादिस्तस्य सम्बन्धी उत्तरश्चमसः, स च तस्यैवावयववन्नियत इत्यवयवविवक्षायां, अनुदात्तादेरञ् ( पां ४ । २ । ४४ । ) इति अञ्, तेन ञित्त्वादाद्युदात्तश्चमसपरोऽत्र ब्राह्मणशब्दः । राधसः, सर्वधातुभ्योऽसुन्नित्यसुन्, नित्त्वादाद्युदात्तः । पिब, पादादित्वादाद्युदात्तत्वं, द्व्यचोऽतस्तिङः ( पां ६ । ३ । १३५ । ) इति दीर्घत्वं । ऋतूँरन्वित्यत्र, दीर्घादटिसमानपादे ( पां ८ । ३ । ९ । ) इति नकारस्य रुत्वं, अत्रानुनासिकः पूर्वस्य तु वा ( पां ८ । ३ । २ । ) इत्युकारस्य सानुनासिकत्वं । तव, युष्मदस्मद्भ्यां ङसोऽश् ( पां ७ । १ । २७ । ) इत्यश्, शित्त्वात् सर्वादेशः, तवममौ ङसि ( पां ७ । २ । ९६ । ) इति तवादेशः, युष्मदस्मदोर्ङसि ( पां ६ । १ । २११ । ) इत्याद्युदात्तत्वं सख्यं, सख्युः कर्म्म सख्यं, सख्युर्यः ( पां ५ । १ । १२६ । ) इति यः, यस्येति च ( पां ६ । ४ । १४८ । ) इतीकारलोपः, प्रत्ययस्वरः । अस्तृतं, स्तृणोतेर्हिंसार्थस्य क्तः, नञ्समासः, अव्ययपूर्वपदप्रकृतिस्वरत्वं ॥ ५ ॥

। ६ । युवं दक्षं धृतव्रत मित्रावरुण दूळभं ।
ऋतुना यज्ञमाशाथे ॥ २८ ॥

षष्ठीमृचमाह युवं दक्षमिति। हे धृतव्रत स्वीकृतकर्म्माणौ, मित्रावरुण हे मित्रावरुणनामकौ देवौ, युवं उभौ युवां ऋतुना सह अस्मदीयं यज्ञमाशाथे व्याप्नुथः। कीदृशं यज्ञं, दक्षं प्रवृद्धं। दूळभं दुर्दहं, शत्रुभिर्दग्धुं विनाशयितुमशक्यमित्यर्थः। युवं युवां, प्रथमाद्विवचनं औ, ङेप्रथमयोरम् ( पां ७। १। २८। ) इत्यमादेशः, युवावौ द्विवचने ( पां ७। २। ९२। ) इति मपर्य्यन्तस्य युवादेशः, शेषे लोपः ( पां ७। २। ९०। ) इति टिलोपोऽन्त्यलोपो वा, अमिपूर्वत्वं, भाषायामेव ह्यात्वं, टिलोपपक्षे उदात्तनिवृत्तिस्वरेण अम उदात्तत्वं, अन्त्यलोपपक्षे तु एकादेश उदात्तेनोदात्त इत्येकादेश उदात्तः। दक्षं, दक्ष वृद्धौ, दक्षन्त्यनेनेति करणे घञ्, एवं हि पुंलिङ्गत्वनियमः, अनस्य नियम इति वार्त्तिकेन नपुंसकत्वं। धृतव्रत, मित्रावरुण। धृतानि व्रतानि याभ्यां तौ, मित्रश्च वरुणश्च मित्रावरुणौ, उभयत्र सुपांसुलुगित्यादिना विभक्तेराकारः, मित्रशब्दस्य, देवताद्वन्द्वे च ( पां ६। ३। २६। ) इत्यानङादेशः, प्रथमस्यामन्त्रितनिघातः, द्वितीयस्य पादादित्वादाद्युदात्तत्वं, संहितायां छान्दसं ळत्वं। दूळभं दुर्दहं, दह भस्मीकरणे, दुःखेन दह्यते इति दुर्दहं, ईषद्दुः सु षु कृच्छ्रा ( पां ३। ३। १२६। ) इत्यादिना दुरित्युपपदे दहेः खल्, व्यत्ययो बहुलं ( पां ७। १। ८५। ) इति रेफस्य लोपः, उकारस्य ऊकारो, दकारस्य लकारो, हकारस्य च भकारः, लिति ( पां ६। १। १९३। ) इति प्रत्ययात् पूर्वमुदात्तं, कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। आशाथे, अशू व्याप्तौ, छन्दसि लुङ्लङ्लिटः ( पां ३। ४। ६। ) इति वर्त्तमाने लिट्, मध्यमपुरुषद्विवचनाथां, टेरेत्वं, अत आदेः ( पां ७। ४। ७०। ) इत्यभ्यासस्य दीर्घः, अश्नोतेश्च ( पां ७। ४। ७२। ) इति प्राप्तो नुडागमः, अनित्यमागमशासनमिति परिभाषया निवर्त्तते ॥ ६ ॥ इति प्रथमस्य प्रथमे अष्टाविंशो वर्गः ॥ २८ ॥

। ७ । द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे ।
यज्ञेषु देवमीळते ॥

सूक्ते सप्तमीमृचमाह द्रविणोदा इति। अध्वरे अग्निष्टोमे प्रकृतिरूपे, यज्ञेषु विकृतिरूपेषु उक्थ्यादिषु देवमभिमीळते ऋत्विजः स्तुवन्ति। कीदृशा ऋत्विजः, द्रविणसो धनार्थिनः, ग्रावहस्तासः, अभिषवसाधनपाषाणधारिणः। कीदृशं देवं, द्रविणोदाः धनप्रदं। यद्वा धनप्रदोऽग्निः, सोमं पिबत्विति शेषः। तमेतं मन्त्रं यास्क एवं निर्वक्ति, द्रविणोदाः कस्मात् धनं द्रविणमुच्यते, यदेनदभिद्रवन्ति, बलं वा द्रविणं, यदेनेनाभिद्रवन्ति, तस्य दाता द्रविणोदाः, तस्यैषा भवति द्रविणोदा द्रविणस इत्यादि। सोऽयं यास्कोक्तो निर्वचनप्रपञ्चस्तस्मिन्नेव ग्रन्थेऽवगन्तव्यः। द्रविणोदाः, द्रुदक्षिभ्यामिनन्निति द्रुधातोरिनन् प्रत्यय औणादिकः, नित्त्वादाद्युदात्तो द्रविणशब्दस्तद्ददातीति द्रविणोदाः, क्विप् च (पां ३।२।७६।) इति क्विप्, पूर्वपदस्य सकारोपजनश्छान्दसः, सत्वाभावश्छान्दसः, कृदुत्तरपदप्रकृतिस्वरत्वं। देवविशेषणत्वेनैकवाक्यतापक्षे द्वितीयायाः सु आदेशः। अथवा द्रविणमात्मन इच्छन्ति, द्रविणस्यति, सुप आत्मनः क्यच् (पां ३।१।८।) इति क्यच्, सर्वप्रातिपदिकेभ्यो लालसायां सुगवक्तव्य इति वार्त्तिकेन क्यचि परतः सुगागमः, द्रविणस्यतेः सम्पदादित्वाद्भावे क्विप्, अतो लोपः (पां ६।४।४८।) इत्यकारलोपः, क्वौलुप्तं न स्थानिवदिति परिभाषया स्थानिवत्त्वप्रतिषेधाद्यलोपः, एवं द्रविणस्शब्दो धनेच्छावचनः, द्रविणेच्छां दस्यति यद्यद्धनप्रदानेनोपक्षयतीत्यर्थः, दसु उपक्षये इत्यस्मादन्तर्भावितण्यर्थात्, क्विप्चेतिक्विप्, एवं द्रविणोदस्शब्दः सकारान्तो भवति, तथाच द्रविणोदसः प्रवादा भवन्तीति नैरुक्तव्यवहार उपपद्यते। अतो द्रविणोदस्शब्दो भिन्नवाक्यत्वे स्वार्थे प्रथमा, एकवाक्यत्वे तु व्यत्ययेन द्वितीयार्था भवति। द्रविणस इत्यत्रापि वाक्यभेदपक्षे द्रविणसः सोमस्येत्यर्थः, सकारोपजनश्छान्दसः, आद्युदात्तत्वन्तु नियमेन स्थितं, ऋत्विग्विशेषणत्वेनैकवाक्यत्वपक्षे तु अजन्तात् क्विप्, अतो लोपादिपूर्ववत्, अत्र तु पक्षे क्यचश्चित्त्वेनान्तोदात्तत्वे प्राप्ते व्यत्ययेनाद्युदात्तत्वं। ग्रावयुक्ता हस्ता येषां ते ग्रावहस्तासः, आज्जसेरसुक् (पां ७।१।५०।) इत्यसुक्, ग्रावशब्दो वृषादित्वादाद्युदात्तः,

। ८ । द्रविणोदा ददातु नो वसूनि यानि शृण्विरे ।
देवेषु ता वनामहे ॥
। ९ । द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत ।
नेष्ट्रादृतुभिरिष्यत ॥

बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अध्वरे, न विद्यते ध्वरो हिंसा यस्मिन्, नञ्सुभ्यां (पां ६ । २ । १७२) इत्युत्तरपदान्तोदात्तत्वं । ईळते, अनुदात्तेत्त्वादात्मनेपदं, अदिप्रभृतिभ्यः शपः (पां २ । ४ । ७२ ।) इति शपो लुक्, झोऽन्तः (पां ७ । १ । ३ ।) इति झस्यान्तादेशः ॥ ७ ॥

अष्टमीमृचमाह द्रविणोदा ददात्विति । द्रविणोदा देवो नोऽस्मभ्यं वसूनि धनानि ददातु, यानि धनानि शृण्विरे हविष्प्रयुक्तत्वेन श्रूयन्ते, तानि सर्वाणि धनानि देवेषु निमित्तभूतेषु वनामहे सम्भजामः, धनैर्देवान् यष्टुं तानि स्वीकुर्म इत्यर्थः । द्रविणोदा इति गतं । वसूनि, शृ स्तृ स्निहीत्यादिना उः प्रत्यय औणादिकः, निदित्यनुवृत्तेराद्युदात्तः । शृण्विरे, श्रु श्रवणे, छन्दसि लुङ्लङ्लिटः (पां ३ । ४ । ६ ।) इति वर्त्तमाने लिटो झ, लिटस्तझयोरेशिरेच् (पां ३ । ४ । ८१ ।) इति लिटो झस्य इरेच्, छन्दस्युभयथा (पां ३ । ४ । ११७ ।) इति सार्वधातुकत्वे व्यत्ययेन श्नुः, तत्सन्नियोगेन शृभावश्च, उवङि प्राप्ते, हुश्नुवोः सार्वधातुके (पां ६ । ४ । ८७ ।) इति यणादेशः, चितः (पां ६ । १ । १६३ ।) इत्यन्तोदात्तत्वं, यद्वृत्तान्नित्यं (पां ८ । १ । ६६ ।) इति निघातप्रतिषेधः । ता तानि, शेश्छन्दसि बहुलं (पां ६ । १ । ७० ।) इति शेर्लोपः, नलोपः प्रातिपदिकान्तस्य (पां ८ । २ । ७ ।) इति नलोपः । वनामहे, वन षण सम्भक्तौ, व्यत्ययेनात्मनेपदं ॥ ८ ॥

नवमीमृचमाह द्रविणोदाः पिपीषतीति । द्रविणोदा देव ऋतुभिः सह नेष्ट्रात् नेष्टृसम्बन्धिपात्रात् पिपीषति सोमं पातुमिच्छति, ततो हे ऋत्विजः, इष्यत होमस्थाने गच्छत, गत्वा च जुहोत, होमं कुरुत, हुत्वा प्रतिष्ठत च, होमस्थानात् स्थानान्तरं प्रति प्रस्थानमपि कुरुत । द्रविणोदा इति गतं । पिपीषति, पा पाने, पातुमिच्छतीति सन्, छान्दस ईकारः, तिङ्ङतिङः (पां ८ । १ । २८ ।) इति निघातः । जुहोत, लोट्, मध्यमपुरुषबहुवचनं, तस्य लङ्वद्भावात् तादेशः, तस्य, तप-

१ १० १ यत्वा तुरीयमृतुभिर्द्रविणोदो यजामहे १
अध स्मा नो ददिर्भव ११

तप्तनप्तनथनाश्च ( पां ७।१।४५।) इति तबादेशः, तस्य पित्त्वाद्गुणः, अभ्यस्तानामादिः ( पां ६।१।१८९।) इत्यनुवृत्तौ, अनुदात्ते च ( पां ६।१।१९०।) इत्यनुदात्तत्वे प्राप्ते, भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति ( पां ६।१।१९१।) इत्योकार उदात्तः। तिष्ठत, ष्ठा गतिनिवृत्तौ, लोण्मध्यमबहुवचनस्य थस्य तस्थस्थमिपां तान्तन्तामः (पां ३।४।१०१।) इति तादेशः, शपि, पा घ्रा ध्मा स्था म्ना दाण् (पां ७।३।७८।) इत्यादिना तिष्ठादेशः, समवप्रविभ्यः स्थः ( पां १।३।२२।) इत्यात्मनेपदं, तत्रानुवृत्तस्य निर्दिश्यमानस्यानन्तर्य्यार्थत्वात्, अत्र चशब्देन व्यवधानात्, तेप्रागधातोः ( पां १।४।८०।) इत्युपसर्गत्वेन प्राक्प्रयोक्तव्यस्यापि प्रशब्दस्य, व्यवहिताश्च (पां १।४।८२।) इति छन्दसि व्यवहितप्रयोगः, अत्र चशब्दो जुहोतेति पूर्वेण सह समुच्चयार्थो न पुनरिष्यतेत्युत्तरेण, तेनाप्रथमत्वात्, चवायोगे प्रथमा ( पां ८।१।५९।) इति निषेधाभावात्, तिङ्ङतिङ इति निघातः। नेष्ठात्, पोत्रादृतुं पुनीतनेत्यत्र पोत्रशब्दे यदुक्तं तदत्र द्रष्टव्यं। इय्यत, इण्गतौ, लोण्मध्यमबहुवचनं ॥ ९ ॥

दशमीमृचमाह यत्त्वा तुरीयमिति। हे द्रविणोदो देव यस्मात् कारणात्, ऋतुभिः सह त्वा तुरीयं चतुर्थं त्वां यजामहे। अधेत्ययं निपातस्तच्छब्दार्थस्तस्मात् कारणान्नोऽस्मभ्यं ददिर्धनस्य दाता भव स्म अवश्यम्भव। तुरीयं, चतुर्णां पूरणं, चतुरश्छयतावाद्यक्षरलोपश्चेति वार्त्तिकेन छः, प्रत्ययस्वरेणोदात्तात् प्रागेव, आयनेयीनीयियः ( पां ७।१।२।) इति ईयादेशः, आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति वचनात्, कृते आदेशे प्रत्ययस्वरेण ईकार उदात्तः। द्रविणोदः उक्तं, पादादित्वादामन्त्रिताद्युदात्तत्वं। यजामहे, अत्र शपः पित्त्वेन, तिङश्च लसार्वधातुस्वरेण धातुकस्वर एव, पूर्वस्यामन्त्रितस्याप्यविद्यमानवत्त्वात्, यद्वृत्तयोगान्न निघातः, व्यवहितयोगे पि हि स निषेध इत्युक्तं। अध अतः, छान्दसो धकारः। स्म, चादिरनुदात्तः, संहितायां, निपातस्य च ( पां ६।३।१३६।) इति दीर्घः। ददिः, डुदाञ् दाने, आदृगमहनजनः किकिनौ लिट्च

१ १ १ १ अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता।
ऋतुना यज्ञवाहसा ॥

(पां ३।२।१७१।) इति किः प्रत्ययः, लिड्वद्भावाद्द्विर्वचनादिः, आतो लोप इटि च (पां ६।४।६४।) इत्याकारलोपः, प्रत्ययस्वरः ॥ १० ॥

एकादशीमृचमाह अश्विना पिबतमिति। हे अश्विना अश्विनौ, मधु माधुर्य्योपेतं सोमं पिबतं। कीदृशौ दीद्यग्नी द्योतमानाहवनीयाद्यग्नियुक्तौ। शुचिव्रता, शुद्धकर्म्माणौ। ऋतुना ऋतुदेवतया सह यज्ञवाहसा यज्ञस्य निर्वाहकौ। अश्विना, सम्बोधनद्विवचनस्य, सुपांसुलुक् (पां ७।१।३९।) इत्यादिना आकारः, आमन्त्रिताद्युदात्तः। पिबतं, शपः पित्त्वादनुदात्तत्वं, तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। मधु फलि पाटि नमि मनि जनां गुक् पटिनाकिधतश्चेत्युः प्रत्यय औणादिकः, निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः। दीद्यग्नी, दिवु क्रीडादौ, अन्येभ्योऽपि दृश्यन्ते (पां ३।२।७५।) इति क्विप्, वेरपृक्तलोपाद्वलिलोपो बलीयानितिपरिभाषया प्रथमवकारस्य लोपः, प्रथमं प्रत्ययलोपे हि, वर्णाश्रयविधौ प्रत्ययलक्षणं नास्तीतिपरिभाषया निषेधाद्वलिलोपो न स्यात्, छान्दसं द्विर्वचनं, तुजादीनां दीर्घोऽभ्यासस्य (पां ६।१।७।) इति तुजादित्वादभ्यासस्य दीर्घत्वं, यङ्लुगन्तो वा, सञ्ज्ञापूर्वको विधिरनित्य इति परिभाषयाभ्यासस्य गुणाभावः, दीदिरग्निर्ययोस्तौ दीद्यग्नी, आमन्त्रिताद्युदात्तत्वं, पादादित्वान्न निघातः। शुचिव्रता, शुचि व्रतं ययोस्तौ, सुपांसुलुगित्याकारः, दीद्यग्निशब्दस्य सामान्यवचनत्वेन, नामन्त्रिते समानाधिकरणे (पां ८।१।७३।) इति अविद्यमानवत्त्वप्रतिषेधादाष्टमिकनिघातत्वं, पूर्वस्य पराङ्गवद्भावादैकस्वर्य्यं। यज्ञवाहसा, वह प्रापणे, यज्ञं वहत इति यज्ञवाहसौ, वहिहाधाञ्भ्यश्छन्दसीत्यसुन्प्रत्यय औणादिकः, तत्र हि, गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं वक्तव्यमितिवचनात् सोपपदानामपि भवतीत्युक्तं, निदित्यनुवृत्तेरुपधावृद्धिः, सुपांसुलुगित्यादिना विभक्तेराकारः, आमन्त्रितनिघातः, असामर्थ्यात् पूर्वस्य पराङ्गवद्भावः ॥ ११ ॥

। १२ । गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि ।
देवां देवयते यज ॥२९॥ इति तृतीयोऽनुवाकः ॥

षोडशसूक्तं ।

। १ । आ त्वा वहन्तु हरयो वृषणं सोमपीतये ।
इन्द्र त्वा सूरचक्षसः ॥

द्वादशीमृचमाह गार्हपत्येनेति सन्त्येति । हे सन्त्य फलप्रदाग्निदेव, गार्हपत्येन गृहपतिसम्बन्धिना रूपेण युक्तः सन्, ऋतुना ऋतुदेवेन सह यज्ञनीर्यज्ञनिर्वाहकोऽसि, तस्मात्त्वं देवयते देवविषयकाममनायुक्ताय यजमानाय देवान् यज । गार्हपत्येन, गृहपतिना संयुक्ते ञ्यः (पां ४ । ४ । ९० ।) इति ञ्यः, यस्येति च (पां ६ । ४ । १४८ ।) इतीकारस्य लोपः, ञित्त्वादाद्युदात्तत्वं, गृहपतित्वमित्यर्थे पत्यन्तपुरोहितादिभ्यो यक् (पां ५ । १ । १२८ ।) इति यक्, कित्त्वेनाद्युदात्तत्वं स्यात् । सन्त्य, सनने भवः, षणु दाने, क्तिच्क्तौ च सञ्ज्ञायां (पां ३ । ३ । १७४ ।) इति क्तिच्, नक्तिचि दीर्घश्च (पां ६ । ४ । ३९ ।) इति दीर्घनलोपयोरभावः, भवे छन्दसि (पां ४ । ४ । ११० ।) इति यत्, तत्र साधुः (पां ४ । ४ । ९८ ।) इति वा निघातः । यज्ञं नयतीति यज्ञनीः, सत् सूद्विषद्रुहदुहयुज (पां ३ । २ । ६१ ।) इत्यादिना क्विप्, कृदुत्तरपदप्रकृतिस्वरः । देवयते, देवानात्मन इच्छतीति देवयति, सुप आत्मनः क्यच् (पां ३ । १ । ८ ।) इति क्यच्, तस्मात्, क्यचि च (पां ७ । ४ । ३३ ।) इति ईत्वं न भवति, न छन्दस्यपुत्रस्य (पां ७ । ४ । ३५ ।) इति निषेधात्, अश्वाघस्यात् (पां ७ । ४ । ३७ ।) इत्यात्त्वविधानात्, आत्त्वनिषेधे प्राप्तस्य दीर्घस्याप्येष निषेध इत्युक्तं, शतुरनुमो नद्यजादी (पां ६ । १ । १७३ ।) इति विभक्तेरुदात्तत्वं, अत्र क्यचश्चित्त्वादन्तोदात्तत्वं, शपः पित्त्वादनुदात्तत्वं, शतुस्तु लसार्वधातुकस्वरं शोभयोः क्यचासहैकादेशे, एकादेश उदात्तेनोदात्तः (पां ८ । २ । ५ ।) इत्युदात्तः, तस्मादन्तोदात्तत्वात् परस्या विभक्तेः, शतुरनुमो नद्यजादीत्युदात्तत्वं ॥ १२ ॥ इति प्रथमस्य प्रथमे एकोनत्रिंशो वर्गः ॥ २९ ॥ इति तृतीयोऽनुवाकः ॥ ३ ॥

आ त्वा वहन्त्विति चतुर्थेऽनुवाके नवमं सूक्तं, ऋषिच्छन्दसी पूर्ववदनुवर्तेते, विशेषदेवताभावादिन्द्रो देवता, विनियोगस्तु प्रातः सवने

१२१ इमा धाना घृतस्नुवो हरी इहोपवक्षतः।
इन्द्रं सुखतमे रथे ॥

मैत्रावरुणस्य उन्नीयमाने इदं सूक्तं आत्वा वहन्तु हरय इति। तथाच द्विदैवत्यैश्चरन्तीति खण्डे सूचितं, उन्नीयमानेभ्योऽन्वाहात्वा वहन्त्विति। तथा षोडशीतिशस्त्रे आत्वा वहन्तु हरय इति तिस्रः, तथाच सूचितं, अथ षोडशीतिखण्डे आत्वा वहन्तु हरय इति तिस्रो गायत्र्य इति, तस्मिन् सूक्ते प्रथमामृचमाह आत्वा वहन्त्विति। हे इन्द्र, वृषणं कामानां वर्षितारं त्वां सोमपीतये सोमपानार्थं हरयस्त्वदीया अश्वा आवहन्तु, अस्मिन् कर्म्मण्यानयन्तु। तथाच सूरचक्षसः सूर्य्यसमानप्रकाशयुक्ता ऋत्विजस्त्वां मन्त्रैः प्रकाशयन्त्वितिशेषः, हरन्तीति हरयः, सर्वधातुभ्य इन्निति इन्प्रत्यय औणादिकः, नित्त्वादाद्युदात्तः। वृषणं, कनिन् यु वृषि तक्षीत्यादिना कनिन् प्रत्यय औणादिकः, कित्त्वाल्लघूपधगुणाभावः, वाऽसपूर्वस्य निगम इति विकल्पितमुपधादीर्घत्वं। सोमपीतये, इभिरम इत्यत्रोक्तं। सूरचक्षसः, चक्षिङ् व्यक्तायां वाचि, सर्वधातुभ्योऽसुन्, चक्षिङः ख्याञ् (पा २।४।५४।) इति ख्याञ् न भवति, असनोः प्रतिषेधो वक्तव्य इति निषेधात्। सृ प्रेरणे, सरतीति सूरः, सुसूधाग्रृधिभ्यः क्रन्निति क्रन् प्रत्यय औणादिकः, कित्त्वाद्गुणाभावः, नित्त्वादाद्युदात्तः, सूरवच्चक्षः ख्यानं प्रकाशो येषां, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ १ ॥

द्वितीयामृचमाह इमा धाना इति। हरीशब्दश्च इन्द्ररथस्य वोढारावश्वावित्याचष्टे, तथाच श्रुत्यन्तरं, हर्य्योः स्थातेति, हरिभ्यां त्वेन्द्रो देवतां गमयत्विति च। एतदेवाभिप्रेत्य निघण्टुकार आह हरी इन्द्रस्येति। तादृशौ हरी इमा यागार्थं वेद्यामासादितत्वेन पुरोवर्त्तिनीर्धाना भृष्टयवतण्डुलानुद्दिश्य सुखतमे रथे इन्द्रमुपस्थाप्यास्मिन् कर्म्मण्युपवक्षतः वेदीसमीपे वहतां। कीदृशीर्धानाः, घृतस्नुवः क्षरितघृताः। धानाः, धाराधस्यज्योतिभ्यो न इति दधातेर्नः प्रत्यय औणादिकः, प्रत्ययस्वरः। घृतं स्नवन्तीति घृतस्नुवः, क्विपि तुगभावश्छान्दसः, धातुस्वरः, समासे कृदुत्तरपदप्रकृतिस्वरत्वं, स्नोः संयोगपूर्वत्वेन यणभावादुवङादेशः। हरी, हृञ् हरणे, सर्वधातुभ्य इन्निति इन्प्रत्यय औणादिकः, नित्त्वादाद्युदात्तः, प्रगृह्यत्वात् संहितायां प्रकृतिभावः।

। ३ । इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे ।
इन्द्रं सोमस्य पीतये ॥

। ४ । उप नः सुतमागहि हरिभिरिन्द्र केशिभिः ।
सुते हि त्वा हवामहे ॥

वक्षतः, प्रार्थनायां लिङर्थे लेट्, तस्य प्रथमपुरुषद्विवचनं तस्, लेटोऽडाटौ (पां ३।४।९४।) इत्यडागमः, शपि प्राप्ते, सिब्बहुलं लेटि (पां ३।१।३४।) इति सिप्, ढत्वकुत्वषत्वानि, तिङ्ङतिङः (पां ८।१।२८।) इति निघातः। सुखतमे, गतं ॥ २ ॥

तृतीयामृचमाह इन्द्रं प्रातरिति। प्रातः कर्म्मारम्भप्राप्ते प्रातःसवने इन्द्रं हवामहे आह्वयामः, तथैवाध्वरे सोमयागे प्रयति प्रगच्छति प्रारब्धे वर्त्तमाने सति माध्यन्दिने सवने तमिन्द्रं हवामहे, तथा यज्ञस्य समाप्त्यवसरे तृतीयसवने सोमस्य पीतये सोमपानार्थं तमिन्द्रं हवामहे। प्रातः, स्वरादिष्वन्तोदात्तो निपातितः। हवामहे, ह्वेञो लटि शपि परतः, ह्वः सम्प्रसारणं (पां ६।१।३२।) इत्यनुवृत्तौ, बहुलं छन्दसि (पां ६।१।३४।) इति सम्प्रसारणं, परपूर्वत्वं, गुणावादेशौ। प्रयति, इण् गतौ, लटः शतृ, अदिप्रभृतिभ्यः शपः (पां २।४।७२।) इति शपो लुक्, शतुर्ङित्त्वाद् गुणाभावः, प्रादिसमासः, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति वचनात्, प्रत्ययग्रहणे इति नियमाभावात्, शतुरनुमो नद्यजादी (पां ६।१।१७३।) इति विभक्तेरुदात्तत्वं। अध्वरे, उक्तं, संहितायां, उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (पां ८।२।४।) इति यकारस्य स्वरितत्वं। पीतये, पा पाने, क्तिनि छान्दसमन्तोदात्तत्वं ॥ ३ ॥

चतुर्थीमृचमाह उप नः सुतमागहीति। हे इन्द्र, केशिभिः केशरयुक्तैर्हरिभिरश्वैस्त्वं नोऽस्मदीयं सुतमभिषुतं सोमं प्रति उप समीपे आगहि आगच्छ, सुतेऽभिषुते सोमे निमित्तभूते सति हि यस्मात् कारणात् त्वां हवामहे त्वामाह्वयामस्तस्मादागच्छेति पूर्वत्रान्वयः। गहि, गमेर्लोटः सेर्हिः, शप इत्यनुवृत्तौ, बहुलं छन्दसीति शपो लुक्, इषु गमियमां छः (पां ७।३।७७।) इति छत्वं न भवति, नलुमताङ्गस्य (पां १।१।६३।) इति निषेधात्, अनुदात्तोपदेशे

१ ५ १ सेमं नः* स्तोममागह्युपेदं सवनं सुतं ।
गैारो न तृषितः पिब ॥ ३० ॥
१ ६ १ इमे सोमास इन्दवः सुतासो अधि बर्हिषि ।
तां इन्द्र सहसे पिब ॥

( पां ६ । ४ । ३७ । ) इत्यादिनानुनासिकलोपः तस्य, असिद्धवदत्राभात् ( पां ६ । ४ । २२ । ) इत्यसिद्धत्वात्, अतो हेः ( पां ६ । ४ । १०५ । ) इति हेर्लुङ् न भवति। केशिभिः, क्लिशेरन् लोलोपश्चेति अन्, वलोपश्च, मत्वर्थीय इनिः प्रत्ययः, प्रत्ययस्वरः। हवामहे, ह्वः सम्प्रसारणमित्यनुवृत्तो, बहुलं छन्दसीति सम्प्रसारणं, शपः पित्त्वादनुदात्तत्वं, तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव, तिङ्ङ्तिङ इति न निघातः, हि च ( पां ८ । १ । ३४ । ) इति प्रतिषेधात् ॥ ४ ॥

पञ्चमीमृचमाह सेममिति। हे इन्द्र, स त्वं नोऽस्मदीयस्तोमं प्रति आगहि आगच्छ, आगमने हेतुरुच्यते, उप देवयजनसमीपे सुतमभिषुतसोमयुक्तमिदमिदानीमनुष्ठीयमानं सवनं प्रातःसवनादिरूपं कर्म्म वर्त्तते, तस्माद्गैारो न गैारमृग इव तृषितः सन्निमं सोमं पिब। सः-इममित्यत्र संहितायां, सोऽचि लोपे चेत्पादपूरणं ( पां ६ । १ । १३४ । ) इति सुलोपः । गहि गतं । सवनं, सूयतेऽस्मिन्निति सोम इत्यधिकरणे ल्युट्, लिति ( पां ६ । १ । १९३ । ) इति प्रत्ययात् पूर्वस्योदात्तत्वं, ल्युडन्तात्सप्तम्याः, सुपां सुपो भवन्तीति वक्तव्यमिति वचनाद् द्वितीया, अभिषुतसोमयुक्तमिदं सवनमिति कर्म्मण्येव वा द्वितीया, तदा सुतशब्दात्, अर्श आदित्वादच्। तृषितः, ञि तृषा पिपासायां, निष्ठा ( पां ३ । २ । १०२ । ) इति क्तः, प्रत्ययस्वरेणोदात्तः, यस्यादिट्, आगमा अनुदात्ता इत्यनुदात्तत्वं ॥ ५ ॥ इति प्रथमस्य प्रथमे त्रिंशो वर्गः ॥ ३० ॥

सूक्ते षष्ठीमृचमाह इमे सोमास इति । इन्दुशब्द उन्दी क्लेदन इति धातोरुत्पन्नः, इन्दवः क्लेदनयुक्ता इमे वेद्यामुपस्थिताः सोमासस्तत्त्वात्त्वगताः सोमा बर्हिषि यज्ञे अधि आधिक्येन सुतासः, अभिषुताः,

* सोममिति मं का ।

१७। अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शन्तमः।
अथा सोमं सुतं पिब॥
१८। विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति।
वृत्रहा सोमपीतये॥

हे इन्द्र, सहसे बलार्थं तान् सोमान् पिब। सोमासः, आज्जसेरसुक् (पां ७।१।५०।) इति जसोऽसुगागमः। इन्दवः, उक्तं। सुतासः, पूर्ववदसुक्, संहितायां, प्रकृत्यान्तः पादमव्यपरे (पां ६।१।११५।) इति प्रकृतिभावात् परपूर्वत्वं न भवति। बर्हिषि, बृंहेर्नलोपश्चेति इसप्रत्ययो नलोपश्चाबादिकः, प्रत्ययस्वरः। तां इन्द्रेत्यत्र, दीर्घादटिसमानपादे (पां ८।३।९।) इति रुत्वं, यत्वयलोपौ, अनुनासिकः। सहसे, षह मर्षणे, असुन्नन्तो नित्त्वादाद्युदात्तः॥ ६॥

सप्तमीमृचमाह अयन्त इति। हे इन्द्र, अयमस्माभिः क्रियमाणः स्तोमः स्तोत्रविशेषः, अग्रियः श्रेष्ठः सन्, ते तव हृदिस्पृक् मनस्यङ्गीकृतः, शन्तमः सुखतमोऽस्तु, अथ स्तुतेरनन्तरं सुतमभिषुतं सोमं पिब। अग्रियः, अग्रादित्यनुवृत्तौ, घच्छौ च (पां ४।४।११७।) इति घप्रत्ययः, चित्त्वादन्तोदात्तः। हृदि स्पृशतीति हृदिस्पृक्, स्पृशोऽनुदके क्विन् (पां ३।२।५८।।) इति क्विन्, तत्पुरुषे कृति बहुलं (पां ६।३।१४।) इत्यलुक्. क्विन्प्रत्ययस्य कुः (पां ८।२।६२।) इति शकारस्य कुत्वं, कृदुत्तरपदप्रकृतिस्वरत्वं। शन्तमः, सुखकरद्रव्यवचनोऽत्र शमशब्दः, ततस्तमप्, अत्र सुखप्रकर्षस्य गुणद्वारा गुणनिष्ठद्रव्ये सङ्क्रान्तत्वात्, अद्रव्यप्रकर्ष इति निषेधात्, किमेत्तिङव्यय (पा ५।४।११।) इत्यादिना आम् न भवति, द्रव्यस्य स्वतः प्रकर्षाभावात्, ईदृगर्थ एव हि स निषेधः। अथा सोम, संहितायां, निपातस्य च (पां ६। ३। १३६।) इति दीर्घः॥ ७॥

अष्टमीमृचमाह विश्वमिदिति। वृत्रहा शत्रुघातक इन्द्रः सोमपीतये सोमपानाय, मदाय तत्पानजन्यहर्षाय च विश्वमित् सर्वमपि सुतमभिषुतसोमयुक्तसवनं प्रातः सवनादिरूपं कर्म्म गच्छति। विश्वं, अशूप्रुषिलटीत्यादिना क्वन्, नित्त्वादाद्युदात्तः। सवनं सुतं पूर्ववत्। मदाय, मदी हर्षग्लेपनयोः, मदोऽनुपसर्गे (पां ३।३।६७।) इत्यप्,

१ ९ १ सेमं नः काममापृण गोभिरश्वैः शतक्रतो ।
स्तवाम त्वा स्वाध्यः ॥ ३१ ॥

पित्त्वाद्धातुस्वरः । गच्छति, इषुगमियमां छः ( पां ७ । ३ । ७७ । ) इति छः । वृत्रहा, वृत्रं शत्रुं हतवान्, ब्रह्मभ्रूणवृत्रेषु क्विप् ( पां ३ । २ । ८७ । ) इति क्विप्, इन् हन् पूषार्य्यम्णां शौ ( पां ६ । ४ । १२ । ) इति नियमात् दीर्घत्वं, सौ च ( पां ६ । ४ । १३ । ) इति प्रतिप्रसवाद्भवति, कृदुत्तरपदप्रकृतिस्वरत्वं । सोमपीतये, व्यधिकरणबहुव्रीहिरित्युक्तं, तत्पुरुषो वा, दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वं ॥ ८ ॥

नवमीमृचमाह सेमं नः काममिति । हे शतक्रतो, स त्वं नोऽस्मदीयमिमं कामं काम्यमानं फलं गोभिरश्वैश्च सह आपृण सर्वतः पूरय, वयमपि स्वाध्यः सुष्ठु सर्वतो ध्यानयुक्ताः सन्तस्त्वां स्तवाम । सेमं, संहितायां, सोऽचि लोपे चेत्पादपूरणं ( पां ६ । १ । १३४ । ) इति सुलोपः । कामं, कमेर्घञि, कर्षात्वतो घञोऽन्त उदात्तः ( पां ६ । १ । १५९ । ) इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वं । आपृण, पृण प्रीणने, लोटः सेर्हिः, तुदादिभ्यः शः, तस्य ङित्त्वाद्गुणाभावः, अतो हेः ( पां ६ । ४ । १०५ । ) इति हेर्लुक् । गोभिः, सावेकाचः ( पां ६ । १ । १६८ । ) इति प्राप्तं विभक्तेरुदात्तत्वं, न गोश्वन्साववर्ण ( पां ६ । १ । १८२ । ) इति प्रतिषिध्यते । अश्वैः, क्वन्नन्त इत्युक्तं, असामर्थ्यान्न पराङ्गवद्भावः । स्तवाम, ष्टुञ् स्तुतौ, धात्वादेः षः सः ( पां ६ । १ । ६४ । ) इति षस्य सत्वं, लोडुत्तमबहुवचनस्य, लोटो लङ्वत् ( पां ३ । ४ । ८५ । ) इति लङ्वद्भावात्, नित्यं ङितः ( पां ३ । ४ । ९९ । ) इति सकारलोपः, आडुत्तमस्य पिच्च ( पां ३ । ४ । ९२ । ) इत्याडागमः, पित्त्वञ्च, पित्त्वादनुदात्तत्वं, धातुस्वर एव । स्वाध्यः, ध्यै चिन्तायां, स्वाङोरुपसर्गयोः प्राक् प्रयोगः, अन्येभ्योऽपि दृश्यन्ते ( पां ३ । २ । १७८ । ) इति क्विप्, दृशिग्रहणस्य विध्यन्तरोपसङ्ग्रहणार्थत्वादत्र सम्प्रसारणे सति परपूर्वत्वं, हलः ( पां ६ । ४ । २ । ) इति दीर्घः, जसि, एरनेकाचः ( पां ६ । ४ । ८२ । ) इति यणादेशः, गतिकारकोपपदात् कृत् ( पां ६ । २ । १३९ । ) इत्युत्तरपदप्रकृतिस्वरत्वं, उदात्तयणो हल्पूर्वात् ( पां ६ । १ । १७४ । ) इति जस उदात्तत्वं न भवति, तत्र सर्वनामस्थान इत्यनुवृत्तेः, अतः, उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ( पां ८ ।

सप्तदशसूक्तं।

१ १ १ इन्द्रावरुणयोरहं सम्राजोरव आवृणे।
ता नो मृलात ईदृशे॥

२।४।) इति स्वरितत्वमेव भवति॥ ८॥ इति प्रथमस्य प्रथमे एक-त्रिंशो वर्गः॥ ३१॥

इन्द्रावरुणयोरित्यादिकं नवर्चं सूक्तं, अतएव नवशब्दानुवृत्तावनु-क्रम्यते, इन्द्रावरुणयोरैन्द्रावरुणं युवाकुपादनिवृत्ताविति, अत्र देवता विस्पष्टा, ऋषिच्छन्दसी पूर्ववदनुवर्त्तेते। अयन्तु विशेषः युवा-कुर्हीत्यादिके द्वे ऋचौ पादनिवृन्नामकच्छन्दोयुक्ते, विनियोगस्तु स्मार्त्तो लैङ्गिको वा कश्चिदवगन्तव्यः, तस्मिन् सूक्ते प्रथमामृचमाह इन्द्रा-वरुणयोरिति, अहमनुष्ठाता सम्राजोः समीचीनराज्याधिपतयोः सम्य-ग्दीप्यमानयोर्वा इन्द्रावरुणयोर्देवयोः सम्बन्धि अवो रक्षणं आवृणे सर्वतः प्रार्थये। ता तौ देवौ ईदृशे एवम्विधेऽस्मदीयवरणे निमित्तभूते सति मृडातः, अस्मान् सुखयतः। इन्द्रशब्दो रन्प्रत्ययान्तः, वरुण-शब्द उनन्प्रत्ययान्तः, उभौ नित्त्वादाद्युदात्तौ, समासे, देवताद्वन्द्वे च (पां ६।३।२६।) इति पूर्वपदस्यानङादेशः, उभे युगपदित्यनुवृत्तौ, देवताद्वन्द्वे च (पां ६।२।१४१।) इति युगपदुभयपदप्रकृतिस्व-रत्वं, सम्राजोः राजृ दीप्तौ, सत्सूद्विष (पां ३।२।६१।) इत्यादिना क्विप्, समौ, मोऽनुस्वारः (पां ८।३।२३।) इत्यनुस्वारे प्राप्ते, मोराजिसमः क्वौ (पां ८।३।२५।) इति मकारस्य मकारादेशः, कृदुत्तरपदप्रकृतिस्वरत्वं, कर्तृकर्म्मणोः कृति (पां २।३।६५।) इति कर्त्तरि षष्ठी। अवः, अव रक्षणादिषु, भावेऽसुन्, नित्त्वादाद्युदात्तः। ता, सुपांसुलुक् (पां ७।१।३९।) इत्यादिना द्विवचनस्य डादेशः, टिलोपः, विभक्त्युदात्तनिवृत्तिस्वरः। मृडातः, मृड सुखने, प्रार्थनायां, लिङर्थे लेट् (पां ३।४।७।) इति लिङर्थे लेट्, द्विवचनं तस्, लेटोऽडाटौ (पां ६।४।९४।) इत्यडागमः, तुदादिभ्यः शः, ङित्वा-ल्लघूपधगुणाभावः। ईदृशे, त्यदादिषुदृशोऽनालोचनेकञ्च (पां ३।२।६०।) इतीदम्शब्द उपपदे दृशेः कञ्, उपपदसमासे इ इत्यस्या-द्युदात्तत्वं, उपपदसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते।

। २ । गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः । धर्तारा चर्षणीनां ॥

इदं किमोरीश्की (पां ६ । ३ । ९० ।) इति इदम ईशादेशः, शित्वात्सर्वादेशः, कञः कित्त्वाद्गुणाभावः, ञित्त्वादाद्युदात्तः ॥ १ ॥

द्वितीयामृचमाह गन्तारा हीति। हे इन्द्रावरुणौ, अवसे, अवितुमनुष्ठानार्थं रक्षितुं मावतो मद्विधस्य विप्रस्य ब्राह्मणस्यर्त्विजो हवमाह्वानं गन्तारा स्थो हि, प्राप्तिशीलौ भवथः खलु। कीदृशौ, चर्षणीनां मनुष्याणां धर्तारा, योगक्षेमसम्पादनेन धारयितारौ। गन्तारा, गमेस्ताच्छील्ये तृन्, द्विवचनस्य, सुपांसुलुक्, (पां ७ । १ । ३९ ।) इत्यादिना आकारादेशः, ऋदृशोऽङि गुणः (पां ७ । ४ । १६ ।) इति गुणः, अप्तृन्तृच् (पां ६ । ४ । ११ ।) इत्यादिनोपधादीर्घत्वं, तृनो नित्त्वादाद्युदात्तत्वं। स्थः, अस भुवि, लट्, मध्यमपुरुषद्विवचनं थस्, अदिप्रभृतिभ्यः शपः (पां २ । ४ । ७२ ।) इति शपो लुक्, हि च (पां ८ । १ । ३४ ।) इति निघातप्रतिषेधः, अवसे, अव रक्षणे, तुमर्थेसेसेन (पां ३ । ४ । ९ ।) इत्यसेन्प्रत्ययः, नित्त्वादाद्युदात्तः। हवं, ह्वेञो, बहुलं छन्दसीत्यनेन नैमित्तिके सम्प्रसारणे परपूर्वत्वे च, (ऋदोरप् (पां ३ । ३ । ५७ ।) इत्यप्, गुणावादेशौ, अपः पित्त्वादनुदात्तत्वं, धातुस्वर एव। विप्रस्य, टुवप् बीजतन्तुसन्ताने, अस्य, ऋज्रेन्द्रेत्यादिना निपातितत्वेति, नित्त्वादाद्युदात्तः। मावतः, वतुप्प्रकरणे, युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानमिति वार्त्तिकेन वतुप्, प्रत्ययोत्तरपदयोश्च (पां ७ । २ । ९८ ।) इत्यस्मदो मपर्य्यन्तस्य मादेशः, आ सर्वनाम्नः (पां ६ । ३ । ९१ ।) इति दकारस्याकारः, सवर्णदीर्घः, पित्त्वादाद्युदात्तत्वं, प्रातिपदिकान्तोदात्तत्वेन स एव शिष्यते। धर्तारा, धृञ धारणे, ण्वुल्तृचौ (पां ३ । १ । १३३ ।) इति तृच्, एकाच उपदेशेऽनुदात्तात् (पां ७ । २ । १० ।) इति इट्प्रतिषेधः, गुणो रपरत्वं, अप्तृन्तृच् (पां ६ । ४ । ११ ।) इत्युपधादीर्घः, सुपांसुलुगित्याकारः, तृचश्चित्त्वादन्तोदात्तत्वं। चर्षणीनां, कृषेरादेश्च चः इत्यनिः प्रत्यय औणादिकः, तत्सन्नियोगेन ककारस्य चकारः, प्रत्ययाद्युदात्तत्वं बाधित्वा छान्दसमन्तोदात्तत्वं, अत एव, नामन्यतरस्यां (पां ६ ।

1 3 1 अनुकामं तर्पयेथामिन्द्रावरुण राय आ ।
ता वां नेदिष्ठमीमहे ॥

१ । १७१ । ) इति विभक्तेरुदात्तत्वं, तत्र हि मतुपि योऽस्त्वान्तस्तत उत्तरस्य नाम्न उदात्तत्वमिति व्याख्यातं ॥ २ ॥

तृतीयामृचमाह अनुकाममिति । इन्द्रावरुणा हे इन्द्रावरुणौ, अनुकाममस्मदीयाभिलाषमनु रायो धनस्य प्रदानेन आतर्पयेथां सर्वतोऽस्मांस्तृप्तान् कुरुतं, यदा यदा धनं कामयामहे, तदा तदा प्रयच्छतमित्यर्थः, ता वां तादृशौ युवां । नेदिष्ठं, अतिशयेन सामीप्यं यथा भवति तथा ईमहे याचामहे, कालविलम्बमन्तरेण धनं दातव्यमित्यर्थः । सप्तदशसु याच्ञाकर्म्मसु ईमहे इति पठितं । अनुकामं, कामस्य पश्चादनुकामं, अथ वा कामे अनु अनुकामं, अनुरिह पश्चादर्थे, अथवा वीप्सालक्षणे यथार्थे योग्यतावीप्सापदार्थानतिवृत्तिः सादृश्येति चत्वारो हि यथार्था गृहीताः, अव्ययं विभक्ति ( पां २ । १ । ६ । ) इत्यादिनाव्ययीभावसमासः, अव्ययीभावश्च ( पां १ । १ । ४१ । ) इत्यव्ययसञ्ज्ञायां, अव्ययादाप्सुपः ( पां २ । ४ । ८२ । ) इति प्राप्तस्य लुकोऽपवादः, नाव्ययीभावादतोऽम्त्वपञ्चम्याः ( पां २ । ४ । ८३ । ) इति विभक्तेरमादेशः, समासस्य ( पां ६ । १ । २२३ । ) इत्यन्तोदात्तत्वं । तर्पयेथां, तृपेर्ण्यन्ताल्लोटि, णिचश्च ( पां १ । ३ । ७४ । ) इत्यात्मनेपदं, मध्यमपुरुषद्विवचनमाथाम्, टेरेत्वे, थासेतः ( पां ३ । ४ । ८० । ) इत्यामादेशः, शपि सति, अतो येयः ( पां ७ । २ । ८० । ) इत्यनुवृत्तौ, आतोऽङितः ( पां ७ । २ । ८१ । ) इत्याकारस्य इयादेशः, आद्गुणः ( पां ६ । १ । ८७ । ) इति गुणो यलोपश्च । इन्द्रावरुणा, सुपां सुलुगिति द्विवचनस्याकारः, आमन्त्रिताद्युदात्तत्वं, संहितायामाकारस्य प्लुतत्वं । रायः, ऊडिदंपदाद्यप्पुम् ( पां ६ । १ । १७१ । ) इत्यादिना विभक्तेरुदात्तत्वं, सुपांसुलुगिति विभक्तेराकारः, पदात् परत्वाद्युवामित्यस्य वामादेशोऽनुदात्तः । नेदिष्ठं, अतिशयेनान्तिकं, अतिशायने तमबिष्ठनौ ( पां ५ । ३ । ५५ । ) इतीष्ठन्प्रत्ययः, अन्तिकबाढयोर्नेदसाधौ ( पां ५ । ३ । ६३ । ) इति नेदादेशः, यस्येति च ( पां ६ । ४ । १४८ । ) इत्यलोपः, इष्ठनो नित्त्वादाद्युदात्तत्वं । ईमहे, ईङ् गतौ, ङित्त्वादात्मनेपदं, बहुलं छन्दसीति श्यनो लुक्, निघातः ॥ ३ ॥

। ४ । युवाकु हि शचीनां युवाकु सुमतीनां ।
भूयाम वाजदाव्नां ॥
। ५ । इन्द्रः सहस्रदाव्नां वरुणः शंस्यानां ।
क्रतुर्भवत्युक्थ्यः ॥ ३२ ॥

चतुर्थीमृचमाह युवाकु हीति । यस्मात् कारणाच्छचीनामस्मदीयकर्म्मणां सम्बन्धि सोमरूपं हविर्युवाकु, वसतीवर्य्येकधनात्मकैरुदकैः पयःसक्त्वादिद्रव्यान्तरैश्च मिश्रितं, तथा सुमतीनां शोभनबुद्धियुक्तानामृत्विजां स्तोत्ररूपं वचनमपि युवाकु, नानाविधैः स्तुत्यगुणैर्मिश्रितं, तस्मात् कारणात्, हे इन्द्रावरुणौ, तथाविधं हविः स्वीकुर्वतोर्युवयोः प्रसादादहयं वाजदाव्नां वाजदानां अन्नप्रदानां पुरुषाणां मध्ये मुख्या भूयाम भवेम । अपः, अप्न इत्यादिषु षड्विंशतिसङ्ख्यकेषु कर्म्मनामसु शची शमीति पठितं । युवाकु, यु मिश्रणे, कटिकुषिभ्यां काकुरित्यत्र बाहुलकाद्धातेरपि काकुः प्रत्ययः, कित्त्वेन गुणाभावादुकारस्योवङादेशः, प्रत्ययस्वरेण मध्योदात्तत्वं, शचीशब्दः केषाञ्चिन्मते, शार्ङ्गरवाद्यञो ङीन् ( पां ४ । १ । ७३ । ) इति शार्ङ्गरवादिर्ङीनन्तो नित्त्वादाद्युदात्त इति, उभे वनस्पत्यादिषु युगपत् ( पां ६ । ४ । १४० । ) इत्यत्र वृत्तिकृतोक्तं । सुमतीनां, विद्यामसुमतीनामित्यत्रोक्तं । भूयाम, प्रार्थनायां लिङ्, उत्तमपुरुषबहुवचनं मस्, नित्यं ङितः ( पां ३ । ४ । ९९ । ) इति सकारलोपः, यासुट् परस्मैपदेषूदात्तो ङिच्च ( पां ३ । ४ । १०३ । ) इत्युदात्तो यासुडागमः, लिङः सलोपोऽनन्त्यस्य ( पां ७ । २ । ७९ । ) इति सकारलोपः, बहुलं छन्दसीति शपो लुक्, सतिशिष्टत्वाद्यामुडुदात्त एव शिष्यते । वाजदाव्नां, वाजं ददतीति वाजदावानः, आतो मनिन् ( पां ३ । २ । ७४ । ) इत्यादिना वनिप्, तस्य पित्त्वाद्धातुस्वर एव शिष्यते, समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते, आमि, अल्लोपोऽनः ( पां ६ । ४ । १३४ । ) इत्यकारलोपः, तस्य, अचः परस्मिन् ( पां १ । १ । ५७ । ) इति स्थानिवद्भावात्, लोपो व्योर्वलि ( पां ६ । १ । ६६ । ) इति वकारलोपो न भवति ॥ ४ ॥

पञ्चमीमृचमाह इन्द्रः सहस्रदाव्नामिति । अयमिन्द्रः सहस्रदाव्नां सहस्रसङ्ख्यकधनप्रदानां मध्ये क्रतुः, धनदानस्य कर्त्ता भवति, प्रभूतं

। ६ । तयोरिद्वसा वयं सनेम नि च धीमहि ।
स्यादुत प्ररेचनं ॥

ददातीत्यर्थः, तथा वरुणः शंस्यानां स्तुत्यानां मध्ये उरुतरः स्तुत्यो भवति, अतिशयेन स्तुत्य इत्यर्थः । वरुणः, उनन्प्रत्ययान्तो नित्त्वादाद्युदात्तः । शंस्यानां, शंसु स्तुतौ, ऋहलोर्ण्यत् ( पां ३ । १ । १२४ । ) इति ण्यत्, तित्स्वरितमिति स्वरितत्वे प्राप्ते, ईड वन्द वृ शंस दुहां ण्यतः (पां ६ । १ । २१४ । ) इत्याद्युदात्तः । क्रतुः, कृञः कतुरिति कतुरौणादिकः, कित्त्वाद्गुणाभावो, यणादेशः, प्रत्ययस्वरेणाद्युदात्तः । उक्थ्यः, उक्थं शस्त्रं तेन स्तुत्यत्वेन तत्र भव उक्थ्यः, भवे छन्दसि ( पां ४ । ४ । ११० । ) इति यत्, यस्येति च ( पां ६ । ४ । १४८ । ) इत्यकारलोपः, अत्र, तित्स्वरितं ( पां ६ । १ । १८५ । ) इत्येतद्बाधित्वा, तीर्थ्याय कूप्याय इत्यादिवत् द्व्यच्त्वात्, यतोऽनावः ( पां ६ । १ । २१३ । ) इति प्राप्तमाद्युदात्तं, सर्वे विधयश्छन्दसि विकल्पन्त इति न क्रियते । ननु यस्येतिलोपात् प्रागेव तित्स्वरितत्वमस्तु, नहि तदा यतोऽनाव इत्येदस्ति द्व्यच्त्वाभावात्, अतएव भूम्याम्यचेत्यादौ स्वरितत्वं दृश्यते । न च परत्वान्नित्यत्वाच्च यस्येतिलोपेन प्रथमतो भाव्यमिति वाच्यं, प्रकृतिप्रत्ययाश्रयाद्बहिरङ्गाद्यस्येतिलोपात् प्रत्ययमात्राश्रयतया अन्तरङ्गत्वेन तित्स्वरितमित्येतस्य प्राबल्यात्, अत ऊर्म्यायेत्यादिवत् उक्थ्य इत्यत्रापि लक्षणत एव स्वरितत्वं भविष्यतीति किं छान्दसेन, यत्र हि लोपमन्तरेणैव द्व्यच्त्वं, तत्र यतोऽनाव इत्येतद्भवति, तथा चेयं ज्ञेयमिति लोपनिबन्धन द्व्यच्त्वप्रदेशेषु तु स्वरितेनैव भवितव्यमिति, एवं तर्हि तीर्थ्याय कूप्यायेत्यादौ पदाद्युदात्तत्वं तदेव छान्दसमस्तु * अथ अत्रतु वार्णादाङ्गं बलीय इत्यन्तरङ्गत्वेऽपि स्वरितं बाधित्वा लोप एव भविष्यति, तर्हि उक्थ ऊर्म्याय सूर्म्यायेत्यादौ च छान्दस्यमस्तु, सर्वथैकत्र छान्दसत्वान्न मुच्यते ॥ ५ ॥ इति प्रथमस्य प्रथमे द्वात्रिंशो वर्गः ॥ ३२ ॥

सूक्ते षष्ठीमृचमाह तयोरिदिति । पूर्वोक्तयोरिन्द्रावरुणयोरेव अवसा रक्षणेन वयमनुष्ठातारः सनेम सम्भजेम धनमिति शेषः, निधीमहि च, प्राप्ते धने यावदपेक्षितं तावद्भुक्त्वा ततोऽवशिष्टं धनं

---

* अर्थतिपाठो नास्ति मं ।

। ७ ॥ इन्द्रावरुण वामहं हुवे चित्राय राधसे ।
अस्मान्त्सु जिग्युषस्कृतं ॥

कश्चिन्निधिरूपेण स्थापयामस्म, उत अपि च प्ररेचनं भुक्तान्निर्हिताच्च प्रकर्षेणाधिकं धनं स्यात् सम्पाद्यतां । अनसा, अत्र रलगे, असुन्प्रत्ययः नित्त्वादाद्युदात्तः । वयं, यूयं हि ष्ठेत्यत्र यदुक्तं तदत्र द्रष्टव्यं । सनेम, आशिषि लिङ्, तस्य मस्, नित्यं ङितः (पां ३ । ४ । ९९ ।) इति तस्य सकारलोपः, किदाशिषि ( पां ३ । ४ । १०४ ।) इति यासुट्, छन्दस्युभयथा ( पां ३ । ४ । ११७ । ) इति सार्वधातुकत्वमप्यस्तीति, लिङः सलोपोऽनन्त्यस्य ( पां ७ । २ । ७९ ।) इति सकारलोपः, अतो येयः ( पां ७ । २ । ८० ।) इति इयादेशः, लोपो व्योर्वलि ( पां ६ । १ । ६६ ।) इति यलोपः, लिङ्याशिष्यङ् ( पां ३ । १ । ८६ ।) इत्यङादेशो, आद्गुणः ( पां ६ । १ । ८७ ।) इति गुणः, पादादित्वान्न निघातः । धीमहि, डुधाञ् धारणपोषणयोः, आशिषि लिङो महिङादेशः, यासुडागमः, तस्य छन्दस्युभयथेति सार्वधातुकार्द्धधातुकसञ्ज्ञे, तत्र सार्वधातुकत्वेन, लिङः सलोपोऽनन्त्यस्येति सकारलोपः, पूर्ववदियादेशः, यलोपः, सार्वधातुकमपित् ( पां १ । २ । ४ ।) इति ङित्त्वं, शप् च, बहुलं छन्दसीति जुहोत्यादेरपि शपो लुक्, आर्द्धधातुकत्वात्, आतो लोप इटि च ( पां ६ । ४ । ६४ ।) इत्याकारलोपः, निघातस्वरः, सनेमेत्यपेक्षया द्वितीयात्वादत्र चवायोगे प्रथमेति न निषेधः स्यात्, अस्तेः प्रार्थनायां लिङ्, तिप्, इतश्च ( पां ३ । ४ । १०० ।) इतीकारलोपः, यासुट् परस्मैपदेषूदात्तो ङिच्च ( पां ३ । ४ । १०३ ।) इति यासुटो ङित्त्वे, अदिप्रभृतिभ्यः शपः ( पां २ । ४ । ७२ ।) इति शपो लुक्, श्नसोरल्लोपः ( पां ६ । ४ । १११ ।) इत्यकारलोपः, पादादित्वान्न निघातः । उत, एवमादीनामन्त इति फिट्सूत्रेणान्तोदात्तः । प्ररेचनं, रिचिर् विरेचने, भावे ल्युट्, युवोरनाकौ ( पां ७ । १ । १ ।) इति योरनादेशः, लिति ( पां ६ । १ । १९३ ।) इति प्रत्ययात् पूर्वस्योदात्तत्वं, प्रादिसमासः कृदुत्तरपदप्रकृतिस्वरत्वं ॥ ६ ॥

सप्तमीमृचमाह इन्द्रावरुण वामहमिति । इन्द्रावरुण हे इन्द्रावरुणौ, वां युवामुभौ अहं हुवे आह्वयामि, किमर्थं चित्राय मणिमुक्तादिरूपेण विविधाय राधसे धनाय, तत्र आहूतौ युवां अस्मा-

१ ८ १ इन्द्रावरुणा नूनु वां सिषासन्तीषु धीष्वा ।
अस्मभ्यं शर्म्म यच्छतं ॥

ननुछात्मन् सुजिग्युषः शत्रुविषये सुष्ठु जययुक्तान् कृतं कुरुतं । इन्द्रा॰ वरुणा, सुपांसुलुगित्यादिना सम्बोधनद्विवचनस्याकारादेशः, देवताद्वन्द्वे च (पां ६ । ३ । २६ ।) इति पूर्वपदस्यानङ्, आमन्त्रिताद्युदात्तत्वं, संहितायां छान्दसं ह्रस्वत्वं । ऊवे, व्ययतेर्लुङ्, उत्तमपुरुषैकवचनं इट्, शप इत्यनुवृत्तौ, बहुलं छन्दसीति शपो लुक्, ह इत्यनुवृत्तौ बहुलं छन्दसीति सम्प्रसारणं, परपूर्वत्वं, अचि श्नुधातु (पां ६ । ४ । ७७ ।) इत्यादिनोवङ्, न च, हुश्नुवोः (पां ६ । ४ । ८७ ।) इत्यादिना यणादेशः, जुहोतेरेव हि प्रतिपदोक्तस्य तत्, नपुनरस्य लाक्षणिकत्वात्, इटः प्रत्ययस्वरेणोदात्तत्वं, पादादित्वान्न निघातः । राधसे, असुन्, नित्त्वादाद्युदात्तत्वं । अस्मान्, शसि, द्वितीयायाश्च (पां ७ । २ । ८७ ।) इत्यात्वं । शसो नः (पां ७ । १ । २९ ।) इति नत्वं, नश्चेति धुडागमः । जिग्युषः, जि जये, लिटः स्थाने, क्वसुश्च (पां ३ । २ । १०७ ।) इति क्वसुः, द्विर्भावः, सन्लिटोर्जेः (पां ७ । ३ । ५७ ।) इति द्वितीयस्य कुत्वं, क्वसोः कित्त्वाद्गुणाभावः, क्रादिनियमप्राप्तस्येटो, वस्वेकाजाद्घसां (पां ७ । २ । ६७ ।) इति नियमेन निवृत्तिः, द्वितीयाबहुवचनं शस्, भसंज्ञायां, वसोः सम्प्रसारणं (पां ६ । ४ । १३१ ।) इति सम्प्रसारणं, परपूर्वत्वं, एरनेकाचः (पां ६ । ४ । ८२ ।) इति यणादेशः, शासिवसिघसीनाञ्च (पां ८ । ३ । ६० ।) इति षत्वं, प्रत्ययस्वरेणाकार उदात्तः । कृतं, डुकृञ् करणे, लोण्मध्यमद्विवचनस्य तस्यादेशस्तमादेशः, शपो बहुलं छन्दसीति लुक्, तिङ्ङतिङः (पां ८ । १ । २८ ।) इति निघातः ॥ ७ ॥

अष्टमीमृचमाह इन्द्रावरुणा नून्विति । इन्द्रावरुणा इन्द्रावरुणौ हे इन्द्रावरुणौ, धीष्वस्मदीयबुद्धिषु वां युवां सिषासन्तीषु सनितुं सम्भक्तुं सम्यक्सेवितुमिच्छन्तीषु तदानीमासमन्तादस्मभ्यं शर्म्म सुखं नूनु अवश्यमेव क्षिप्रं यच्छतं प्रयच्छतं दत्तं । षट्त्रिंशत्सु क्षिप्रनामसु नु मक्षु इति पठितं, तस्य द्विरावृत्तिबलादातिशय्यं लभ्यते । इन्द्रावरुणा, उक्तं । नूनु, ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणां (पां ६ । ३ । १३३ ।) इति पूर्वस्य दीर्घत्वं । सिषासन्तीषु, वन षण सम्भक्तौ, धात्वादेः

। ९ । प्र वामश्नोतु सुष्टुतिरिन्द्रावरुणा यां हुवे ।
यामृधाथे सधस्तुतिं ॥ ३३ ॥

षः सः (पां ६ । १ । ६४ ।) इति षः सः, इच्छायां सन्, द्विर्भावो हलादिशेषः, सन्यतः (पां ७ । ४ । ७९ ।) इतीत्वं, आदेशप्रत्यययोः (पां ८ । ३ । ५९ ।) इति षत्वं, सनीवन्त (पां ७ । २ । ४९ ।) इत्यादिना विकल्पादिडभावः, जनसनखनां सञ्झलोः (पां ६ । ४ । ४२ ।) इति नकारस्याकारः, उपरि लटः शतृ, कर्त्तरि शपि, उगितश्च (पां ४ । १ । ६ ।) इति ङीप्, शप्श्यनोर्नित्यं (पां ७ । १ । ८१ ।) इति नुम्, ङीपः शपश्च पित्त्वाच्छतुश्च लसार्वधातुकत्वेन चानुदात्तत्वं, सनो नित्त्वादाद्युदात्तत्वं तदेव शिष्यते। धीषु, सावेकाचस्तृतीयादिः (पां ६ । १ । १६८ ।) इति विभक्तिरुदात्तत्वं । अस्मभ्यं, अस्मभ्यमप्रतिष्कुत इत्यत्रोक्तं । यच्छतं, दाण् दाने, शपि, पाघ्राध्मास्थाम्नादाण् (पां ७ । ३ । ७८ ।) इत्यादिना यच्छादेशः ॥ ८ ॥

नवमीमृचमाह प्र वामिति । इन्द्रावरुणा हे इन्द्रावरुणौ, यामस्मत्कर्तृकां शोभनस्तुतिं प्रति हुवे युवामुभावाह्वयामि, किञ्च सधस्तुतिं सहस्तुतिं युवयोरुभयोः साहित्येन क्रियमाणा या स्तवक्रिया तया युक्तां यां सुष्टुतिं प्रतिलभ्य ऋधाथे ऋध्नुवाथे युवां वर्द्धाथे, तादृशी सुष्टुतिः शोभनस्तुतिहेतुभूत ऋक्समूहो वामश्नोतु युवां व्याप्नोतु । अश्नोतु, अशू व्याप्तौ, लोटो व्यत्ययेन तिप्, स्वादिभ्यः श्नुः (पां ३ । १ । ७३ ।) इति श्नुः । सुष्टुतिः, न विन्धे अस्य सुष्टुतिमित्यत्रोक्तं । इन्द्रावरुणा, हुवे, इत्युक्ते, । अत्र तु, यद्वृत्तान्नित्यं (पां ८ । १ । ६६ ।) इति यद्वृत्तयोगान्न निघातः। ऋधाथे, ऋधु वृद्धौ, लट्, व्यत्ययेनात्मनेपदं, मध्यमद्विवचने, श्नोर्बहुलं छन्दसीति लुक्, प्रत्ययस्वरेणाकार उदात्तः, यच्छब्दयोगान्न निघातः । सधस्तुतिं, सहस्तुतिर्यस्यां सुष्टुतौ सा सहस्तुतिः, अत्र सुष्टुतिरित्यन्यपदार्थे स्तुतिशब्दस्य स्तूयतेऽनयेति करणसाधनत्वेन ऋक्परत्वे अयं स्तुतिशब्दो भावसाधनतया स्तवनक्रियापरस्तस्मिन् भावसाधनत्वेन क्रियापरोऽयं करणसाधनतया ऋक्पर इति समस्यमानपदार्थादन्यः, सहेत्यत्र हकारस्य व्यत्ययेन धकारः, सहशब्द एवमादित्वादन्तोदात्तः, बहुव्रीहित्वेन पूर्वपदप्रकृतिस्वरत्वं ॥ ९ ॥ इति प्रथमस्य प्रथमे त्रयस्त्रिंशो वर्गः ॥ ३३ ॥

## अष्टादशसूक्तं।

॥ १ ॥ सोमानं स्वरणं कृणुहि ब्रह्मणस्पते।
कक्षीवन्तं य औशिजः ॥

सोमानमित्यादिकं नवर्चं सूक्तं, ऋषिश्छन्दसी पूर्ववत्, देवताविशेषस्त्वेवमनुक्रम्यते सोमानमिति पञ्च ब्राह्मणस्पत्यास्चतुर्थ्यामिन्द्रश्च सोमश्च पञ्चम्यां दक्षिणाचान्याः सादसस्पत्या नाराशंसी वान्त्येति। सूक्तगता आद्याः पञ्चर्चो ब्रह्मणस्पतिदेवताकाः, तासां मध्ये स घा वीर इत्येतस्याश्चतुर्थ्या ऋचो ब्रह्मणस्पतिरिन्द्रश्च सोमश्चेति तिस्रो देवताः, त्वं तमित्येतस्याः पञ्चम्या दक्षिणया सह पूर्वोक्तास्तिस्रो देवताः। षष्ठीमारभ्य तिसृणां सदसस्पतिर्देवता, नराशंसमित्येतस्या नवम्याः सदसस्पतिर्नराशंसो वा विकल्प्यते, विनियोगस्तु पूर्ववत्, तस्मिन् सूक्ते प्रथमामृचमाह सोमानमिति। हे ब्रह्मणस्पते एतन्नामकदेव, सोमानमभिषवस्य कर्त्तारं मामनुष्ठातारं स्वरणं देवेषु प्रकाशवन्तं कृणुहि कुरु, अत्र दृष्टान्तः, कक्षीवन्तमेतन्नामकमृषिं, इवशब्दोऽत्राध्याहर्त्तव्यः, कक्षीवान् यथा देवेषु प्रसिद्धस्तद्वदित्यर्थः, यः कक्षीवान् ऋषिरौशिज उशिजः पुत्रस्तमिवेति पूर्वत्र योजना। कक्षीवतोऽनुष्ठातृषु मुनिषु प्रसिद्धिस्तैत्तिरीयैराम्नायते, एवं वै पर आट्णारः कक्षीवां औशिजो वीतहव्यः, श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वतेति। ऋगन्तरेऽप्यृषित्वकथनेनानुष्ठातृत्वप्रसिद्धिरुच्यते, अहं कक्षीवानृषिरस्मि विप्र इति, तस्मादस्यानुष्ठातारं प्रति दृष्टान्तत्वं युक्तं। सोऽयं मन्त्रो यास्केनैवं व्याख्यातः, सोमानं सोतारं प्रकाशवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्र उशिक्, वष्टेः कान्तिकर्म्मणोऽपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्, तं सोमानं सोतारं मां प्रकाशवन्तं कुरु ब्रह्मणस्पत इति। अस्मिन् मन्त्रे सोमानमिति पदेन ब्रह्मणस्पत इति पदेन सूचितं तात्पर्यं तैत्तिरीया आमनन्ति, सोमानं स्वरणमित्याह सोमपीथमेवावरुन्धे, कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवावरुन्ध इति। सोमानं, सुनोतीति, षुञ् अभिषवे, अन्येभ्योऽपि दृश्यन्ते (पा ३।२।७५।) इति मनिन्, दृशि ग्रहणस्य विध्यन्तरोपसङ्ग्रहार्थत्वात् नित्त्वेऽपि नाद्युदात्तत्वं, किन्तु प्रत्ययस्वर एव, उणादिषु वा सोमानशब्दः। द्रष्टव्यः,

।२। यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः।
स नः सिषक्तु यस्तुरः।

बहुलवचनादौणादिको मनिन्प्रत्ययः। स्वरणं प्रख्यातं, स्वृ शब्दोपतापयोः, कृत्यल्युटो बहुलं (पां ३।३।११३।) इति कर्मणि ल्युट्, लिति (पां ६।१।१९३।) इत्यकार उदात्तः। कृणुहि, कृवि हिंसाकरणयोश्च, इदितो नुम् धातोः (पां ७।१।५८।) इति नुम्, लोटः सिपो हिः, शपि प्राप्ते, धिन्विकृण्व्योर च (पां ३।१।८०।) इत्युः प्रत्ययस्तत्सन्नियोगेन च वकारस्याकारस्तस्य, अतो लोपः (पां ६।४।४८।) इति लोपस्तस्य स्थानिवद्भावान्न पूर्वस्य लघूपधगुणः, हेर्ङित्त्वादुकारस्य न गुणः, उतश्च प्रत्ययाच्छन्दो वा वचनमिति वार्त्तिकेन हेर्लुक्, सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इतिवचनात् हेरेव प्रत्ययस्वरेणोदात्तत्वं, पादादित्वान्न निघातः। ब्रह्मणस्पते, ब्रह्मणः, षष्ठ्याः पतिपुत्र (पां ८।३।५३।) इत्यादिना संहितायां विसर्जनीयस्य सकारः, सुबामन्त्रिते पराङ्गवत्स्वरे (पां २।१।२।) इति पराङ्गवद्भावात् पदद्वयस्यामन्त्रितनिघातः। कक्षीवन्तं, कक्षे भवा कक्ष्या अश्वोदरसम्बन्धिनी रज्जुः, भवे छन्दसि (पां ४।४।११०।) इति यः प्रत्ययः, सास्यास्तीत्यर्थे मतुप्, आसन्दीवदष्ठीवच्चक्रीवत् कक्षीवत् (पां ८।२।१२।) इति ऋषिविशेषनामककक्षीवच्छब्दो निपातितः, छन्दसीरः (पां ८।२।१५।) इति मस्य वत्वं, प्रत्ययस्वरेणादुपदेशो निपातितः, इकार उदात्तः, मतुप्सुपौ पित्त्वादनुदात्तौ। औशिजः, वश कान्तौ, इजिरित्यनुवृत्तौ, वशेः किच्चेति इजिः प्रत्यय औणादिकः, तस्य कित्त्वात्, ग्रहिज्यावयिव्यधि (पां ६।१।१६।) इत्यादिना सम्प्रसारणं, परपूर्वत्वे गुणाभावस्तेन उशिज इति भवति, तस्यापत्यमित्यर्थे प्राग्दीव्यतोऽण् (पां ४।१।८३।) इत्यण्प्रत्ययः आदिवृद्धिः, प्रत्ययस्वरेणान्तोदात्तत्वं॥ १ ॥

द्वितीयामृचमाह यो रेवानिति। यो ब्रह्मणस्पतिः, रेवान् धनवान्, यश्चामीवहा रोगाणां हन्ता, वसुवित्, धनस्य लब्धा, पुष्टिवर्द्धनः पुष्टेर्वर्द्धयिता, यश्च तुरस्त्वरोपेतः शीघ्रफलप्रदः, स ब्रह्मणस्पतिर्नोऽस्मान् सिषक्तु सेवतां, परिगृह्याप्यनुगृह्णात्वित्यर्थः, अत्र सिषक्तुशब्दस्य सेवार्थत्वं यास्क आह, सिषक्तु सचत इति सेवमानस्येति

प्रत्यायकौ शब्दाविति शेषः । रेवान्, रयिरस्यास्तीत्यर्थे, तदस्यास्त्यस्मिन् (पां ५ । २ । ९४ ।) इति मतुप्, रये मतौ बहुलमिति सूत्रवार्त्तिकेन यकारस्य सम्प्रसारणं, परपूर्वत्वं, छन्दसीरः (पां ८ । २ । १५ ।) इति वत्वं, आद्गुणः (पां ६ । १ ८७ ।) इति गुणः । ननु वत्वस्यासिद्धत्वात् बहिरङ्गत्वाच्च प्रागेव गुणे कृते इवर्णाभावान्न वत्वं, नवान्तादिवच्चेत्यादिवद्भावेन इवर्णसम्पादनं वर्णाश्रयविधौ तत्प्रतिषेधादन्यथा खट्वाभिरित्यत्र सवर्णदीर्घस्यान्तवद्भावेनाकारत्वादतो भिस ऐसित्यैसादेशः स्यात् । नच निरवकाशत्वेन वत्वस्यानकाशत्वं अमिवान् वैं दर्भस्तम्बः, उपब्रह्माणि हरिव इत्यादाववकाशलाभात्, सत्यं, अत्र गुणप्रवृत्तेः प्रागिकारात् परो मतुप्, कदाचिदिवर्णात् परस्य मतुपः पश्चादेकारादेशेन इवर्णाभावेऽपि भवति वत्वमिति छन्दसीर इति सूत्रकृता विवक्षितं, अमुनैवाभिप्रायेण हरिव इत्यादिकमुदाहृत्यापि अन्ते वृत्तिकृता आरेवानित्युदाहृतं, ह्रस्वनुड्भ्यामित्यत्ररेशब्दाच्च मतुप उदात्तत्वं वक्तव्यमित्यत्ररेशब्दो रैशब्दस्याप्युपलक्षणं, अत एव हि रेवाँ इद्रेवत इत्यादौ मतुप उदात्तत्वं दृष्टं, अथवा ह्रस्वनुड्भ्यामित्यत्रापि कदाचिद्ध्रस्वात् परस्य मतुप उदात्तत्वमित्येव व्याख्येयं, एवञ्च सम्प्रसारणपरपूर्वत्वयोः कृतयोर्गुणात् प्राक् ह्रस्वात् परो मतुबिति रेवानारेवानित्यादौ सर्वत्रोदात्तत्वं सिध्यति, अयमेव सूत्रकृतोऽभिप्रायो वार्त्तिककृता व्याख्यात इति । अमीवहा, अम रोग इत्येतस्मात् इन्प्रत्ययेन अमीवशब्दो निपातितस्तं हन्तीति, बहुलं छन्दसीति क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वं । वसुवित्, वसुं विन्दतीति वसुवित्, क्विप् च (पां ३ । २ । ७६ ।) इति क्विप्, उत्तरपदप्रकृतिस्वरत्वं । पुष्टिवर्द्धनः, वर्द्धयतेर्नन्द्यादित्वाल्ल्युः, लिति (पां ६ । १ । १९३ ।) इति प्रत्ययात् पूर्वस्योदात्तत्वं, पुष्टेर्वर्द्धन इति कर्म्मणि षष्ठ्याः समासः, कृदुत्तरपदप्रकृतिस्वरत्वं । सिषक्तु, षच समवाये, लोटि, बहुलं छन्दसीति शपः श्लुः, श्लौ (पां ६ । १ । १० ।) इति द्वित्वे हलादिशेषे च, बहुलं छन्दसीत्यभ्यासाकारस्येकारः । तुरः, तुर त्वरणे, इगुपधज्ञाप्रीकिरः कः (पां ३ । १ । १३५ ।) इति कः, प्रत्ययस्वरः ॥ २ ॥

।३। मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य ।
रक्षा णो ब्रह्मणस्पते ॥
।४। स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः ।
सोमो हिनोति मर्त्यं ॥

तृतीयामृचमाह मा नः शंस इति । अररुषो मर्त्यस्योपद्रवं कर्तुमस्मत्समीपं प्राप्तस्य शत्रुरूपस्य मनुष्यस्य धूर्त्तिर्हिंसकः शंसः शंसनमधिक्षेप इत्यर्थः, तादृशो वाग्विशेषो नोऽस्मान् मा प्रणक् मा सम्पृणक्तु, शत्रुणा प्रयुक्तोऽधिक्षेपः कदाचिदस्मान् मा प्राप्नोत्वित्यर्थः, तदर्थं हे ब्रह्मणस्पते, नोऽस्मान् रक्ष पालय । मा, निपातः । शंसनं शंसः, भावे घञ्, ञित्त्वादाद्युदात्तः । अररुषः, अर्त्तेररुसित्यन्तर्भावितण्यर्थात्, ऋ गतावित्यस्मादरुस्, गुणो रपरत्वं, प्रत्ययस्वरे प्राप्ते वृषादित्वादाद्युदात्तः । धूर्त्तिः, धुर्वी हिंसायां, क्तिच्क्तौ च संज्ञायां (पा ३ । ३ । १७४ ।) इति क्तिच्, तितुत्रतथसिसुसरकसेषु च (पा ७ । २ । ९ ।) इति इट्प्रतिषेधः, उपधायाञ्च (पा ७ । १ । १०१ ।) इत्युपधादीर्घत्वं, वलिलोपं बाधित्वा ऊठि प्राप्ते, राल्लोपः (पा ६ । ४ । २१ ।) इति वकारलोपः । प्रणक्, पृची सम्पर्के, लङ्सिप् । इतश्च (पा ३ । ४ । १०० ।) इति इकारलोपः, हल्ङ्यादिलोपः, कुत्वं, रुधादिभ्यः श्नम्, तस्य, व्यत्ययो बहुलं (पा ३ । १ । ८५ ।) इत्यडागमः, यणादेशः, अकारस्यागमानुदात्तत्वं बाधित्वा, व्यत्ययेनोदात्तत्वं, चादिलोपे विभाषा (पा ८ । १ । ६३ ।) इति निघाताभावः । मर्त्यस्य, मृङ् प्राणत्यागे, असिहसिमृग्र इत्यादिनौणादिकस्तन्प्रत्ययः, मर्त्तेषु भव इत्यर्थे, भवे छन्दसि (पा ४ । ४ । ११० ।) इति यत्, यतोऽनावः (पा ६ । १ । २१३ ।) इत्याद्युदात्तत्वं । रक्षा, रक्ष पालने, शपः पित्त्वादनुदात्तत्वं, धातुस्वर एव शिष्यते, पादादित्वान्न निघातः, रक्षा नः, द्व्यचोऽतस्तिङः (पा ६ । ३ । १३५ ।) इति दीर्घः, उपसर्गाद्बहुलमिति बहुलग्रहणादनुपसर्गादपि नसो णत्वं । ब्रह्मणस्पते, षष्ठ्याः पतिपुत्र (पा ८ । ३ । ५३ ।) इति संहितायां विसर्गस्य सकारः, सुबामन्त्रिते पराङ्गवत्स्वरे (पा २ । १ । २ ।) इति पराङ्गवद्भावात् पदद्वयस्यामन्त्रितनिघातः ॥ ३ ॥

चतुर्थीमृचमाह स घा वीर इति । इन्द्रो देवो यं मर्त्यं यजमानं

१ ५ १ त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यं ।
दक्षिणा पात्वंहसः ॥ ३४ ॥
१ ६ १ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यं ।
सनिं मेधामयासिषं ॥

क्षिणोति प्राप्नोति वर्द्धयति वा, तथा ब्रह्मणस्पतिर्देवो क्षिणोति, तथा सोमो क्षिणोति, स घ, स एव यजमानो वीरो वीर्य्ययुक्तः सन् न रिष्यति न विनश्यति । स घ, चादिरनुदात्तः, संहितायां, ऋचितुनुघ मक्षु तङ्कुत्रोरुष्याणां ( पां ६ । ३ । १३३ । ) इति दीर्घः । ब्रह्मणस्पतिरित्युक्तं । क्षिणोति, क्षि गतौ वृद्धौ च, स्वादिभ्यः श्नुः, तिप्, तिपः पित्त्वात् श्नुप्रत्ययस्वर एव शिष्यते ॥ ४ ॥

पञ्चमीमृचमाह त्वं तं ब्रह्मणसात इति । हे ब्रह्मणस्पते, त्वं तं मर्त्यमनुष्ठातारं मनुष्यं अंहसः पापात्, पाहीतिशेषः, तथा सोमः पातु, इन्द्रश्च पातु, दक्षिणादेवता च पातु । दक्ष वृद्धौ, द्रुदक्षिभ्यामिनन्निन्योणादिक इनन्प्रत्ययः, नित्त्वादाद्युदात्तः । अंहसः, नब्विषयस्येत्यादिना फिट्सूत्रेणाद्युदात्तः ॥ ५ ॥ इति प्रथमस्य प्रथमे चतुस्त्रिंशो वर्गः ॥ ३४ ॥

अनुप्रवचनीयचरोर्होमे सदसस्पतिमित्येषा विनियुक्ता, तथा च गृह्ये मेखलामाबध्नीतिखण्डे पञ्चते, आचार्य्यः समन्वारब्धे जुहुयात् सदसस्पतिमद्भुतमिति, तामेतां सूक्ते षष्ठीमृचमाह सदसस्पतिमद्भुतमिति । मेधां लब्धुं सदसस्पतिं एतन्नामकं देवमयासिषं प्राप्तवानस्मि । कीदृशं देवं, अद्भुतमाश्चर्य्यकरं । पुनः कीदृशं इन्द्रस्य प्रियं । सोमपानसहचारित्वात् काम्यं कमनीयं । सनिं धनस्य दातारं । सदसः, षद्लृ विशरणादौ, सर्वधातुभ्योऽसुन्, नित्त्वादाद्युदात्तः । पतिं, पातेर्डतिः, टिलोपः, प्रत्ययस्वरः । प्रियं, इगुपधज्ञाप्रीकिरः कः ( पां ३ । १ । १३५ । ) इति कः, इयङादेशः, प्रत्ययस्वरः । काम्यं, कामयतेः, अचोयत् ( पां ३ । १ । ९७ । ) इति यत्, णेरनिटि ( पां ६ । ४ । ५१ । ) इति णिलोपः, यतोऽनावः ( पां ६ । १ । २१३ । ) इत्याद्युदात्तत्वं । सनिं, षणु दाने, धात्वादेः षः सः ( पां ६ । १ । ६४ । ) इति षस्य सत्वं, अच इरित्यनुवृत्तौ, खनिकषिज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्चेत्यौणा-

१७१ यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन ।
स धीनां योगमिन्वति ॥

१८१ आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरं ।
होत्रा देवेषु गच्छति ॥

दिक्ष ङः प्रत्ययः, प्रत्ययस्वरः । अयासिषं, या प्रापणे, लुङ्मिप्, तस्थस्थमिपां तांतंतामः ( पा ३ । ४ । १०१ । ) इति तस्यामादेशः, यमरमनमातां सक् च (पा ७ । २ । ७३ ।) इति सिच्, इडागमः, धातोः सगागमः, निघातः ॥ ६ ॥

सप्तमीमृचमाह यस्मादृतेनेति । यज्ञोऽयमनुष्ठातव्यो विपश्चितश्च न विदुषोऽपि यजमानस्य यस्मात् सदसस्पतेर्देवादृते न सिध्यति, सोऽयं सदसस्पतिर्देवो धीनां मनोऽनुष्ठानविषयाणामस्मद्बुद्धीनां अनुष्ठेयकर्म्मणां वा योगं सम्बन्धं इन्वति व्याप्नोति, यजमानमनुगृह्य तदीयं यज्ञं निष्पादयतीत्यर्थः । यस्मात्, अन्यारात् ( पा २ । ३ । २९ ।) इत्यादिना ऋतेशब्दयोगात् पञ्चमी, सावेकाचः ( पा ६ । १ । १६८ । ) इति विभक्तेरुदात्तत्वे प्राप्ते, नगोश्वन्साववर्ण ( पा ६ । १ । १८२ । ) इति प्रतिषेधः । सिध्यति, षिधू संराद्धौ, श्यन्, तस्य नित्त्वादाद्युदात्तत्वं, यद्वृत्तान्नित्यं ( पा ८ । १ । ६६ । ) इति निघातप्रतिषेधः । धीनां, सावेकाच इति विभक्तेरुदात्तत्वं । योगं, युजिर् योगे, घञ्, तस्य ञित्त्वादाद्युदात्तत्वं । इन्वति, इवि व्याप्तौ, शप्, इदितो नुम्धातोः ( पा ७ । १ । ५८ । ) इति नुमागमः, निघातः ॥ ७ ॥

अष्टमीमृचमाह आदृध्नोतीति । आदनन्तरमेव हविष्कृतिं हविःसम्पादनयुक्तं यजमानं ऋध्नोति, सदसस्पतिर्देवो वर्द्धयति, हविर्दानानन्तरमेव फलं प्रयच्छतीत्यर्थः, तथाविधफलसिद्ध्यै अध्वरं यजमानेनानुष्ठीयमानं यज्ञं प्राञ्चं प्रकर्षेण गच्छन्तं अविघ्नेन परिसमाप्तियुक्तं कृणोति करोति, होत्रा हूयमाना देवता तुष्टा सती यजमानं प्रख्यापयितुं देवेषु गच्छति । यद्वा होत्रा अस्मदीयस्तुतिरूपा वाक् देवान् परितोषयितुं देवेषु गच्छति । श्लोकाधारेत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु होत्रा गीरिति पठितं । हविष्कृतिं, हविषः कृतिः सम्पादनं यस्य यजमानस्य सोऽयं हविष्कृतिः, बहुव्रीहौ प्रकृत्या पूर्वपदं

१ ९ । नराशंसं सुधृष्टममपश्यं सप्रथस्तमं ।
दिवो न सद्ममखसं ॥ ३५ ॥

( पां ६ । २ । १ । ) इति पूर्वपदप्रकृतिस्वरत्वं । प्राप्तं, अनिगन्तोऽञ्चतावप्रत्यये ( पां ६ । २ । ५२ । ) इति गतेः प्रकृतिस्वरत्वं, पश्चादेकादेशस्वरः । अध्वरं, न विद्यते ध्वरो हिंसा यस्मिन्, नञ्सुभ्यां ( पां ६ । २ । १७२ । ) इत्युत्तरपदान्तोदात्तत्वं । ह्वयतेऽस्यामिति होत्रा देवता, हुयामाश्रुभसिभ्यस्त्रन्नित्यौणादिकस्त्रन्प्रत्ययः ॥ ८ ॥

नवमीमृचमाह नराशंसमिति । नराशंसं एतन्नामकं देवविशेषं, यद्वा अवयवार्थव्युत्पत्त्या सदसस्पतिदेवतापरोऽयं शब्दः । व्युत्पत्तिञ्च यास्को दर्शयति, नराशंसो यज्ञ इति, कात्थक्यः नरा अस्मिन्नासीनाः शंसन्ति अग्निरिति, शाकपूणिः नरैः प्रशस्यो भवतीति । अत्राग्निवत् सदसस्पतेरपि नरैः शस्यमानत्वान्नराशंसत्वं, एतमेवाभिप्रायं हृदि निधाय ब्राह्मणमेवमाम्नायते, प्रजा वै नरो वाक्शंस इति, अतो मनुष्यैः शस्यमानो यः सदसस्पतिर्यो वा नराशंसको देवस्तमपश्यं शास्त्रदृष्ट्या दृष्टवानस्मि । कीदृशं सुधृष्टमं, अत्याधिक्येन धार्ष्ट्ययुक्तं । सप्रथस्तमं, अतिशयेन प्रख्यातं । सद्ममखसं, प्राप्ततेजस्कं । तत्र दृष्टान्तः, दिवो न द्युलोकानिव, आदित्यचन्द्रादिभिरधिष्ठिता द्युलोकविशेषा यथा तेजस्विनस्तद्वदयं नराशंसस्तेजस्वीत्यर्थः । सुधृष्टमं, शोभनं धृष्णोतीति सुधृट्, क्विप्च ( पां ३ । २ । ७६ । ) इति क्विप्, आतिशायिनिकस्तमप्, धकारस्य जश्त्वाभावश्छान्दसः, कृदुत्तरपदप्रकृतिस्वरत्वेन ऋकार उदात्तः । अपश्यं, दृशिर् प्रेक्षणे, पा घ्रा ध्मा ( पां ७ । ३ । ७८ । ) इत्यादिना पश्यादेशः, लुङ्लङ्लृङ्क्ष्वडुदात्तः ( पां ६ । ४ । ७१ । ) इत्यट उदात्तत्वं, पादादित्वादनिघातः । सप्रथस्तमं, प्रथ प्रख्यापने, प्रथनं प्रथः, सर्वधातुभ्योऽसुन् औणादिकः, नित्त्वादाद्युदात्तत्वं, सह प्रथसा वर्त्तत इति, तेन सहेतितुल्ययोगे ( पां २ । २ । २८ । ) इति बहुव्रीहिसमासः, वोपसर्जनस्य ( पां ६ । ३ । ८२ । ) इति सादेशः, पूर्वपदप्रकृतिस्वरत्वे प्राप्ते, परादिश्छन्दसि बहुलं ( पां ६ । २ । १९९ । ) इत्युत्तरपदाद्युदात्तत्वं । दिवः, ऊडिदं ( पां ६ । १ । १७१ । ) इत्यादिना विभक्तेरुदात्तत्वं । सद्ममखसं, सीदतीति सद्म, षद्लृ विशरणादौ, अन्येभ्योऽपि दृश्यते ( पां ३ । २ । ७५ । ) इति मनिन्, नित्त्वादाद्युदात्तः, सप्त-

## ऊनविंशसूक्तं ।

१ १ १ प्रति त्यं चारुमध्वरं गोपीथाय प्रहूयसे ।
मरुद्भिरग्न आगहि ॥
१ २ १ न हि देवो न मर्त्यो महस्तव क्रतुं परः ॥
मरुद्भिरग्न आगहि ॥

महो यस्येति षड्कमीढे हकारस्य व्यत्ययेन खकारः ॥ ९ ॥ इति प्रथमस्य प्रथमे पञ्चत्रिंशो वर्गः ॥ ३५ ॥

प्रति त्यमिति नवर्चं सूक्तं, ऋषिच्छन्दसी पूर्ववत्, देवता अनुक्रम्यते प्रतित्वमाग्निमारुतमिति, कारीरेष्टौ प्रतित्यमित्येषा धाय्या, तथाच, सूत्रितं वर्षकामेष्टिः कारीरी तस्यां प्रति त्यं चारुमध्वरमीळेऽग्निं स्ववसं नमोभिरिति धाय्य इति, तामेतां सूक्तगतां प्रथमामृचमाह प्रति-त्यमिति। त्यच्छब्दः सर्वनामतच्छब्दपर्य्यायः, हे अग्ने, यो यज्ञश्चा-रुत्वैकल्यरहितस्त्यं तथाविधं चारुमध्वरं प्रतिलभ्य गोपीथाय सोमपानाय प्रहूयसे प्रकर्षेण त्वं हूयसे, तस्मादस्मिन्नध्वरे त्वं मरुद्भिः सह देवविशेषैः सह आगह्यागच्छ । सेयमृक् यास्केनैवं व्याख्याता, तं प्रतिचारुमध्वरं सोमपानाय प्रहूयसे, सोऽग्ने मरुद्भिः सहागच्छेति । प्रति, निपात आद्युदात्तः। त्यं, त्यदादीनामः ( पां ७ । २ । १०२ । ) इति च इत्यन्तादेशः, प्रातिपदिकस्वरः । चारुं, दृसनिजनिचरिच-टिभ्यो युण् इति युण्प्रत्यय औणादिकः, अत उपधायाः ( पां ७ । २ । ११६ ।) इति वृद्धिः, नित्त्वादाद्युदात्तः। गोपीथाय, निशीथ गोपीथा-वसथा इति थक्प्रत्ययान्तो निपातितः, निपातस्वरः ॥ १ ॥

द्वितीयामृचमाह न हि देवयिति। हे अग्ने, महो महतस्तव सम्बन्धि-क्रतुं कर्म्मविशेषमुल्लङ्घ्य परो देवो न हि, उत्कृष्टदेवो न भवति खलु, तथा मर्त्यो मनुष्यश्च परो न भवति, ये मनुष्यास्त्वदीयं क्रतुमनुति-ष्ठन्ति, ये च देवास्त्वदीये क्रताविज्यन्ते त एवोत्कृष्टा इत्यर्थः। मरुद्भि-रित्यादि पूर्ववत् । न हि, एवमादीनामन्त इति फिट्सूत्रेणान्तोदात्तः। देवः, पचाद्यजन्तश्चित्त्वादन्तोदात्तः । महः, महतस्तलोपश्छान्दसः, ऊडिदम्पदाद्यप्पुम्रैद्युभ्य इति विभक्तेरुदात्तत्वं । तव, युष्मद-

। ३ । ये महो रजसो विदुर्विश्वे देवासो अद्रुहः ॥
मरुद्भिरग्न आगहि ॥
। ४ । य उग्रा अर्कमानृचुरनाधृष्टास ओजसा ॥
मरुद्भिरग्न आगहि ॥

आदेर्ङसि ( पां ६ । १ । २११ ) इत्याद्युदात्तत्वं । गहि, गम्लृ गतौ, लोटः सेर्हिः, बहुलं छन्दसीति शपो लुक्, अनुदात्तोपदेश ( पां ६ । ४ । ३७ । ) इत्यादिना अनुनासिकलोपस्तस्य, असिद्धवदत्राभात् ( पां ६ । ४ । २२ । ) इति असिद्धत्वात्, अतो हेः ( पां ६ । ४ । १०५ ) इति हेर्लुङ्न भवति, निघातः ॥ २ ॥

तृतीयामृचमाह ये मह इति। हे अग्ने, ये मरुतो महो रजसो महत उदकस्य वर्षणप्रकारं विदुस्तैर्मरुद्भिरित्यन्वयः । कीदृशा मरुतः, विश्वे सर्वे सप्तविधगणोपेताः, सप्तगणा वै मरुत इति श्रुतेः। देवासो द्योतमानाः। अद्रुहः, द्रोहरहिताः, वर्षणेन सर्वभूतोपकारित्वात्, तथाचोपरिष्टादाम्नायते उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिण इति । शाखान्तरेऽपि मन्त्रान्तरस्य ब्राह्मणमेवमाम्नायते मरुतां वृषतयस्थेत्याह, मरुतो वै वृष्ण ईशते इति। रजःशब्दो यास्केन बहुधा व्याख्यातः, रजो रजतो ज्योतीरज उच्यते, उदकं रज उच्यते, लोका रजांस्युच्यन्ते, असृगहनी रजसी उच्येते इति। रजसः, नब्विषयस्यानिसन्तस्येत्याद्युदात्तः। विदुः, विद ज्ञाने, विदो लटो वा ( पां ३ । ४ । ८३ । ) इत्युसादेशः, प्रत्ययस्वरः, यद्वृत्तान्नित्यं ( पां ८ । १ । ६६ । ) इति यद्वृत्तयोगान्निघाताभावः । विश्वे, विशेः क्वन्नन्तस्य नित्त्वादाद्युदात्तत्वं। देवासः, आज्जसेरसुक् ( पां ७ । १ । ५० । ) इत्यसुगागमः, देवशब्दः पचाद्यजन्तश्चित्त्वादन्तोदात्तः । अद्रुहः, सम्पदादित्वाद्भावे क्विपि बहुव्रीहौ, नञ्सुभ्यां (पां ६ । २ । १७२ ।) इत्यन्तोदात्तत्वं, कर्त्तरि वा क्विप्, तत्पक्षे हि अव्ययपूर्वपदप्रकृतिस्वरत्वं स्यात्, नच कृदुत्तरपदप्रकृतिस्वरत्वं, यतो नञ् गतिर्न चकारकमिति ॥ ३ ॥

चतुर्थीमृचमाह य उग्रा इति । ये मरुत उग्रास्तीव्राः सन्त अर्कमुदकं आनृचुरानर्चुरर्चितवन्तः वर्षणेन सम्पादितवन्त इत्यर्थः, तैर्मरुद्भिरित्यन्वयः । कीदृशा मरुतः, ओजसा बलेन अनाधृष्टासः

१ ५ १ ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः ।
मरुद्भिरग्न आगहि ॥ ३६ ॥
१ ६ १ ये नाकस्याधि रोचने दिवि देवास आसते ॥
मरुद्भिरग्न आगहि ॥

अतिरस्कृताः, सर्वेभ्योऽपि प्रबला इत्यर्थः । अर्कशब्दस्योदकवाचित्वं वाजसनेयिन आमनन्ति, आपो वा अर्क इति, तन्निर्वचनञ्च त एवामनन्ति, सोऽर्चन्नचरत्तस्यार्चत आपो जायन्तार्चते वै मे कमभूदिति तदर्कस्यार्कत्वमिति । स जगत्स्रष्टा हिरण्यगर्भ उदकं स्रष्टुमुद्युक्तोऽर्चन्नुदकं सत्यसङ्कल्पमहिमप्रख्यापनेन स्वात्मानं पूजयन्नचरत्, तथा पूजयतो हिरण्यगर्भस्य सकाशादुदकमुत्पन्नं, तदानीमर्चते मेऽन्तः कमभूदित्यवोचत्, तेनोदकस्याप्यर्कनाम निष्पन्नमित्यर्थः । आनृचुः, अर्चतेर्धातोः, अपस्पृध ( पां ६ । १ । ३६ । ) इत्यादिना निपातितः, प्रत्ययस्वरः, यद्वृत्तयोगान्निघातः । अनाधृष्टासः, अव्ययपूर्वपदप्रकृतिस्वरत्वं । ओजसा, उब्जेर्बले बलोपश्चेत्यौणादिकोऽसुन्प्रत्ययः, नित्त्वादाद्युदात्तः ॥ ४ ॥

पञ्चमीमृचमाह ये शुभ्रा इति । ये मरुतः शुभ्रत्वादिगुणोपेतास्तैर्मरुद्भिरित्यन्वयः । कीदृशा मरुतः, शुभ्राः शोभमानाः । घोरवर्पसः, उग्ररूपधराः । सुक्षत्रासः, शोभनधनोपेताः । रिशादसः, हिंसकानां भक्षकाः । मघमित्यादिष्वष्टाविंशतिधननामसु क्षत्रं भग इति पठितं । शुभ्राः, स्फायितञ्चिवञ्चीत्यादिना शुभेरौणादिको रक्प्रत्ययः, प्रत्ययस्वरः । घोरवर्पसः, घोरं वर्पो येषां, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । सुक्षत्रासः, बहुव्रीहौ, नञ्सुभ्यां ( पां ६ । २ । १७२ । ) इत्युत्तरपदान्तोदात्तत्वं, आद्युदात्तं द्व्यच्छन्दसि ( पां ६ । २ । ११९ । ) इत्येष तु न भवति, क्षत्रशब्दस्यान्तोदात्तत्वात् । रिशन्ति हिंसन्तीति रिशास्तानदन्तीति रिशादसः, सर्वधातुभ्योऽसुन्प्रत्ययः, नित्स्वरेणोत्तरपदाद्युदात्तत्वं, कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते ॥ ५ ॥ इति प्रथमस्य प्रथमे षट्त्रिंशो वर्गः ॥ ३६ ॥

सप्ते षष्ठीमृचमाह ये नाकस्येति । ये मरुतो नाकस्याधि, दुःखरहितस्य सूर्यस्योपरि दिवि द्युलोके रोचने दीप्यमाने ये देवासः स्वय-

१७१ य ईङ्खयन्ति पर्वतां तिरः समुद्रमर्णवं ।।
मरुद्भिरग्न आगहि ।।
।। ८ ।। आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा ।
मरुद्भिरग्न आगहि ।।

मपि दीप्यमाना आसते, तैर्मरुद्भिरित्यन्वयः । नाकस्य, कं सुखं तद्यस्मिन्न विद्यतेऽसावक इति बहुव्रीहिं कृत्वा पश्चान्नञ्,न अको नाक इति नञ्तत्पुरुषः, न लोपो नञः ( पां ६ । ३ । ७३ । ) इति नञो लोपो न भवति, नभ्राण्नपात् ( पां ६ । ३ । ७५ । ) इत्यादिना प्रकृतिभावात्, तत्पुरुषेतुल्यार्थतृतीया ( पां ६ । २ । २ । ) इत्यादिनाव्ययपूर्वपदप्रकृतिस्वरत्वेनोदात्तत्वं, प्रथमातत्पुरुषं कृत्वा पश्चाद्बहुव्रीहौ उत्तरपदान्तोदात्तत्वं स्यात् । अधिशब्द उपर्य्यर्थे उपसर्गप्रतिरूपको निघातः । रोचने, रुच दीप्तौ, अनुदात्तेतश्च हलादेः ( पां ३ । २ । १४९ । ) इति युच्, चितः ( पां ६ । १ । १६३ । ) इत्यन्तोदात्तत्वं । दिवि, ऊडिदंपदाद्यप्पुम् ( पां ६ । १ । १७१ । ) इत्यादिना विभक्तेरुदात्तत्वं । देवासः, आज्जसेरसुक् ( पां ७ । १ । ५० । ) इत्यसुक् । आसते, आस उपवेशने, अनुदात्तेत्त्वादात्मनेपदं झ, तस्यान्तादेशः, अदिप्रभृतिभ्यः शपः ( पां २ । ४ । ७२ । ) इति शपो लुक्, अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वं, यद्वृत्तयोगान्ननिघातः ॥ ६ ॥

सप्तमीमृचमाह य ईङ्खयन्तीति । ये मरुतः पर्वतां पर्वतान् मेघान् ईङ्खयन्ति चालयन्ति, तथा अर्णवं उदकयुक्तं समुद्रं तिरस्कुर्वन्तीतिशेषः, निश्चलस्य जलस्य तरङ्गाद्युत्पत्तये चालनं तिरस्कारस्तैर्मरुद्भिरित्यन्वयः । ईङ्खयन्ति, उखउखिवखवखिमखमखीत्यादौ ईखिर्गत्यर्थः, हेतुमति च ( पां ३ । १ । २६ । ) इति णिच्, इदितो नुम् धातोः ( पां ७ । १ । ५८ । ) इति नुम्, णिजन्तधातोः, चितः ( पां ६ । १ । १६३ ।) इत्यन्तोदात्तत्वं, शपः पित्त्वादनुदात्तत्वं, तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । पर्वतान्, पुर्वपर्वमर्वपूरणे, भृ मृ दृशि यजिपर्व्वित्यादीना औणादिकोऽतच्प्रत्ययः, प्रत्ययस्वरः ॥ ७ ॥

अष्टमीमृचमाह आ ये तन्वन्तीति । ये मरुतो रश्मिभिः सूर्य्यकिरणैः सह आतन्वन्ति आप्नुवन्ति आकाशमितिशेषः, किञ्चौजसा

। ९ । अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु ।
मरुद्भिरग्न आगहि ॥ ३७ ॥

॥ इति प्रथमाष्टके प्रथमोऽध्यायः ॥

स्वकीयबलेन समुद्रं तिरस्कुर्वन्ति, तैर्मरुद्भिरित्यन्वयः । तन्वन्ति, तनु विस्तारे, लटो झोऽन्तः, तनादिकृञ्भ्य उः (पां ३ । १ । ७९ ।) इति उः, सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति तिङ एवाद्युदात्तत्वं । समुद्रं, उन्दी क्लेदने, स्फायि तञ्चीत्यादिना रक्प्रत्यय औणादिकः, समासे कृदुत्तरपदप्रकृतिस्वरः ॥ ८ ॥

नवमीमृचमाह अभि त्वेति । हे अग्ने, पूर्वपीतये पूर्वकाले प्रवृत्ताय पानाय त्वा त्वां सोम्यं मधु सोमसम्बन्धिमधुररसं अभिसृजामि सर्वतः सम्पादयामि, अतस्त्वं मरुद्भिः सहागच्छ । अभि, एवमादीनामन्त इति फिट्सूत्रेणान्तोदात्तः । त्वा, त्वामौ द्वितीयायाः ( पां ८ । १ । २३ ।) इति त्वादेशः सर्वानुदात्तः । पूर्वपीतये, पूर्वा चासौ पीतिश्च, पुंवत्कर्मधारय ( पां ६ । ३ । ४२ ।) इत्यादिना पुंवद्भावः । सृजामि, सृज विसर्गे, मिप्, मिपः पित्त्वादनुदात्तत्वं, विकरणस्वरः । सोम्यं, सोममर्हति यः ( पां ४ । ४ । १३७ ।) इति यप्रत्ययः, प्रत्ययस्वरेणान्तोदात्तः । मधु, फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्चेत्यौणादिक उः प्रत्ययः, निदित्यनुवृत्तेराद्युदात्तत्वं । अन्यद्गतं ॥ वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ पुमर्थान् धर्मार्थकाममोक्षानित्यर्थः ॥ ९ ॥ ३७ ॥ इति प्रथमस्य प्रथमे सप्तत्रिंशो वर्गः । इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-श्रीबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताया भाष्ये प्रथमाष्टके प्रथमोऽध्यायः समाप्तिमगमत् ॥

( ॐ तत्सत् । )

# ॐ तत्सत् ॐ

---

## ऋग्वेदद्वितीयाध्यायानुक्रमणिकारम्भः १

अयमष्टावार्भव, मित्रषडैन्द्राग्नं, प्रातर्युजा सैका, षतस आश्विन्य-स्तथा सावित्र्य, आग्नेय्यौ द्वे देवीनामेके, न्द्राणीवरुणान्यग्नायीनां, द्यावापृथिव्यैपार्थिवी, मरुद्भ्योऽतो देवा देवी वा, तीव्राश्चतुर्विंशति, वाय-व्यैन्द्रवायव्यौ मैत्रावरुणमरुत्वतीयवैश्वदेवपौष्णास्तृचाः, शिष्टा आप्यो-न्याध्यर्धाग्नेय्य, अन्त्यः पुर उष्णिक् परानुष्टुप्, तिस्रश्चान्त्या एकविंशी-प्रतिष्ठा, कस्य पञ्चोनाजीगर्त्तिः शुनः शेपः, सकृत्रिमो वैश्वामित्रो देवरातो वारुणं तु त्रैष्टुभमाद्यैकाग्नेय्यौ, सावित्र्यस्तृचो गायत्रो स्यान्त्या भार्गवी, यच्चित्सैकावसिष्वदशाग्नेयं त्वाश्वं समाना, गायत्रेन्त्या देवी त्रिष्टुप्, यत्र ग्रावा नवषडनुष्टुबादि, यच्चिद्ध्यौलूखल्यौ, परे मौसल्यौ च, प्रजापतेर्हरिश्चन्द्रस्यान्त्या चर्म्मप्रशंसा वा, यच्चित्सप्त पांक्तं, मावोद्यधिकाश्वाकं, पादनिचृदश्वत्रिष्टुप्परोष्ट्चावाश्विनौ-षस्यौ, त्वमग्नेषूना, हिरण्यस्तूप आग्नेयं त्रिष्टुबन्त्याष्टमीषोडश्यौ चेन्द्रस्य पञ्चोना । हरिः ॐ ।

## प्रथमाष्टकद्वितीयाध्यायः।

### विंशसूक्तं।

।१। अयं देवाय जन्मने स्तोमो विप्रेभिरासया।
अकारि रत्नधातमः॥

।२। य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी।
शमीभिर्यज्ञमाशत॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्। निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं॥ अथ प्रथमाष्टके द्वितीयोऽध्याय आरभ्यते। तत्रायं देवायेत्यष्टर्चं सूक्तं, अस्य ऋषिच्छन्दसी पूर्ववत्, ऋभुदेवताकत्वमनुक्रम्यते, अयमष्टावार्भवमिति, विनियोगस्तु सूक्तस्य लैङ्गिकः स्मार्त्तो वा द्रष्टव्यः, व्यूढस्य प्रथमे छन्दोमे वैश्वदेवशस्त्रेऽयं देवाय जन्मन इत्यार्भवस्तृचः, अथ छन्दोमा इति खण्डे सूत्रितं, अभित्वा देवसवितः प्रेतां यज्ञस्य शम्भुवा यं देवाय जन्मन इति तृचा इति, तस्मिन् सूक्ते प्रथमामृचमाह अयं देवायेति। ऋभवो हि मनुष्याः सन्तस्तपसा देवत्वं प्राप्तास्ते चात्र सूक्ते देवताः, तत्सङ्घो जायमानवाचिना जन्मशब्देनैकवचनान्तेनात्र निर्द्दिश्यते, जन्मने जायमानाय ऋभुसम्भवरूपाय देवाय तत्प्रीत्यर्थमयं स्तोमः स्तोत्रविशेषो विप्रेभिर्मेधाविभिर्ऋत्विग्भिरासया स्वकीयेनास्येनाकारि निष्पादितः। कीदृशः स्तोमः, रत्नधातमः, अतिशयेन रमणीयमणिमुक्तादिधनप्रदः, स्तोत्रेण तुष्टा ऋभवो धनं प्रयच्छन्तीत्यर्थः। आसया, आस्यशब्दतृतीयैकवचनस्य, सुपांसुलुक् (पा° ७।१।३९।) इत्यादिना याजादेशः, व्यत्ययेन प्रकृतियकारस्य लोपः, चितः (पा° ६।१।१६३।) इत्यन्तोदात्तः। रत्नधातमः, रत्नानि दधातीति रत्नधाः, कृदुत्तरपदप्रकृतिस्वरत्वं॥१॥

द्वितीयामृचमाह य इन्द्रायेति। ये ऋभव, इन्द्राय इन्द्रप्रीत्यर्थं वचोयुजा ताडनादिकं विना वाङ्मात्रेण रथे युज्यमानौ सुशिक्षितौ हरी एतन्नामकावश्वौ मनसा ततक्षुः सम्पादितवन्तः, ऋभूणां सत्यसङ्कल्पत्वात्तत्सङ्कल्पमात्रेणेन्द्रस्याश्वौ सम्पन्नावित्यर्थः, ते ऋभवः शमीभिर्यज्ञं चमसादिनिष्पादनरूपैः कर्म्मभिर्यज्ञमस्मदीयमाशत व्याप्तवन्तः

१ ३ १ तक्षन्नासत्याभ्यां परिज्मानं सुखं रथं ।
तक्षन्धेनुं सबर्दुघां ॥

१ ४ १ युवाना पितरा पुनः सत्यमन्त्रा ऋजूयवः ।
ऋभवो विष्ट्यक्रत ॥

अपः अप्न इत्यादिषु षड्विंशतिसङ्ख्यकेषु कर्मनामसु शमी शिमीति पठितं । वचोयुजा, वचसा युज्यत इत्यर्थे, सत्सूद्विष (पां ३ । २ । ६१ ।) इत्यादिना क्विप्, सुपांसुलुक् (पां ७ । १ । ३९ ।) इत्यादिना विभक्तेराकारः, कृदुत्तरपदप्रकृतिस्वरत्वं । ततक्षुः, तक्षू त्वक्षू तनूकरणे, लिटि झेरुसादेशः, पादादित्वादनिघातः । शमीभिः, शमयन्ति पापानीति शम्यः कर्माणि, औणादिक इन्, कृदिकारादक्तिन इति वार्त्तिकेन ङीष्, वृषादित्वादन्तोदात्तः । आशत, अशू व्याप्तौ, लङो झस्य अदादेशः, स्वादिभ्यः श्नुः, तस्य बहुलं छन्दसीति लुक्, अडागमः, तिङ्ङतिङः (पां ८ । १ । २८ ।) इति निघातः ॥ २ ॥

तृतीयामृचमाह तक्षन्निति । नासत्याभ्यां अश्विदेवप्रीत्यर्थं रथं तक्षन्, ऋभवो देवाः कश्चिद्रथमतक्षन्, तक्षणेन सम्पादितवन्तः । कीदृशं रथं, परिज्मानं परितो गन्तारं । सुखं, उपर्युपवेशने सुखकरं । किञ्च धेनुं काञ्चिद्गां तक्षन्, धातूनामनेकार्थत्वात् तक्षतिरत्र सम्पादनवाची । कीदृशीं धेनुं, सबर्दुघां सबरः क्षीरस्य दोग्ध्रीं । तक्षन्, बहुलं छन्दसीत्यडभावः । नासत्याभ्यां, न विद्यतेऽसत्यं ययोस्तावसत्यौ न असत्यौ नासत्यौ, नभ्राण्नपान्नवेदानासत्यान्नमुचि (पां ६ । ३ । ७५ ।) इत्यादिना नलोपाभावः । परिज्मानं, अजेः परिपूर्वस्य, श्वन्नुक्षन्नित्यादिना मन्प्रत्ययः, अकारलोपः, आद्युदात्तत्वञ्च औणादिकनिपातनात् । सबर्दुघां, सबः पयो दोग्धीति सबर्दुघा, दुहः कप् घश्च (पां ३ । २ । ७० ।) इति कप्, हकारस्य घकारश्च, सबरिति रेफान्तं प्रातिपदिकं क्षीरवाचीति सम्प्रदायविदः, कपः पित्त्वादनुदात्तत्वं, धातुस्वर एव शिष्यते, समासे कृदुत्तरपदप्रकृतिस्वरः ॥ ३ ॥

द्वितीये छन्दोमे वैश्वदेवशस्त्रे युवाना पितरा पुनरित्यार्भवस्तृचः, द्वितीयस्यामिं वो देव इति खण्डे सूत्रितं, मही द्यौः पृथिवी च नो युवाना पितरा पुनरिति तृचाविति, तस्मिंस्तृचे प्रथमां सूक्ते चतुर्थीमृच-

१ ५ १ सं वो मदासो अग्मतेन्द्रेण च मरुत्वता ।
आदित्येभिश्च राजभिः ॥ १ वर्गः ॥

माह युवाना पितरेति । ऋभव एतन्नामका देवाः पितरा पितरा स्वकीयौ मातापितरौ पूर्वं वृद्धावपि पुनर्युवाना तरुणौ अकृत कृतवन्तः । कीदृशा ऋभवः, सत्यमन्त्राः, अवितथमन्त्रसामर्थ्योपेताः, पुरश्चरणाद्यनुष्ठानेन सिद्धमन्त्रत्वाद्यत्फलमुद्दिश्य मन्त्राः प्रयुज्यन्ते तत्फलं तथैव सम्पद्यते, तस्मात्त्वोर्णयोः पित्रोर्युवत्वं सम्पादयितुं समर्था इत्यर्थः । पुनःकीदृशाः, ऋजूयवः ऋजुतामात्मन इच्छन्तः, कुटिलरहिता इत्यर्थः, अत एवैतेषामनुष्ठिता मन्त्राः सिध्यन्ति । पुनरपि कीदृशाः, विष्टी विष्ट्यो व्याप्तियुक्ताः, सर्वेषु कार्येषु एतदीयस्य मन्त्रसामर्थ्यस्याप्रतिघातोऽत्र व्याप्तिरुच्यते । ऋभुशब्दं यास्क एवं निर्वक्ति, ऋभव उरु भान्तीति वर्त्तेन भान्तीति वेति । युवाना, युवन्शब्दो यौतेः कनिन्प्रत्ययान्तो नित्त्वादाद्युदात्तः, सुपांसुलुक् इत्यादिना विभक्तेराकारः । पितरा, पूर्ववदाकारः । सत्यमन्त्राः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । ऋजूयवः, ऋजुशब्दोऽत्र भावपरः ऋजुत्वमात्मन इच्छन्तीति क्यच्, अकृत्सार्वधातुकयोः ( पां ७ । ४ । २५ । ) इति दीर्घः, क्याच्छन्दसि ( पां ३ । २ । १७० । ) इत्युप्रत्ययः, प्रत्ययस्वरः । विष्टी, विष्लृव्याप्तौ, स्त्रियांक्तिन्नाघस-ञ्ज्ञायां ( पां ३ । ३ । १७४ । ) इति क्तिच्, तितुत्रतथसिसुसरकसेषु च ( पां ७ । २ । ९ । ) इति इटप्रतिषेधः, तस्माज्जस ईयाडि-याजीकाराणामुपसङ्ख्यानमिति वार्त्तिकेन ईकारादेशः, न च, अलो ऽन्त्यस्य ( पां १ । १ । ५२ । ) इति सकारस्य भवति, तत आद्गुणेकृते, प्रथमयोः पूर्वसवर्णः ( पां ६ । १ । १०२ । ) इति पूर्वसवर्णदीर्घत्वं बाधित्वा परत्वात्, जसि च ( पां ७ । ३ । १०९ । ) इति ह्रस्वस्य गुणेन भवितव्यमिति चेन्न, सञ्ज्ञापूर्वकस्य विधेरनित्यत्वात् । अकृत, कृञो लुङ् आत्मनेपदं झ, तस्य अदादेशः, मन्त्रेघस ( पां २ । ४ । ८० । इत्यादिना च्लेर्लुक्, यणादेशः, अडागमः, निघातः ॥ ४ ॥

पञ्चमीमृचमाह सं वहति । हे ऋभवो, युष्माकं सम्बन्धिनो मदासो मदहेतवः सोमा इन्द्रेण चादित्येभिरादित्यैश्च सममत सङ्गताः, ऋभूणामिन्द्रादित्यैः सह सोमपानं तृतीयसवनेऽस्ति, अतएवावाहनमिमद आश्वलायनेनैवं पठितं, इन्द्रमादित्यवन्तमृभुमन्तं वाजवन्तं बृहस्पति-

१ ६ १ उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतं १
अकर्त्त चतुरः पुनः ॥

मन्तं विश्वदेव्यावन्तमाहुवे इति । कीदृशेनेन्द्रेण, मरुत्वता मरुद्भिर्युक्तेन, अत एव मन्त्रान्तरमेवमाम्नायते मरुद्भिरिन्द्रसख्यन्ते अस्त्विति । कीदृशैरादित्येभीराजभिर्दीप्यमानैः । मदासः, माद्यन्त्येभिरिति मदाः सोमाः, मदोऽनुपसर्गे ( पां ३ । ३ । ६७ । ) इत्यप्, तस्य पित्त्वादनुदात्तत्वं, धातु स्वर एव शिष्यते, आज्जसेरसुक् ( पां ७ । १ । ५० । ) इति जसोऽसुगागमः । अग्मत, गमेः संपूर्वाल्लुङ्, समोगम्यृच्छि ( पां १ । ३ । २९ । ) इत्यादिनात्मनेपदं झ, तस्य अदादेशः, मन्त्रेघस ( पां २ । ४ । ८० । ) इत्यादिना च्लेर्लुक्, गम हन जन खन घसां ( पां ६ । ४ । ९८ । ) इत्युपधालोपः, व्यवहिताश्च ( पां १ । ४ । ८२ । ) इति समो व्यवहितप्रयोगः, निघातः । मरुत्वता, मरुतोऽस्य सन्तीति मरुत्वान्, तसौ मत्वर्थे ( पां १ । ४ । १९ । ) इति भसञ्ज्ञया पदसञ्ज्ञाया बाधितत्वाज्जश्त्वाभावः, झयः ( पां ८ । २ । १० । ) इति मतुपो वत्वं । आदित्येभिः, बहुलं छन्दसीति भिस ऐसादेशाभावे, बहुवचने झल्येत् ( पां ७ । ३ । १०३ । ) इत्येत्वं । राजभिः, राजन्शब्दस्य कनिन्नन्तत्वेन नित्त्वादाद्युदात्तत्वं ॥ ५ ॥ इति प्रथमस्य द्वितीये प्रथमो वर्गः ॥ १ ॥

सूक्ते षष्ठीमृचमाह उत त्यमिति । उत अपि वा त्वष्टुः, एतन्नामकस्य देवस्य सम्बन्धी तद्यागव्यापारः, नवं नूतनं चमसन्तं सोमधारणाद्यर्थं काष्ठपात्रविशेषं निष्कृतं, निष्पत्तिर्येन सम्पादितमकरोदिति शेषः, तद्व्यापारकुशलस्य तस्य त्वष्टुः शिष्या ऋभवस्तेन निर्म्मितं तमेकं चमसं पुनरपि चतुरोऽकर्त्त, चतुर्धा विभक्तांश्चमसान् कृतवन्तः, एकस्य चतुर्विधकरणत्वरूपोऽयमर्थो मन्त्रान्तरेऽपि विस्पष्टः, एकं चमसं चतुरः कृणोतनेति । नवं, णु स्तुतौ, नूयत इति नवं कर्म्मण्यप्प्रत्ययः, स हि घञोऽपवादत्वात् घञर्थे सर्वत्र भवति, घञ्प्रत्ययश्च, अकर्त्तरि च कारके सञ्ज्ञायां ( पां ३ । ३ । १९ । इति कर्तृव्यतिरिक्ते सर्वत्र कारके भवति । यद्यपि घञ् सञ्ज्ञायामित्युक्तं, तथापि च कारकसञ्ज्ञाव्यभिचारार्थत्वादसञ्ज्ञायामपि भवत्येव, सम्बध्यत इति सम्बन्धः कर्म्मणि घञित्युक्तं । त्वष्टुः, तक्षू त्वक्षू तनूकरणे, औणादिकस्तृन्, ऊदित्त्वात् पक्षे इडभावः, स्कोः संयोगाद्योरन्ते च ( पां ८ । २ । २९ । ) इति ककार-

१७१ ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते ।
एकमेकं सुशस्तिभिः ॥

लोपः । निष्कृतं, छन्दोनिबर्हणत्वात् कर्म्मणि क्तः, प्रादिसमासे, निर्वं समासेऽनन्तरपदस्य ( पा ८ । ३ । ४५ । ) इति षत्वं, अत्र, कर्तृ-कर्म्मणोः कृति ( पा २ । ३ । ६५ । ) इति प्राप्ता षष्ठी यद्यपि, नलोकाव्य-यनिष्ठाखलर्थतृनां ( पा २ । ३ । ६९ । ) इति निषिद्धा, तथापि कर्तुः शेषत्वेन विवक्षितत्वात्, कर्तृकरणयोस्तृतीया ( पा २ । ३ । १८ । ) इत्येतस्याः प्राप्तेः शैषिकी षष्ठी, यथा कर्म्मणि शेषत्वेन विवक्षिते माषा-णामश्नीयादिति, गतिरनन्तरः ( पा ६ । २ । ४९ । ) इति निस उदात्तत्वं । अकर्त्त अकृणुत, कृञो लुङि तस्य व्यत्ययेन तादेशः, मन्त्रेघस ( पा २ । ४ । ८० । ) इति च्लेर्लुक्, छन्दस्युभयथा ( पा ३ । ४ । ११७ ।) इति तिङ आर्द्धधातुकत्वात् ङित्त्वाभावेन गुणः । चतुरः, शसि ( पा ६ । १ । १६७ । ) इत्युकार उदात्तः । पुनः स्वरादिष्वाद्युदात्तः पठितः ॥ ६ ॥

तृतीये छन्दोमे वैश्वदेवशस्त्रे ते नो रत्नानि धत्तनेति द्वे ऋचावावंभौ, तृतीयस्याग्नमेति खण्डे सूचितं, इन्द्र इषे ददातु नस्तेनो रत्नानि धत्त-नेत्येका द्वे चेति, तयोराद्यां सूक्ते सप्तमीमृचमाह ते नो रत्नानीति । पूर्वास्तृतु ये प्रतिपादिता ऋभवस्ते यूयं सुशस्तिभिः शोभनैरस्मदीय-शंसनैर्युक्ताः सन्तो नोऽस्माकं सम्बन्धिने सुन्वते सोमाभिषवं कुर्वते यजमानाय रत्नानि रमणीयानि सुवर्णमणिमुक्तादीनि एकमेकं क्रमेण प्रत्येकं धत्तन प्रयच्छत । सुवर्णादीनां मध्ये प्रतिद्रव्यं यावदपेक्षितं ताव-दिति विवक्षया एकमेकमित्युक्तं । कीदृशानि रत्नानि, त्रिरा त्रिवा-रमावृत्तानि, उत्तमानि मध्यमान्यधमानि चेत्येवं रत्नानां त्रिरावृत्तिः । किञ्च साप्तानि सप्तसङ्ख्यानि सप्तसङ्ख्या निष्पन्नवर्गरूपाणि कर्म्माणि च धत्तन सम्पादयत । कीदृशानि साप्तानि, त्रिरा त्रिवारमावृत्तानि, अग्न्याधेयं दर्शपौर्णमास इत्यादीनां सप्तानां हविर्यज्ञानामेको वर्गः । औ-पासनहोमो वैश्वदेवमित्यादीनां सप्तानां पाकयज्ञानां वर्गो द्वितीयः * ।

* श्रौतसूत्रव्याख्यायां औपासनहोमादीनां प्रथमवर्गत्वेन अग्न्याधेयादीनां द्वितीयवर्गत्वेन प्रतिपादनमस्तीति विशेषः ।

१ ८ १ अधारयन्त वह्नयोऽभजन्त सुकृत्यया ।
भागं देवेषु यज्ञियं ॥ २ ॥

अग्निष्टोमोऽत्यग्निष्टोम इत्यादीनां साम्नां सोमसंस्थानां वर्गस्तृतीयः। रत्नानि, रमुक्रीडायां, निदित्यनुवृत्तौ रमेस्तचेति नक्प्रत्ययः, तत्सन्नियोगेन मकारस्य तकारः, नित्त्वादाद्युदात्तः। धत्तन धत्त, तप्तनप्तनथनाश्च ( पां ७ । १ । ४५ । ) इति तशब्दस्य तनादेशः। साम्नानि, साम्नां वर्गः साम्नं, साम्नोऽण्छन्दसि ( पां ५ । १ । ६१ । ) इति वर्गेऽण् प्रत्ययः, नस्तद्धिते ( पां ६ । ४ । १४४ । ) इति टिलोपः, ञित्त्वादादिवृद्धिराद्युदात्तत्वञ्च, अत्र वर्गप्रवचनेन वर्गिणो लक्ष्यन्ते, तेन बहुवचनं, अन्यथा ह्येक एव वर्गस्त्रिरात्र इत्येकवचनमेव स्यात्। सुन्वते, शतुरनुमोनद्यजादी ( पां ६ । १ । १७३ । ) इति विभक्तेरुदात्तत्वं। एकमेकं, नित्यवीप्सयोः (पां ८ । १ । ४ । ) इति द्विर्भावः, एकशब्दः इणः क्रन्नन्तस्य नित्त्वादाद्युदात्तत्वं, द्वितीयस्यैकशब्दस्य, तस्य परमाम्रेडितं (पां ८ । १ । २ । ) इत्याम्रेडितसञ्ज्ञायां, अनुदात्तञ्च ( पां ८ । १ । ३ । ) इत्यनुदात्तत्वं। सुशस्तिभिः, शस्यन्ते आभिरिति शस्तय ऋचः शंसु स्तुतौ, करणे क्तिन् तस्य कित्त्वान्न लोपः, शोभनाः शस्तय इति प्रादिसमासे यद्यपि क्तिनो नित्त्वादाद्युदात्तत्वं न कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव प्राप्तं, तत्तु परेण, मन्क्तिन्व्याख्यान ( पां ६ । २ । १५१ । ) इत्यादिना उत्तरपदान्तोदात्तत्वेन बाध्यते ॥ ७ ॥

अष्टमीमृचमाह अधारयन्तेति। वह्नयश्चमसादिसाधननिष्पादनेन यज्ञस्य वोढार ऋभवोऽधारयन्त पूर्वं मनुष्यत्वेन मरणयोग्या अप्यमृतत्वलाभेन प्राणान् धारितवन्तः। तथाच मन्त्रान्तरमाम्नायते मर्त्तासः सन्तोऽमृतत्वमानशुरिति । किञ्च ते सुकृत्यया यज्ञसाधनद्रव्यसम्पादनरूपेण शोभनव्यापारेण देवेषु मध्ये स्थित्वा यज्ञियं यज्ञार्हं भागं तृतीयसवनमभजन्त सेवितवन्तः, अयमर्थः साधन्वना यज्ञियं भागमानशेत्यादिमन्त्रान्तरे विस्पष्टः, ब्राह्मणेऽप्यृभवो देवेषु तपसा सोमपीथमध्यजयन्नित्याद्युपाख्यानं विस्पष्टं। वह्नयः, निदित्यनुवृत्तौ, वहिश्रीत्यादिना निः प्रत्ययः औणादिकः, नित्त्वादाद्युदात्तः । अभजन्त, पादादित्वान्न निघातः। सुकृत्यया, विभाषा कृवृषोः ( पां । ३ । १ । १२० । ) इति कृञः कर्म्मणि क्यप्, शोभनं कृत्यमस्या भजनक्रियायाः

## एकविंशसूक्तं।

१ १ १ इहेन्द्राग्नी उपह्वये तयोरित्स्तोममुश्मसि ।
ता सोमं सोमपातमा ॥

सा सुकृत्या, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं बाधित्वा, नञ्सुभ्यां (पां ६ । २ । १७२ ।) इत्युत्तरपदान्तोदात्तत्वं। ननु कृत्यशब्दे क्यपः पित्त्वेनानुदात्तत्वाद्धातुस्वरेणादिरुदात्तः, ततश्च, आद्युदात्तं द्व्यच्छन्दसि (पां ६ । २ । ११९ ।) इत्यनेनाद्युदात्तत्वेन भवितव्यं, तेन हि पुरस्तादपवादो न परान्, नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं बाध्यत इत्युक्तं, एवं तर्हि, कृञः श च (पां ३ । ३ । १०० ।) इति स्त्रियां भावे क्यप्प्रत्ययान्तः कृत्यशब्दः, क्यपः पित्त्वेऽपि व्यत्ययेनोदात्तत्वं, प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते। भागं, कर्षात्वतो घञो (पां ६ । १ । १५९ ।) इत्यन्तोदात्तः। यज्ञियं, यज्ञमर्हतीत्यर्थे, यज्ञर्त्विग्भ्यां घखञौ (पां ५ । १ । ७१ ।) इति घः, तस्य इयादेशः, प्रत्ययस्वरः ॥ ८ ॥
इति प्रथमस्य द्वितीये द्वितीयो वर्गः ॥ २ ॥

इहेन्द्राग्नीत्यादि षडृचं सूक्तं तस्य ऋषिछन्दसी पूर्ववत्, देवता त्वनुक्रम्यते, इह षडैन्द्राग्नमिति, विनियोगस्तु अग्निष्टोमे आच्छावाकशस्त्रे इहेन्द्राग्नी उपह्वय इति सूक्तं, स्तोत्रमग्रेशस्त्रादिति खण्डे इहेन्द्राग्नी उपेयं वामस्यमन्मन इति नवेति सूचितत्वात्, तथाभिप्लवषडहे प्रातःसवने अच्छावाकशस्त्रे स्तोमातिशंसनार्थमेतदेव सूक्तं, तथा च सूचितं अभिप्लवषडहानीत्युपक्रम्य इहेन्द्राग्नी इन्द्राग्नी आगच्छतमिति, तस्मिन्सूक्ते प्रथमामृचमाह इहेन्द्राग्नी उपह्वय इति। इहास्मिन् कर्म्मणि इन्द्राग्नी देवावुपह्वये आह्वयामि, तयोरिन्द्राग्न्योरेव स्तोमं स्तोत्रमुश्मसि कामयामहे, सोमपातमा ता, अतिशयेन सोमं पातुं समर्थौ तौ द्वौ देवौ सोमं पिबतामिति शेषः। इन्द्राग्नी, अत्र देवताद्वन्द्वेऽपि पूर्वपदस्यानङ् न भवति, तत्र हि द्वन्द्व इत्यनुवृत्तौ, पुनर्द्वन्द्वग्रहणाल्लोकप्रसिद्धसाहचर्य्याणामेव द्वन्द्वे आनङित्युक्तं, तस्मादत्राव्यग्रहे कस्य इन्द्रशब्दः, समासस्य (पां ६ । १ । २२३ ।) इत्यन्तोदात्तत्वं, देवताद्वन्द्वे च (पां ६ । २ । १४१ ।) इत्युभयपदप्रकृतिस्वरत्वं न भवति, अग्निशब्दस्यानुदात्तत्वेन, नोत्तरपदानुदात्तादौ (पां ६ । २ । १४२ ।)

१२१ ता यज्ञेषु प्रशंसतेन्द्राग्नी शुम्भता नरः।
ता गायत्रेषु गायत ॥

१३१ ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे।
सोमपा सोमपीतये ॥

१४१ उग्रा सन्ता हवामह उपेदं सवनं सुतं।
इन्द्राग्नी एह गच्छतां ॥

इति प्रतिषेधात्। उशसि, वश कान्तौ अटो मस्, इदन्तो मसिः (पां ७।१।४६।) इति इकारोपजनः, अदादित्वाच्छपो लुक्, मसेर्ङित्त्वात्, ग्रहिज्या वयि व्यधि (पां ६।१।१६।) इत्यादिना सम्प्रसारणं। ता सोमपातमा, उभयत्र सुपांसुलुक् पूर्वसवर्णा (पां ७।१।३९।) इत्यादिनाकारः ॥ १ ॥

द्वितीयामृचमाह ता यज्ञेष्विति। हे नरो मनुष्या ऋत्विजस्ता पूर्वोक्तौ ताविन्द्राग्नी यज्ञेषु अनुष्ठीयमानकर्म्मसु प्रशंसत शस्त्रैः, तथा शुम्भत नानाविधैरलङ्कारैः शोभितौ कुरुत, तथा ता पूर्वोक्ताविन्द्राग्नी गायत्रेषु गायत्रीच्छन्दस्केषु मन्त्रेषु सामरूपेण गायत। ता, सुपांसुलुगित्याकारः। शुम्भत, अस्य संहितायां, अन्येषामपि दृश्यते (पां ६।३।१३७।) इति दीर्घः ॥ २ ॥

तृतीयामृचमाह ता मित्रस्येति। मित्रस्य स्नेहविषयस्य ममानुष्ठातुः प्रशस्तये ता पूर्वोक्तौ देवौ सम्पाद्यतामिति शेषः, यद्वा मित्रस्य मम सम्बन्धिनौ ताविन्द्राग्नी प्रशस्तये प्रशंसितुमिच्छाम इति शेषः, सोमपा- सोमपानक्षमौ, ता, पूर्वोक्ताविन्द्राग्नी, सोमपीतये सोमपानार्थं हवामहे आह्वयामः। प्रशस्तये, तुमर्थाच्च भाववचनात् (पां २।३।१५।) इति चतुर्थी, कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा, तादौ च निति कृत्यतौ (पां ६।२।५०।) इति गतेः प्रकृतिस्वरत्वं। सोमपीतये, सोमस्य पीतिर्यस्मिन् कर्म्मणि तस्मै, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं, सोमस्य पीतिरिति तत्पुरुषे वा दासीभारादित्वा दाकृतिगणत्वेन पूर्वपदप्रकृतिस्वरत्वं ॥ ३ ॥

चतुर्थीमृचमाह उग्रा सन्तेति। सुतमभिषवोपेतमिदमनुष्ठीयमानं सवनं प्रातः सवनादिरूपं कर्म्म उप सामीप्येन प्राप्तं, उग्रा सन्ता वैरि-

१ ५ १ ता महात्मा सदस्पती इन्द्राग्नी रक्ष उब्जतं ।
अप्रजाः सन्त्वत्रिणः ॥
१ ६ १ तेन सत्येन जागृतमधि प्रचेतुने पदे ।
इन्द्राग्नी शर्म्म यच्छतं ॥ ३ ॥

यज्ञादिषु क्रूरौ सन्तौ देवौ हवामहे आह्वयामः, इन्द्राग्नी देवौ इह कर्म्मण्यागच्छतां । सन्ता, अस्तेः शतरि, श्नसोरल्लोपः ( पां ६ । ४ । १११ । ) इत्यल्लोपः । सवनं सुतमितिद्वयं सेमं नः स्तोममागच्छतमित्यत्रोक्तं ॥ ४ ॥

पञ्चमीमृचमाह ता महात्मेति । ता तौ पूर्वोक्ताविन्द्राग्नी युवां रक्षो राक्षसजातिं उब्जतं, ऋजुकुरुतं, क्रौर्य्यं परित्याजयतमित्यर्थः । कीदृशौ तौ, महात्मा महात्मानौ गुणैरधिकौ । सदस्पती, सभापालकौ, तयोः प्रसादादत्रिणो भक्षका राक्षसा अप्रजा अनुत्पन्नाः सन्तु । महात्मा, सान्तमहतः संयोगस्य ( पां ६ । ४ । १० । ) इति दीर्घः । सदस्पती, समासे, षष्ठ्या लुकि, प्रातिपदिकसकारस्य सत्वाभावश्छान्दसः, उभे वनस्पत्यादिषु युगपत् ( पां ६ । २ । १४० । ) इत्युभयपदप्रकृतिस्वरत्वं । इन्द्राग्नी, आमन्त्रिताद्युदात्तत्वं । अप्रजाः, प्रजायन्त इति प्रजाः, अन्येष्वपि दृश्यते ( पां ३ । २ । १०१ । ) इति जनेर्डः प्रत्ययः, न प्रजाः, अप्रजाः, अप्रजाशब्दस्य बहुव्रीहौ, नित्यमसिच्प्रजामेधयोः ( पां ५ । ४ । १२२ । ) इत्यसिजादेशः स्यात्, अव्ययपूर्वपदप्रकृतिस्वरः । अत्रिणः, इजन्तस्य अत्तृशब्दस्य जसश्छान्दस इत्यनुडागमः, चितः ( पां ६ । १ । १६३ । ) इत्यृकार उदात्तस्तस्य यणादेशे, उदात्तयणो हल्पूर्वात् ( पां ६ । १ । १७४ । ) इति इकार उदात्तः ॥ ५ ॥

षष्ठीमृचमाह तेन सत्येनेति । हे इन्द्राग्नी, सत्येन अवश्यं फलदानादवितथेन तेनास्माभिरनुष्ठितेन कर्म्मणा प्रचेतुने प्रकर्षेण फलभोगज्ञापके पदे स्वर्गलोकादिस्थानेऽधिजागृतं आधिक्येन सावधानौ भवतं, ततोऽस्मभ्यं शर्म्म यच्छतं सुखं गृहं वा दत्तं, गयः कृदर इत्यादिषु द्वाविंशतिसङ्ख्यकेषु गृहनामसु शर्म्म वर्म्मेत्युक्तं । जागृतं, जागृ निद्राक्षये, अदिप्रभृतिभ्यः शपः ( पां २ । ४ । ७२ । ) इति शपो लुक्, तिङ्ङतिङः ( पां ८ । १ । २८ । ) इति निघातः । प्रचेतुने, चिती संज्ञाने, इत्यस्मादयन्तात् शकिनमन्त इति विहितत्वाद्दाउणकादौ-

## द्वाविंशसूक्तं।

१ ११ प्रातर्युजा विबोधयाश्विनावेह गच्छतां।
अस्य सोमस्य पीतये ॥

आदिक उन्प्रत्ययः, समासे कृदुत्तरपदप्रकृतिस्वरत्वं। इन्द्राणी, इन्द्रेन्द्राणीत्यचोक्तं, आमन्त्रितत्वादाद्युदात्तत्वमत्र विशेषः। छिनत्ति दुःखमिति शर्म्म, शृ हिंसायां, अन्येभ्योऽपि दृश्यन्ते (पां ३। २। ७५।) इति मनिन् प्रत्ययः, नित्त्वादाद्युदात्तत्वं। यच्छतं, इषुगमियमांछः (पां ७। ३। ७७।) इति छः॥ ६॥ इति प्रथमस्य द्वितीये तृतीयो वर्गः॥

प्रातर्युजेत्यादिकमेकविंशत्यृचं सूक्तं, तस्य ऋषिश्छन्दसी पूर्ववत्, देवताविशेषस्त्वनुक्रम्यते, प्रातर्युजा सैका चतस्र आश्विन्यस्तथा सावित्र्य आग्नेय्यौ द्वे देवीनामेकेन्द्राणी वरुणान्यग्नाय्यौ नां द्यावा पृथिव्य पार्थिवी षड्वैष्णव्योऽतो देवादेवी वेति। सूक्तसङ्ख्यानुवर्त्तत इति, अस्मिन् खण्डे अनिरुक्तासङ्ख्या विंशतिरिति परिभाषितत्वात् प्रातर्युजेति सूक्ते सङ्ख्याविशेषस्यानिरुक्तया विंशतिसङ्ख्या द्रष्टव्या, सा च विंशतिरेकयाधिकया सह वर्त्तत इति सैका, तत्रादौ चतस्र ऋचोऽश्विदेवताकाः, पञ्चमीमारभ्याष्टम्यन्तास्चतस्रः सवितृदेवताकाः, नवमी दशमी च द्वे अग्निदेवताके, एकादश्या ऋचो देवसम्बन्धिन्य इन्द्रावरुणाग्निपत्न्यो देवता द्वादश्या अपि, त्रयोदशीचतुर्दश्यौ द्यावापृथिवीदेवताके, पञ्चदशी पृथिवीदेवताका, षोडशीमारभ्यैकविंशत्यन्ताः षड्विष्णुदेवताकाः, अतो देवा इत्येतस्याः षोडश्यास्तु क्षत्वा देवता विष्णुर्वा विकल्पेन देवता। अत्र सूक्तविनियोगो लैङ्गिकः, प्रातरनुवाके आश्विने क्रतौ प्रातर्युजा विबोधयेति चतस्र ऋचः। सूत्रितञ्च अथाश्विनं षोडश, प्रातर्युजेति चतस्र इति। आश्विनग्रहस्य प्रातर्युजेत्युक्ता पुरोऽनुवाक्या, द्विदेवत्यैश्चरन्तीतिखण्डे सूचितं, आश्विनस्य प्रातर्युजा विबोधयेति, तत्र प्रथमामृचमाह, प्रातर्युजा विबोधयेति। अत्र होताध्वर्युमुद्दिश्य ब्रूते, हे अध्वर्यो, प्रातर्युजा प्रातःसवनग्रहेण संयुक्तावश्विनौ देवौ विबोधय विशेषेण प्रबुद्धौ कुरु, अश्विनौ प्रबुद्धौ तावश्विनौ देवौ च अस्याभिषवसंस्कारयुक्तस्य सोमस्य पीतये सोमपानाय इह कर्म्मण्यागच्छतां। प्रातर्युञ्जाते गृह्यमाणेन ग्रहेण सहेति प्रातर्युजा, सत्सू-

।२। या सुरथा रथीतमोभा देवा दिविस्पृशा।
अश्विना ता हवामहे॥
।३। या वां कशा मधुमत्यश्विना सूनृतावती।
तया यज्ञं मिमिक्षतं॥

द्विषद्रुहदुहयुज (पां ३।२।६१।) इत्यादिना क्विप्, सुपांसुलुक् (पां ७।१।३९।) इत्यादिना आकारः, कृदुत्तरपदप्रकृतिस्वरत्वं। अस्य, ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः (पां ६।१।१७१।) इत्यादिना विभक्तेरुदात्तत्वं। पीतये, व्यत्ययेन क्तिन उदात्तत्वं॥ १॥

द्वितीयामृचमाह या सुरथेति। या उभा अश्विना देवा, यावुभावश्विनौ देवौ सुरथा शोभनरथयुक्तौ रथीतमा अतिशयेन रथिनौ, दिविस्पृशा द्युलोकनिवासिनौ ता हवामहे तादृशावश्विनावाह्वयामः। येत्यादिष्वष्टसु पदेषु, सुपांसुलुक् (पां ७।१।३९।) इत्यादिना द्विवचनस्याकारः। सुरथा, शोभनो रथो ययोस्तौ सुरथौ, समासान्तोदात्तत्वापवादं बहुव्रीहौ पूर्वपदप्रकृतिस्वरं बाधित्वा, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तत्वे प्राप्ते, आद्युदात्तं द्व्यच्छन्दसि (पां ६।२।११९।) इत्युत्तरपदाद्युदात्तत्वं। रथीतमा, अन्येषामपि दृश्यते (पां ६।३।१३७।) इति संहितायामिकारस्य दीर्घत्वं। दिविस्पृशा, दिविस्पृशत इति दिविस्पृशौ, क्विप् च (पां ३।२।७६।) इति क्विप्, तत्पुरुषे कृति बहुलं (पां ६।३।१४।) इत्यलुक्, गतिकारकोपपदात्कृत् (पां ६।२।१३९।) इति कृदुत्तरपदप्रकृतिस्वरत्वं॥ २॥

तृतीयामृचमाह या वां कशेति। अश्विना हे अश्विनौ देवौ, वां युवयोः सम्बन्धिनी या कशा अश्वताडनी विद्यते, तया सह आगत्य यज्ञमस्मदीयं मिमिक्षतं सोमरसेन सेक्तुमिच्छन्तौ कशयाश्वं दृढं ताडयित्वा सहसा समागत्य भवद्विषयां सोमरसाहुतिं निष्पादयितुमुद्युक्तौ भवतमित्यर्थः। कीदृशी कशा, मधुमती, अर्णः क्षोद इत्यादिषु एकशतसङ्ख्याकेषूदकनामसु मधु पुरीषमिति पठितं, तस्मादुदकवतीत्युक्तं भवति, अश्वस्य शीघ्रगत्या यत्स्वेदोदकं स्रवति तेनेयं कशा क्लिन्नेत्यर्थः। पुनः कीदृशी सूनृतावती, प्रियसत्यवाग्युक्ता, तीव्रेण कशाघातेन

१४। न हि वामस्ति दूरके यत्रा रथेन गच्छथः।
अश्विना सोमिनो गृहं॥
१५। हिरण्यपाणिमूतये सवितारमुपह्वये।
स चेत्ता देवता पदं॥४॥

यो ध्वनि र्निष्पद्यते ताडनवेलायामश्वारूढस्य च य आक्रोशः क्रियते तदुभयं शीघ्रमागमनहेतुत्वेन यजमानस्य प्रियं, यद्वा श्लोकाधारेत्यादिषु समपश्चाशद्वाङ्नामसु कशा धिषणेति पठितं, अश्विनोर्या वाक् मधुमती माधुर्य्येण पारुष्यरहिता, सूनृतावती प्रियत्वसत्यत्वोपेता फलप्रदान-विषयेत्यर्थः, तया वाचायुक्तौ, यज्ञं मिमिक्षतमिति योजनीयं। कशा, कश गतिशासनयोः, पचाद्यच्, वृषादित्वादाकृतिगणत्वेनाद्युदात्तः। सूनृतावती, ऊनपरिहाणे, सुष्ठु ऊनयत्यप्रियमिति सून्, तथाविध-मृतं सत्यं यस्यां वाचि सा सूनृता, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तत्वं बाधित्वा, परादिश्छन्दसि बहुलं (पां ६।२।१९९।) इत्युकार उदात्तः, सा यस्या अस्ति सा सूनृतावतीति कशायाः सञ्ज्ञा, एवंनामा या कशेत्यर्थः, सञ्ज्ञायां (पां ८।२।११।) इति मतुपो वत्वं। मिमिक्षतं, सेचनार्थान्मिहेः सन्, हल-न्ताच्च (पां १।२।१०।) इति कित्त्वाद्गुणाभावः, ढत्वकत्वषत्वानि॥३॥

चतुर्थीमृचमाह नहि वामिति। अश्विना हे अश्विदेवौ, युवां सोमिनः सोमवतो यजमानस्य गृहम्प्रति रथेन गच्छथः, स मार्गो वां युवयोर्दूरके दूरदेशे न ह्यस्ति न वर्त्तते, यद्वा यत्र गृहे गच्छथस्तच्च गृहं दूरे न भवति। न हि, एवमादीनामन्त इति फिट्सूत्रेणान्तोदात्तः। अस्ति, चादिलोपे विभाषा (पां ८।१।६३।) इति निघाताभावः, अत्र हि गृहं दूरे च नास्ति, युवाञ्च रथेन गच्छथ इति समुच्चयार्थश्चार्थो गम्यते, चशब्दो न प्रयुज्यत इति चलोपे प्रथमा तिङ्विभक्तिरस्तीति। यत्र, निपातस्य च (पां ६।३।१३६।) इति संहितायां दीर्घत्वं। गच्छथः, इयं यद्यपि न प्रथमा, तथापि यत्रेति यद्वृत्तयोगान्निघाता-भावः॥४॥

व्यूढस्य द्वितीये छन्दोमे वैश्वदेवशस्त्रे हिरण्यपाणिमूतय इति सावित्र्य-श्चतस्रः, द्वितीयस्येति खण्डे सूत्रितं हिरण्यपाणिमूतय इति चतस्रो

१ ६ १ अपां न पातमवसे सवितारमुपस्तुहि । तस्य व्रतान्युश्मसि ॥

महीद्यौः पृथिवीचनइति तत्र प्रथमां सूक्ते पञ्चमीमृचमाह हिरण्यपाणिमूतय इति । ऊतयेऽस्मद्रक्षार्थं सवितारं देवमुपह्वये आह्वयामि, स च सविता देव एतन्मन्त्रप्रतिपाद्यदेवता भूत्वा पदं यजमानेन प्राप्यं स्थानं चेत्ता ज्ञापयिता भवति । कीदृशं सवितारं, हिरण्यपाणिं यजमानाय दातुं हस्ते सुवर्णधारिणं, यद्वा देवकर्तृके यागे सविता स्वयमृत्विग्भूत्वा ब्रह्मत्वेनावस्थितस्तदान्यौ कस्याचिदिष्टावध्वर्य्यवस्तस्मै सवित्रे ब्रह्मणे प्राशित्रनामकं पुरोडाशभागं दत्तवन्तः, तच्च प्राशित्रं हस्ते सवित्रा गृहीतं सत् तदीयं पाणिं चिच्छेद, अतः प्राशित्रदातारोऽध्वर्य्यवः सुवर्णमयं पाणिं निर्म्माय प्रक्षिप्तवन्तः । सोऽयमर्थः कौषीतकिब्राह्मणे समाम्नातः, सवित्रे प्राशित्रं प्रतिजग्रुस्तत्तस्याणी प्रचिच्छेद, तस्मै हिरण्मयौ दधुः, तस्माद्धिरण्यपाणिरिति । हिरण्यशब्दं पाणिशब्दञ्च यास्क एवं निर्वक्ति, हिरण्यं कस्माद्धीयत आयम्यमानमिति वा ह्रीयते जनाज्जनमिति वा, हितरमणं भवतीति वा, हृदयरमणम्भवतीति वा, हर्य्यतेर्वा स्यात् प्रेप्साकर्म्मण इति, तथा पाणिः पणायतेः पूजाकर्म्मण इति । हिरण्यशब्दो नब्विषयस्यानिसन्तस्येति फिट्सूत्रेणाद्युदात्तः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । ऊतये, उदात्तइत्यनुवृत्तौ, ऊति यूति जूति साति हेति कीर्त्तयश्च ( पां ३ । ३ । ९७ । ) इति क्तिन्नुदात्तो निपातितः । सवितारं, तृच्, तृचश्चित्त्वादन्तोदात्तत्वं । चेत्ता, चिती सञ्ज्ञाने, अस्मादन्तर्भावितण्यर्थात्ताच्छील्ये तृन्, अनित्यमागमशासनमिति इडभावः, नित्त्वादाद्युदात्तः । देवता, देवात्तल् ( पां ५ । ४ । २७ । ) इति स्वार्थे तल्, लिति ( पां ६ । १ । १९३ । ) इति प्रत्ययात्पूर्वमुदात्तत्वं । पदशब्दः पचाद्यजन्तः, चितः ( पां ६ । १ । १६३ । ) इत्यन्तोदात्तः ॥ ५ ॥ इति प्रथमस्य द्वितीये चतुर्थो वर्गः ॥ ४ ॥

सूक्ते षष्ठीमृचमाह अपां न पातमिति । अत्र होता सामगमृत्विजमन्यं वा शिष्यं ब्रूते, अवसेऽस्मद्रक्षितुं सवितारमुपस्तुहि, तस्य सवितुः सम्बन्धीनि कर्म्माणि सोमयागादिरूपाणि उश्मसि कामयामहे । कीदृशं सवितारं, अपां न पातं जलस्य न पातकं सन्तापेन शोष-

१७१ विभक्तारं हवामहे वसोश्चित्रस्य राधसः।
सवितारं नृचक्षसं॥

कमित्यर्थः। अपां, ऊडिदं (पां ६।१।१७१) इत्यादिना विभक्तेरुदात्तत्वं। न पातं, पा रक्षणे, अयं शत्रन्तः पाच्छब्दः, तस्य नञ्समासे, नभ्राण्नपात् (पां ६।३।७५।) इत्यादिना नलोपप्रतिषेध इति वृत्तिकारः, अग्निर्हि अपो न पाति तच्छोषकत्वात्, तर्हि कथमपामिति षष्ठी, नलोकाव्ययनिष्ठाखलर्थतृनां (पां २।३।६९।) इति कर्मणि षष्ठ्याः प्रतिषेधादिति चेत्, तर्हि एषा शेषषष्ठ्यास्तु, अग्न्यादित्यौ अपां कारणतया सम्बन्धिनौ, अग्नेराप इति श्रुतेः, आदित्याज्जायते वृष्टिरिति स्मृतेश्च, अस्मिन् पक्षे उगिदचामिति नुमभावोऽपि निपातनादेवेति मन्तव्यं। पातेः क्विबन्तस्य तुग्वा निपातनाद्द्रष्टव्यः। अथवा न पातयतीति नपात्, पत्ल गताविति धातोर्ण्यन्तात् क्विप्, अग्न्यादित्यौ अपां न प्रापकौ, प्रत्युत तच्छोषकौ, अव्ययपूर्वपदप्रकृतिस्वरत्वं। अवसे, तुमर्थे सेसेनसेऽसेन् (पां ३।४।९।) इत्यादिना असेन् प्रत्ययः, नित्त्वादाद्युदात्तः। उश्मसि, वश कान्तौ, अदिप्रभृतिभ्यः शपः (पां २।४।७२।) इति शपो लुक्, इदन्तो मसिः (पां ७।१।४६।) इति इकारोपजनः॥ ६॥

सप्तमीमृचमाह विभक्तारमिति। वसोर्निवासहेतोश्चित्रस्य सुवर्णरजतादिरूपेण बहुविधस्य राधस्य धनस्य विभक्तारं अस्य यजमानस्यैतावद्धनदानमुचितमिति विभागकारिणं, नृचक्षसं मनुष्याणां प्रकाशकारिणं सवितारं हवामहे आह्वयामः। कौषीतकिन एतस्या ऋचो व्याख्यानरूपे ब्राह्मणे सवितुर्विभागहेतुत्वमेवमामनन्ति, तदेतद्वसु चित्रं राधस्तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजतीति। विभक्तारं, तृच्, तृचश्चित्त्वादन्तोदात्तत्वं, कृदुत्तरप्रकृतिस्वरत्वेन तदेव शिष्यते। हवामहे, ह्वयतेर्बहुलं छन्दसीति सम्प्रसारणं। वसोः, वस निवासे, शृस्वृस्निहित्रप्यसिवसिहनीत्यादिना उः प्रत्यय औणादिकः, निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः। राधसः, राध साध संसिद्धौ, सर्वधातुभ्योऽसुन्नित्यसुन् प्रत्यय औणादिकः, नित्त्वादाद्युदात्तः। नृचक्षसं, नॄंश्चष्ट इति नृचक्षाः, चक्षेर्बहुलं शिच्चेत्यसुन्, शित्त्वादार्द्धधातुकत्वेन ख्याञादेशाभावः, कृदुत्तरपदप्रकृतिस्वरत्वं॥ ७॥

१ ८ १ सखाय आनिषीदत सविता स्तोम्यो नु नः ।
दाता राधांसि शुम्भति ॥

१ ९ १ अग्ने पत्नीरिहावह देवानामुशतीरुप ।
त्वष्टारं सोमपीतये ॥

अष्टमीमृचमाह सखाय इति। सखिभूता हे ऋत्विजः, आनिषीदत सर्वतोपविशत, नोऽस्माकमयं सविता नु क्षिप्रं स्तोम्यः स्तुतियोग्यः, राधांसि धनानि दाता प्रदातुमुद्युक्तः, स एष सविता शुम्भति शोभते। समानाः सन्तः ख्यान्ति प्रकाशन्त इति सखायः, ख्या प्रकथने, समाने ख्यश्चोदात्त इति इन् प्रत्यय औणादिकः, तत्सन्नियोगेन डित्वं, यलोपश्च, डित्वादाकारलोपः, समानस्य छन्दसि (पां ६। ३। ८४।) इत्यादिना समानस्य सादेशः, इन्सन्नियोगेनोदात्तत्वं, जसि, सख्युरसम्बुद्धौ (पां ७। १। ९२।) इति णित्वाद्वृद्धिरायादेशश्च। निषीदत, सदिरप्रतेः (पां ८। ३। ६६।) इति षत्वं। स्तोमेषु प्रतिपाद्यत्वेन स्तोमे भवः स्तोम्यः, भवे छन्दसि (पां ४। ४। ११०।) इति यत्, यतोऽनावः (पां ६। १। २१३।) इत्याद्युदात्तत्वं। दाता, दानशीलः, ताच्छील्ये तृन्, नित्वादाद्युदात्तः। राधांसि नतं, कर्तृकर्म्मणोः कृति (पां २। ३। ६५।) इति प्राप्तायाः षष्ठ्याः, नलोकाव्ययनिष्ठा (पां २। ३। ६९।) इति प्रतिषेधः॥ ८॥

अग्निष्टोमे प्रातः सवने अग्ने पत्नीरिहावहेति नेष्टुः प्रस्थितयाज्या, प्रशास्ता प्रशास्त्राच्छंसीति खण्डे सूत्रितं, अग्ने पत्नीरिहावह होत्राभ्याम यथाप्राप्तायेति, तामेतां नवमीमृचमाह अग्नेपत्नीरिति। हे अग्ने, उशतीः कामयमाना देवानां पत्नीः इन्द्राण्याद्या इह देवयजनदेशे आवह, तथा त्वष्टारं सोमपीतये सोमपानार्थं उप समीपे आवह। पत्नीः, उत्पन्नः पतिशब्द आद्युदात्तः, पत्युर्नोयज्ञसंयोगे (पां ४। १। ३३।) इति ङीप्, तत्सन्नियोगेन नकारश्च, ङीपः पित्त्वादनुदात्तत्वात् स्वर एव। उशतीः, वश कान्तौ, लटः शतृ, अदिप्रभृतिभ्यः शपः (पां २। ४। ७२।) इति शपो लुक्, शतुर्ङित्त्वात्, ग्रहिज्यावयिव्यधि (पां ६। १। १६।) इति सम्प्रसारणं, उगितश्च (पां ४। १। ६।) इति ङीप्, शतुरनुमो-नद्यजादी (पां ६। १। १७३।) इति ङीप् उदात्तः॥ ९॥

११०१ आ ग्ना अग्न इहावसे होत्रां यविष्ठ भारतीं ।
वरूत्रीं धिषणां वह ॥ ५ ॥

११११ अभि नो देवीरवसा महः शर्म्मणा नृपत्नीः ।
अच्छिन्नपत्राः सचन्तां ॥

दशमीमृचमाह आ ग्ना अग्न इति । हे अग्ने, अवसेऽस्मानवितुं ग्ना देवपत्नीरिहावह, तथा हे यविष्ठ युवतमाग्ने, होत्रां होमनिष्पादिकामग्निपत्नीं, भारतीं भरतनामकस्यादित्यस्य पत्नीं, वरूत्रीं वरणीयां धिषणां वाग्देवताञ्चावह । वाग्वै धिषणेति वाजसनेयकं। भरत आदित्य इति यास्केनोक्तत्वात्तस्य पत्नी भारतीत्युच्यते। गम्यन्त इति ग्नाः, गम्लृ सृप्लृ गतै, औणादिको न प्रत्ययः, डित्त्वाट्टिलोपः, प्रत्ययस्वरः। होत्रां, हु दा मा शु भसिभ्यस्त्रन्निति त्रन्नन्तो नित्त्वादाद्युदात्तः। अतिशयेन युवा यविष्ठः, अतिशायने तमबिष्ठनै (पां ५। ३। ५५।) इति इष्ठन्प्रत्ययः, स्थूलदूर (पां ६। ४। १५६।) इत्यादिना यणादिपरस्य लोपः, पूर्वस्य च गुणः। भारतीं, शार्ङ्गरवादराकृतिगणत्वात्, शार्ङ्गरवाद्यञो ङीन् (पां ४।१।७३।) इति ङीन्, ङीनो नित्त्वादाद्युदात्तः। वरूत्रीं, ग्रसित स्कभित (पां ७।२।३४।) इत्यादैा वरूत्रीशब्दस्तृजन्त इत्युक्तं, तथाप्यन्ते इतिकरणस्य प्रदर्शनार्थत्वाद्वरूत्रीशब्दस्तृन्नन्तोऽपि द्रष्टव्यस्तेन नित्त्वादाद्युदात्तत्वं, शेषनिघातेन ऋकारस्यानुदात्तत्वात्, उदात्तयणो हल्पूर्वात् (पां ६।१।१७४।) इत्यनेनापि न ङीप उदात्तत्वं ॥ १० ॥ इति प्रथमस्य द्वितीये पञ्चमो वर्गः ॥ ५ ॥

सूक्ते एकादशीमृचमाह अभि नो देवीरिति। देवीर्देव्यो देवपत्न्यः, अवसा रक्षणेन, महो महता शर्म्मणा च सुखेन च, नोऽस्मानभिसचन्तां आभिमुख्येन सेवन्तां । कीदृश्यो देव्यः, नृपत्नीर्मनुष्याणां पालयित्र्यः । अच्छिन्नपत्रा अच्छिन्नपत्त्राः, न हि पक्षिरूपाणां देवपत्नीनां पत्त्राः केन छिद्यन्ते। देवीः, पुंयोगादाख्यायां (पां ४ । १ । ४८।) इति ङीषन्तः, प्रत्ययस्वरेणान्तोदात्तः, दीर्घाज्जसि च (पां ६।१। १०५ ।) इति प्रतिषेधस्य, वा छन्दसि (पां ६।१।१०६।) इति पाक्षिकस्योक्तेः पूर्वसवर्णदीर्घत्वं। अवसा, अव रक्षणे, असुन्, नित्त्वादाद्युदात्तः । महः, मह पूजायां, क्विप्, सुपां सुपो भवन्तीति तृतीयैक-

१ १२ १ इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये १
अग्नायीं सोमपीतये ॥

१ १३ १ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षतां १
पिपृतां नो भरीमभिः ॥

वचनस्य ङसादेशः, सावेकाचः (पां ६।१।१६८।) इति विभक्ते-रुदात्तत्वं। न्यपत्नीः, समासान्तोदात्तत्वे प्राप्ते, परादिश्छन्दसि बहुलं (पां ६।२।१९९।) इत्युत्तरपदाद्युदात्तत्वं। अच्छिन्नपत्राः, न छिन्नानि अच्छिन्नानि, अव्ययपूर्वपदप्रकृतिस्वरत्वं, अच्छिन्नानि पत्राणि यासान्ता बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ ११ ॥

द्वादशीमृचमाह इहेन्द्राणीमिति। इहास्मिन् कर्म्मणि स्वस्तये ऽस्माकमविनाशाय, सोमपीतये सोमपानाय च इन्द्रवरुणाग्नीनां पत्नी-राह्वयामि। इन्द्राणीं, वरुणानीं, इन्द्रवरुणभवशर्वरुद्रमृड (पां ४।१।४९।) इत्यादिना पुंयोगे ङीप्प्रत्ययः, आनुगागमश्च, प्रत्ययस्वरः। अग्नायीं, वृषाकप्यग्निकुसितकुसिदानामुदात्तः (पां ४।१।३७।) इति ङीप्, तत्सन्नियोगेनैकारस्यैकार उदात्तः। सोमपीतये, अस-कृत्पूर्वोक्तं ॥ १२ ॥

द्वितीये छन्दोमे वैश्वदेवशस्त्रे मही द्यौः पृथिवी च न इति द्यावा-पृथिव्यानि हविर्द्धानीयस्तृचः, द्वितीयस्याग्निं व इति खण्डे सूत्रितं, मही द्यौः पृथिवी च नो युवाना पितरा पुनरिति, आग्रयणेष्टौ मही द्यौरित्येषा द्यावापृथिव्यैककपालस्यानुवाक्या, आग्रयणं व्रीहिश्यामाकेति खण्डे सूत्रितं, ये के च ज्मामहिनो अहिमाया मही द्यौः पृथिवी च न इति, अभिमन्त्रणेऽप्येषा विनियुक्ता। प्रातर्वैश्वदेव्यमिति खण्डे सूत्रितं, अभित्वादेवसवितर्मही द्यौः पृथिवी च न इति, विष्यन्दमानं सान्नाय्य-मनयैवाहवनीयदेशे निनयेत्, विष्यपराध इति खण्डे तथैव सूत्रितं, विष्यन्दमानं मही द्यौः पृथिवी च न इति, अन्तः परिधिदेशे निनये-युरिति, आश्विनशस्त्रेऽप्येषा, संस्थितेष्वाश्विनाविति खण्डे सूत्रितं, मही द्यौः पृथिवी च न सेहि द्यावापृथिवी विश्वशम्भुवेति, तामेतां सूक्ते त्रयोदशीमृचमाह मही द्यौरिति। मही महती द्यौर्द्युलोकदेवता, पृथिवी भूमिदेवता च, नोऽस्मदीयमिमं यज्ञं मिमिक्षतां, स्वकीयसार-

१४। तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः।
गन्धर्वस्य ध्रुवे पदे।

१५। स्योना पृथिवि भवानृक्षरा निवेशनी।
यच्छा नः शर्म्म सप्रथः॥ ६॥

भूतेन रसेन मिमिक्षतां सेक्तुमिच्छतां, तथा भरीमभिर्भरणैः पोषणै-र्नोऽस्मान् पिपृतामुभे देव्यौ पूरयतां। मही, महच्छब्दात्, उगितश्च (पां ४।१।६।) इति ङीप्, अच्छब्दलोपश्छान्दसः, वृहन्महतो-रुपसङ्ख्यानमिति वार्त्तिकेन ङीप उदात्तत्वं। द्यौः, दिव्शब्दः प्राति-पदिकस्वरेणान्तोदात्तः, गोतो णित् (पां ७।१।९०।) इति ततः परस्य सोर्णिद्वद्भावाद्भवन्ती वृद्धिरपि स्थानिवद्भावेनोदात्ता। पृथिवी, प्रथ प्रख्याने, प्रथेः षिवन् सम्प्रसारणञ्चेत्यौणादिसूत्रेण षिवन्प्रत्ययः, षिद्गौरादिभ्यश्च (पां ४।१।४१।) इति ङीष्, प्रत्ययस्वरः। मिमि-क्षतां, मिह सेचने, सनि, द्विर्भावहलादिशेषौ, ढत्वकत्वषत्वानि। पिपृतां, पॄ पालनपूरणयोः, पृ इत्येके, शपः श्लुः, अर्त्तिपिपर्त्योश्च (पां ७।४।७७।) इत्यभ्यासाकारस्य इकारः, तिङ्प्रत्ययस्वरः। भरीमभिः, डुभृञ् धारणपोषणयोः, हृभृधृसृस्तृशॄभ्य ईमनिन् इत्यौणादिक ईम-निन्प्रत्ययः, नित्त्वादाद्युदात्तः॥ १३॥

चतुर्दशीमृचमाह तयोरिदिति। गन्धर्वस्य ध्रुवं पदमन्तरिक्षं, तथाच तापनीयशाखायां समाम्नायते, यद्गन्धर्वाप्सरोगणसेवितमन्तरिक्ष-मिति, तेनान्तरिक्षेणोपलक्षित आकाशे वर्त्तमानयोस्तयोरित् द्यावा-पृथिव्योरेव सम्बन्धि पयो जलं घृतवद्घृतसदृशं विप्रा मेधाविनः प्राणिनो धीतिभिः कर्म्मभिः, रिहन्ति लिहन्ति, यद्वा घृतवद्घृतं सारं तेनोपेतं। रिहन्ति, लिहेर्व्यत्ययेन रेफः। गन्धर्वस्य, धृञ् धारणे, गविधृञो व इत्यौणादिको व प्रत्ययः, तत्सन्नियोगेन गोशब्दस्य च गमादेशः॥ १४॥

स्योना पृथिवीत्येषा महानाम्नीव्रते भूमिस्पर्शने विनियुक्ता, एत-द्विदं ब्रह्मचारिणमितिखण्डे सूचितं, स्योना पृथिवि भवेति समाप्येति स्मार्त्ते हेमन्तप्रत्यवरोहणेऽप्येषा जप्या, मार्गशीर्षप्रत्यवरोहमितिखण्डे सूचितं, तस्मिन्नुपविश्य स्योना पृथिवि भवेति जपित्वेति, तामेतां सूक्ते पञ्चदशीमृचमाह स्योना पृथिवीति। हे पृथिवि स्योनत्वादिगुण-

११६। अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे।
पृथिव्याः सप्तधामभिः॥

युक्ता भव, स्योनशब्दो विस्तीर्णवाची, तथा वाजसनेयब्राह्मणे स्योनशब्दोपेतं कञ्चिन्मन्त्रमुदाहृत्य व्याख्यातं, इन्द्रस्योनमसि विशस्योनमिति विस्तीर्णमित्येव तदाहेति। यद्वा स्योनशब्दः सुखवाची। तथाच यास्कवाक्यमुदाहरिष्यते। अनृक्षरा कण्टकरहिता, निवेशनी निवासस्थानभूता, सप्रथो विस्ताररूपं शर्म्म शरणं नोऽस्मभ्यं यच्छ, हे पृथिवि देवि, तामेतामृचमुदाहृत्य यास्क एवं व्याचष्टे, सुखानः पृथिवि भवानृक्षरा निवेशनं ऋक्षरः कण्टकः ऋच्छतेः कण्टकः कन्तपो वा कृन्ततेर्वा कण्टतेर्वास्याद्गतिकर्म्मण उद्गततरो भवति, यच्छ नः शर्म्म-शरणं सर्वतः पृथ्वि इति। स्योना, षिवु तन्तुसन्ताने, सिवेष्टेर्यूचेति नप्रत्यय औणादिकः, टेश्च यो इत्यादेशः, प्रत्ययस्वरः, स्योना पृथिवी-त्वनयोर्भवेत्याख्यातेनैवान्वयो न परस्परं, अतोऽसामर्थ्येनैव पराङ्गवद्भावादोकारस्य नामन्त्रिताद्युदात्तत्वं। अनृक्षरा, ऋष गतौ, गच्छत्यन्तरित्यृक्षरः कण्टकः, तन्यृषिभ्यां क्सरन्निति क्सरन् प्रत्यय औणादिकः, षढोः कः सि (पां ८।२।४१।) इति कत्वं, आदेशप्रत्यययोः (पां ८।३।५९) इति षत्वं, नञा बहुव्रीहिः, तस्मान्नुडचि (पां ६।३।७४।) इति नुडागमः, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तत्वं। निविशन्त्यस्यामिति निवेशनी, करणाधिकरणयोश्च (पां ३।३।११७।) इति ल्युट्, लिति (पां ६।१।१९३।) इति प्रत्ययात् पूर्वोदात्तत्वं। यच्छ, दाण् दाने, पाघ्राध्मास्थाम्नादाण् (पां ७।३।७८।) इत्यादिना यच्छादेशः, द्व्यचोऽतस्तिङः (पां ६।३।१३५।) इति दीर्घः। सप्रथः, प्रथ प्रख्याने, असुन्, प्रथसा सह वर्त्तत इति, तेन सहेतितुल्ययोगे (पा २।२।२८।) इति तृतीयासमासः, वोपसर्जनस्य (पां ६।३।८२।) इति सभावः, ञ्स्वरः ॥१५॥ इति प्रथमस्य द्वितीये षष्ठो वर्गः॥६॥

प्रातः सवने सोमातिरेके एवं शंसनीयं, तत्र अतो देवा इत्याद्याः षड्टचः, सोमातिरेके इति खण्डे सूत्रितं, महाँ इन्द्रो य ओजसा अतो देवा अवन्तु न इत्यैन्द्रीभिर्वैष्णवीभिश्चेति, अप्तोर्यामेऽप्यावापातिरिक्तोक्थ्येऽपि एताः षड्टचस्तोत्रियानुरूपार्थाः, तथाच यस्य पञ्च इति

१७। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं।
समूल्हमस्य पांसुरे॥

खण्डे सूचितं, अतो देवा अवन्तु न इति स्तोत्रियानुरूपाविति, दर्शपूर्णमासयोः प्रायश्चित्तहोमेष्वाद्ये विनियुक्ते, तथैव वेदं पन्था इति खण्डे सूचितं, अतो देवा अवन्तु न इति द्वाभ्यां व्याहृतिभ्यश्चेति, याज्यानुवाक्ययोर्मध्ये लौकिकभाषया अतो देवा अवन्तु न इत्येषा जप्या, सूत्र्यते हि, आपद्यतो देवा अवन्तु न इति जपेदिति, तामेतां सूक्ते षोडशीमृचमाह अतो देवा इति । विष्णुः परमेश्वरः सप्तधामभिः सप्तभिर्गायत्र्यादिभिश्छन्दोभिः साधनभूतैर्यतः पृथिव्या यस्माद्भूप्रदेशाद्विचक्रमे विविधं पादक्रमणं कृतवान्, अतोऽस्मात् पृथिवीदेशात्मनोऽस्मान् देवा अवन्तु । विष्णोः पृथिव्यादिलोकेषु छन्दोभिः साधनैर्जयं तैत्तिरीया आमनन्ति, विष्णुमुखा वै देवाश्छन्दोभिरिमां लोकानपजय्यमभ्यजयन्निति, विष्णोस्त्रिविक्रमावतारे पादत्रयक्रमणस्य पृथिव्युपादानं पृथिवीप्रदेशाद्रक्षणं नाम भूर्लोकवर्त्तमानानां पापनिवारणं। अतः, एतच्छब्दात्, पञ्चम्यास्तसिल् ( पां ५।२।७।) इति तसिल्, एतदोऽश् ( पां ५।३।५।) इत्यशादेशः, लित्स्वरेणाकार उदात्तः। यतः, तसिलः प्रागिदशो विभक्तिः ( पां ५।३।१।) इति विभक्तिसञ्ज्ञायां, त्यदादीनामः (पां ७।२।१०२।) इत्यत्वं, लित्स्वरः। विष्णुः, विषेः किच्चेति औणादिको नु प्रत्ययः, कित्त्वान्न गुणः, निदित्यनुवृत्तेराद्युदात्तत्वं, विचक्रमे, सह सुपा ( पां २।१।४।) इति योगविभागाद्विशब्दस्य समासः, समासान्तोदात्तत्वं, यद्वृत्तान्नित्यं ( पां ८।१।६६।) इति यद्वृत्तयोगान्ननिघातः। सप्त, सुपां सुलुक् ( पां ७।१।३९।) इति भिसो लुक्। धामभिः, दधातेः, आतो मनिन् ( पां ३।२।७४।) इति मनिन्प्रत्ययः, नित्स्वरः ॥ १६ ॥

वैष्णवोपांशुयागस्य इदं विष्णुरित्यनुवाक्या, उक्ता देवता इति खण्डे सूचितं, इदं विष्णुर्विचक्रमे त्रिर्देवः पृथिवीमेष एतामिति, गार्हपत्याहवनीययोर्मध्ये स्यातिक्रमणेऽनयव स्वपदेषु भस्म प्रक्षिपेत्, विध्यपराध इति खण्डे सूचितं, गार्हपत्याहवनीययोरन्तरा स्या वातिक्रमेत् भस्मना श्वनः पदं प्रतिवपेदिदं विष्णुर्विचक्रमे तदस्य प्रियमभिपाथो अस्यामिति, उपसत्सु वैष्णवस्येष्टैवानुवाक्या, अथोपसदिति खण्डे सूचितं, अय-

१ १८ १ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्म्माणि धारयन् ॥

स्फाने अमीवहेदं विष्णुर्विचक्रम इति, आतिथ्यायां प्रधानविषय एषानुवाक्या, अथातिथ्येडान्तेति खण्डे सूत्रितं, गयस्फानेो अमीवहा इदं विष्णुर्विचक्रम इति । तामेतां सूक्ते सप्तदशीमृचमाह इदं विष्णुरिति। विष्णुस्त्रिविक्रमावतारधारी इदं प्रतीयमानं सर्वं जगदुद्दिश्य विचक्रमे विशेषेण पादक्रमणं कृतवान्, त्रेधा त्रिभिः प्रकारैः पदं निदधे, स्वकीयं पादं प्रक्षिप्तवान्, अस्य विष्णोः पांसुरे धूलियुक्ते पादस्थाने समूढं, इदं सर्वं जगत् सम्यगन्तर्भूतं। सेयमृक् यास्केनैवं व्याख्याता, विष्णुर्विशतेर्वा व्यश्नोतेर्वा यदिदं किञ्च तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः, समारोहणे विष्णुपदे गयशिरसीत्यौर्णनाभः, समूढमस्य पायनेऽन्तरिक्षे पदं न दृश्यते, अपिवोपमार्थे स्यात्, समूळ्हमस्य पांसुर इव पदं न दृश्यत इति, पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पिंशनीया भवन्तीति वेति। त्रेधा, एधाश्चेत्येधा, चितोऽन्त उदात्तः। समूळ्हं, वह प्रापणे, निष्ठा (पां ३ । २ । १०२ ।) इति क्तः, वचिस्वपियजादीनां किति, (पां ६ । १ । १५ ।) इति सम्प्रसारणं, ढत्वधत्वष्टुत्वढलोपदीर्घत्वानि, गतिरनन्तरः (पां ६ । २ । ४९ ।) इति गतेः प्रकृतिस्वरत्वं। अस्य, इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ (पां २ । ४ । ३२ ।) इत्यशनुदात्तः, प्रत्ययस्तु सुप्स्वरेण। पांसुरे, नगपांसुपाण्डुभ्यश्चेति वार्त्तिकेन मत्वर्थीयो रः प्रत्ययः, प्रत्ययस्वरः ॥ १७ ॥

उपसदि वैष्णवयागस्य प्रातःकाले याज्या, सायङ्कालेऽनुवाक्या त्रीणि पदेत्येषा, सूत्र्यते च, त्रीणि पदा विचक्रम इति, स्विष्टकृदादि लुप्यत इति, तामेतामष्टादशीमृचमाह त्रीणि पदेति। अदाभ्यः केनापि हिंसितुमशक्यः, गोपाः सर्वस्य जगतो रक्षकः, विष्णुः पृथिव्यादिस्थानेभ्यत एव तेषु त्रीणि पदानि विचक्रमे, किं कुर्वन् धर्म्माणि अग्निहोत्रादीनि धारयन् पोषयन्। पदा, सुपां सुलुक् (पां ७ । १ । ३९ ।) इत्यादिना विभक्तेर्डादेशस्तस्य स्थानिवद्भावेन अनुदात्तत्वे प्राप्ते ऽनुदात्तनिवृत्तिस्वरेणोदात्तत्वं। गोपाः, गोपाम्नतस्येत्यत्रोक्तं। अदाभ्यः, दभेः, ऋहलोर्ण्यत् (पां ३ । १ । १२४ ।) इति ण्यत्, नञ्समासः, अव्ययपूर्व-

१९। विष्णोः कर्म्माणि पश्यत यतो व्रतानि पस्पशे।
इन्द्रस्य युज्यः सखा॥

२०। तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः।
दिवीव चक्षुराततं॥

पदप्रकृतिस्वरत्वं। धारयन्, शपः पित्त्वादनुदात्तत्वं, शतुश्च लसार्व-धातुकस्वरेण णिच एव स्वरः शिष्यते॥ १८॥

एकोनविंशीमृचमाह विष्णोः कर्म्माणीति। हे ऋत्विगादयः, विष्णोः कर्म्माणि पालनादीनि पश्यत, यतो यैः कर्म्मभिः व्रतान्यग्निहोत्रादीनि पस्पशे, सर्वो यजमानः स्पृष्टवान्, विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः, तादृशो विष्णुरिन्द्रस्य युज्योऽनुकूलः सखा भवति। विष्णोरिन्द्रानुकूल्यं त्वष्टा हतपुत्त्र इत्यनुवाके अथ वै तर्हि विष्णुरित्यादिना प्रपञ्चेन तैत्ति-रीया आमनन्ति। पस्पशे, स्पश बाधनस्पर्शनयोः, लिट् द्विर्भावे, शर्पूर्वाः खयः (पां ७। ४। ६१।) इति पकारः शिष्यते, सकारो लुप्यते, यद्वृत्तान्नित्यं (पां ८। १। ६६।) इति यद्वृत्तयोगान्ननिघातः। युज्यः, युजेर्बाहुलकात् क्यप्, कित्त्वाद्गुणाभावः, क्यपः पित्त्वादनुदात्तत्वं, धातु-स्वरः॥ १९॥

विंशीमृचमाह तद्विष्णोरिति। सूरयो विद्वांस ऋत्विगादयो विष्णोः सम्बन्धि परममुत्कृष्टं तच्छास्त्रप्रसिद्धं पदं स्वर्गस्थानं शास्त्रदृष्ट्या सर्व्वदा पश्यन्ति, तत्र दृष्टान्तः, दिवीव, आकाशे यथा आततं सर्वतः प्रसृतं चक्षुर्न्निरोधाभावेन विशदं पश्यति तद्वत्। सदा, सर्वैकान्य किं यत्तदः (पां ५। ३। १५।) इति दा प्रत्ययः, सर्वस्य सोऽन्यतरस्यां दि (पां ५। ३। ६।) इति सर्वशब्दस्य सभावः, व्यत्ययेनाद्युदात्तत्वं। दिवि, ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः (पां ६। १। १७१।) इति विभक्ते-रुदात्तत्वं, इवेन विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरत्वं चेति तदेव शिष्यते। चक्षुः, नब्विषयस्यानिसन्तस्येति फिट्सूत्रेणाद्युदात्तत्वं। आततं, तनोतेः कर्म्मणि क्तः, यस्य विभाषा (पां ७। २। १५।) इति इट्प्रतिषेधः, अनुदात्तोपदेश (पां ६। ४। ३७।) इत्यादिना नलोपः, कृदुत्तरपद-प्रकृतिस्वरत्वे प्राप्ते, गतिरनन्तरः (पां ६। २। ४९।) इति गतेरुदा-त्तत्वं॥ २०॥

।२१। तद्विप्रासो विपन्यवो जागृवांसः समिन्धते।
विष्णोर्यत्परमं पदं ॥ ७ ॥

त्रयोविंशसूक्तं ॥

। १ । तीव्राः सोमास आगह्याशीर्वन्तः सुता इमे।
वायो तान्प्रस्थितान्पिब ॥

एकविंशीमृचमाह तद्विप्रास इति। पूर्वोक्तं विष्णोर्यत्परमं पदमस्ति, तत्पदं विप्रासो मेधाविनः समिन्धते सम्यग्दीपयन्ति। कीदृशा विप्रासः, विपन्यवो विशेषेण स्तोतारः। जागृवांसः, शब्दार्थयोः प्रमादराहित्येन जागरूकाः। विप्रासः, आज्जसेरसुक् (पा ७।१।५०।) इत्यसुगागमः। विपन्यवः, स्तुत्यर्थस्य पनेर्बाहुलक औणादिको युप्रत्ययस्तत्र प्रत्ययस्वरः। जागृवांसः, जागृ निद्राक्षये, लिटः क्वसुः, क्रादिनियमात् प्राप्तस्येटो, वस्वेकाजाद्घसां (पा ७।२।६७।) इति नियमान्निवृत्तिः ॥ २१ ॥ इति प्रथमस्य द्वितीये सप्तमो वर्गः ॥ ७ ॥

तीव्रा इति चतुर्विंशत्यृचं सूक्तं, अत्रेयमनुक्रमणिका, तीव्राश्चतुर्विंशतिर्वायव्यैन्द्रवायव्यौ मैत्रावरुणमरुत्वतीयवैश्वदेवपौष्णास्तृचाः, शिष्टा आप्योऽन्त्याध्यर्धाग्नेय्यप्स्वन्तः पुर उष्णिक् परानुष्टुप् तिस्रश्चान्त्या इति, ऋषिश्चान्यस्मादिति परिभाषयानुवर्त्तनान्मेधातिथिः काण्व ऋषिः, अप्स्वन्तरित्येषा पुर उष्णिक्, प्रथमाच्चरणस्य द्वादशाक्षरत्वाच्चेत् पुर उष्णिगिति लक्षणसद्भावात्। अप्सु मे सोम इत्येषानुष्टुप्, इदमाप इत्याद्यास्तिस्रोऽनुष्टुभः, शिष्टा एकोनविंशतिसङ्ख्याका ऋचो गायत्र्यः, आदौ गायत्रमिति परिभाषितत्वात्। आद्या वायुदेवताका, ततो द्वे ऋचाविन्द्रवायुदेवताके, तत एकस्तृचो मित्रावरुणदेवताकः, तत उत्तरतृचस्य मरुद्गणविशिष्टेन्द्रो देवता, तत एकस्तृचो वैश्वदेवः, तदनन्तरभावी पौष्णः, शिष्टा ऋचो बहुदेवताकाः, पयस्वानग्न इत्यर्धर्चयुक्ता सम्माग्न इत्येषा त्वग्निदेवताका, सूक्तविनियोगो लिङ्गादवगन्तव्यः। अभिप्लवषडहस्य द्वितीयेऽहनि प्रउगशस्त्रे वायव्यतृचस्य तीव्राः सोमास इत्येषा तृतीया, द्वितीयस्य चतुर्विंशेऽहनीति खण्डे सूत्रितं, तीव्राः सोमास

१ २ १ उभा देवा दिविस्पृशेन्द्रवायू हवामहे ।
अस्य सोमस्य पीतये ॥

आगह्योत्येवेति । एषषडहेऽपि द्वितीयेऽहनि प्रउग एषा, तामेतां सूक्ते प्रथमामृचमाह तीव्राः सोमास इति । हे वायो, इमे सोमास ऐन्द्रवायवग्रहादिरूपाः सोमाः सुता अभिषुतास्ते च तीव्राः प्रभूततयात्तर्पयितुं समर्थाः । आशीर्वन्त आशीर्युक्ताः । अतस्त्वमागहि अस्मिन् कर्म्मण्यागच्छ, प्रस्थितानुत्तरवेदिं प्रत्यानीतान्तान् सोमान् पिब । तीव्राः, तिज निशाने, औणादिको रक्प्रत्ययः, दीर्घत्वं, जकारस्य वकारः । सोमासः, अर्त्तिस्तुस्वित्यादिना मन्प्रत्यय औणादिकः नित्वादाद्युदात्तः, आज्जसेरसुक् ( पां ७ । १ । ५० । ) इत्यसुगागमः । गहि, मन्त्रेरन्न आगह्योत्यत्रोक्तं । आशीर्वन्तः, श्रीञ् पाके, अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्रातः श्रितमाशीराशीर्त्तः ( पां ६ । १ । ३६ । ) इति सूत्रे आङ्पूर्वस्य क्विपि शीरादेशो निपातितः, करणस्यापि श्रयणद्रव्यस्य स्वव्यापारे कर्तृत्वविवक्षया कर्त्तरि क्विप् न विरुध्यते, आशीरेषामस्तीत्याशीर्वन्तः, छन्दसीरः ( पां ८ । २ । १५ । ) इति मतुपो वत्वं । वायो, आमन्त्रितायुदात्तत्वं । प्रस्थितान्, प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरं बाधित्वा व्यत्ययेनाव्ययपूर्वपदप्रकृतिस्वरत्वं ॥ १ ॥

पूर्वोक्त एव प्रउगे उभा देवा दिविस्पृशेति द्वे, ऐन्द्रवायवस्तृचस्य प्रथमा द्वितीये, तथा च द्वितीयस्येति खण्डे सूचितं, उभा देवा दिविस्पृशेति द्वे इति, तयोः प्रथमां सूक्ते द्वितीयामृचमाह उभा देवेति । दिविस्पृशा, द्युलोकवर्त्तिनौ उभा देवा उभौ देवाविन्द्रवायू हवामहे आह्वयामः, किमर्थं अस्य सोमस्य पीतये, अस्य व्याख्यातं । उभा, देवा, सुपां सुलुक् ( पां ७ । १ । ३९ । ) इत्याकारः । दिविस्पृशा, हलदन्ताद्धस्तम्यां संज्ञायामिति वार्त्तिकेन सप्तम्या अलुक्, कृदुत्तरपदप्रकृतिस्वरत्वं । इन्द्रवायू, इन्द्रश्च वायुश्चेति द्वन्द्वः, उभयत्र वायोः प्रतिषेधो वक्तव्य इत्यामहो निषेधः, देवताद्वन्द्वे च ( पां ६ । २ । २६ । ) इति प्राप्तस्योभयपदप्रकृतिस्वरत्वस्य, नोत्तरपदेऽनुदात्तादौ ( पां ६ । २ । १४२ । ) इत्यादिना निषेधात् समासान्तोदात्तत्वमेव शिष्यते । हवामहे, ह्वेञ् स्पर्द्धायां शब्दे च, बहुलं छन्दसीति सम्प्रसारणं, सम्प्रसारणाच्च ( पां ६ । १ । १०८ । )

। ३ । इन्द्रवायू मनोजुवा विप्रा हवन्त ऊतये।
सहस्राक्षा धियस्पती॥

। ४ । मित्रं वयं हवामहे वरुणं सोमपीतये।
जज्ञाना पूतदक्षसा॥

इति पररूपत्वं, शप्, गुणावादेशौ, शपः पित्त्वादनुदात्तत्वं, तिङश्च लसार्वधातुकस्वरेण पदस्याद्युदात्तत्वे प्राप्ते, तिङ्ङतिङः (पां ८। १। २८।) इत्याष्टमिको निघातः। अस्य, ऊडिदं (पां ६। १। १७१।) इत्यादिना षष्ठ्या उदात्तत्वं,। पीतये, पा पाने, स्थागापापचोभावे (पां ३। ३। ९५।) इति भावे क्तिन्, घुमास्थागापाजहातिसां हलि (पां ६। ४। ६६।) इतीत्वं, व्यत्ययेनान्तोदात्तत्वं॥ २॥

तृतीयामृचमाह इन्द्रवायू इति। विप्रा मेधाविन ऋत्विग्यजमाना ऊतये रक्षणार्थं इन्द्रवायू हवन्त आह्वयन्ति। कीदृशाविन्द्रवायू, मनोजुवा मन इव वेगयुक्तौ। सहस्राक्षा सहस्रनयनयुक्तौ। यद्यपीन्द्र एव सहस्राक्षस्तथापि छत्रिन्यायेन वायुरपि तथोच्यते। धियस्पती, कर्म्मणो बुद्धेर्वा पालकौ। मनोजुवा, जवतिर्गतिकर्म्मा, मनोवज्जवत इति मनोजुवा, मन इव वेगयुक्तौ, कृदुत्तरपदप्रकृतिस्वरत्वं, सुपां सुलुक् (पां ७। १। ३९।) इत्याकारः। विप्रा, वैयादिको रन्प्रत्ययान्त आद्युदात्तः। ऊतये, ऊति यूति जूति साति हेति कीर्त्तयश्च (पां ३। ३। ९७।) इति क्तिमुदात्तत्वं। सहस्राक्षा, सहस्रमक्षीणि ययोस्तौ, बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् (पां ५। ४। ११३।) इति षच्, समासान्तः, बहुव्रीहिस्वरे प्राप्ते, षचः समासान्तप्रत्ययस्य सतिशिष्टत्वात्, चितः (पां ६। १। १६३।) इत्यन्तोदात्तत्वं। धियः, सावेकाचः (पां ६। १। १६८।) इति ङस उदात्तत्वं, षष्ठ्याः पतिपुत्र (पां ८। ३। ५३।) इति संहितायां विसर्ज्जनीयस्य सकारः, पतीत्याद्युदात्तः॥ ३॥

चतुर्विंशेऽहनि प्रातः सवने मैत्रावरुणशस्त्रे मित्रं वयं हवामह इति तृचः प्रउगस्तोत्रियः, चतुर्विंश इति खण्डे सूत्रितं, आनो मित्रावरुणा मित्रं वयं हवामह इति। अभिप्लवषडहे प्रातः सवने मैत्रावरुणस्यायं तृच आवापार्थः। अभिप्लवषष्ठाहानीति खण्डे सूत्रितं, परि-

१५। ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती।
ता मित्रावरुणा हुवे ॥ ८॥

शिष्टानावापानुद्धृत्य मित्रं वयं हवामह इति मैत्रावरुणस्य मित्रं वयं हवामह इत्येषा प्रातः सवने प्रस्थितयाज्या, प्रशास्ता ब्राह्मणाच्छंसीत्युपक्रम्य इदन्ते सौम्यं मित्रं वयं हवामह इति सूचितं, तामेतां सूक्ते चतुर्थीमृचमाह मित्रं वयमिति। वयमनुष्ठातारः सोमपीतये सोमपानार्थं मित्रं वरुणञ्चोभावाह्वयामः। कीदृशावुभौ, जज्ञाना कर्म्मप्रदेशे प्रादुर्भवन्तौ। पूतदक्षसा शुद्धबलौ। वरुणं, वृञ् वरणे, कृवृदारिभ्य उनन्नित्यौणादिक उननप्रत्ययः, नित्त्वादाद्युदात्तः। सोमपीतये, दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वं। जज्ञाना, जनी-प्रादुर्भावे, छन्दसि लिट्, तस्य, लिटः कानज्वा (पां ३।२।१०६।) इति कानजादेशः, गमहन जन खन घसां (पां ६।४।९८।) इत्युपधालोपस्तस्य, अचः परस्मिन्पूर्वविधौ (पां १।१।५७।) इति स्थानिवद्भावाज्जनशब्दस्य द्विर्वचनं, स्तोःश्चुनाश्चुः (पां ८।४।४०।) इति नकारस्य अकारः, चितः (पां ६।१।१६३।) इत्यन्तोदात्तत्वं, पूर्ववदाकारः। पूतदक्षसा, पूञ् पवने, निष्ठा (पां ३।२।१०२।) इति क्तः, श्र्युकः किति (पां ७।२।११।) इतीट्प्रतिषेधः, पूतं दक्षो ययोस्तौ, बहुव्रीहौ प्रकृत्या पूर्वपदं (पां ६।२।१।) इति पूर्वपदप्रकृतिस्वरत्वं ॥ ४ ॥

पञ्चमीमृचमाह ऋतेन याविति। यौ मित्रावरुणौ ऋतेन सत्यवचनेन यजमानानुग्रहकारिणौ, ऋतावृधौ ऋतमवश्यम्भावितया सत्यं कर्म्मफलं तस्य वर्द्धकौ, ऋतस्य सत्यस्य प्रशस्तस्य ज्योतिषः प्रकाशस्य पती पालकौ, श्रुत्यन्तरे मित्रावरुणयोरदितिपुत्त्रत्वेन श्रुतत्वात्, द्वादशादित्येष्वन्तर्भूतत्वेन ज्योतिः पालकत्वं युक्तं, श्रुत्यन्तरे चाष्टौ पुत्रासो अदितेरित्युपक्रम्य मित्रश्च वरुणश्चेत्यादिकमाम्नातं। ता मित्रावरुणा तथाविधौ मित्रावरुणौ हुवे आह्वयामि। ऋतावृधौ, वृधु वृद्धौ, क्विप् च (पां ३।२।७६।) इति क्विप्, अन्येषामपि दृश्यते (पां ६।३।१३७।) इति दीर्घः, कृदुत्तरपदप्रकृतिस्वरत्वं। ज्योतिषः, द्युत-दीप्तौ, द्युतेरिसिन् आदेश्च ज इति इसिन्प्रत्यय औणादिकः, नित्त्वादाद्युदात्तः, षष्ठ्याः पतिपुत्र (पां ८।३।५३।) इति संहितायां विस-

१६। वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः।
करतां नः सुराधसः॥

र्जनीयस्य सत्वं। मित्रावरुणा, देवताद्वन्द्वे च (पां ६।३।२६।) इति पूर्वपदस्यानङादेशः, देवताद्वन्द्वे च (पां ६।२।१४१।) इत्युभयपदप्रकृतिस्वरत्वं, सुपां सुलुक् पूर्वसवर्णा (पां ७।१।३९।) इति पूर्वसवर्णदीर्घ आकारः। हुवे, ह्वेञ् आत्मनेपदोत्तमपुरुषैकवचने, सम्प्रसारणे, परपूर्वत्वे च कृते, बहुलं छन्दसीति शपो लुक्, टेरेत्वं, गुणे प्राप्ते, क्ङिति च (पां १।१।५।) इति निषिध्यते, उवङादेशः, तिङ्ङतिङः (पां ८।१।२८।) इति निघातः॥५॥ इति प्रथमस्य द्वितीयेऽष्टमो वर्गः॥८॥

षष्ठीमृचमाह वरुणः प्रावितेति। अयं वरुणोऽस्माकं प्राविता भुवत्, प्रकर्षेण रक्षको भवतु, मित्रश्च विश्वाभिरूतिभिः सर्वाभीरक्षाभिः प्राविता भुवत्, तावुभावपि नोऽस्मान् सुराधसः प्रभूतधनयुक्तान् करतां कुरुतां। अविता, तृचश्चित्त्वादन्तोदात्तत्वं, प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते। भुवत्, भू सत्तायां, लेट्तिप्, लेटोऽडाटौ (पां ३।४।९४।) इत्यडागमः, इतश्च लोपः परस्मैपदेषु (पां ३।४।९७।) इति इकारलोपः, बहुलं छन्दसीति शपो लुक्, गुणे प्राप्ते, भूसुवोस्तिङि (पां ७।३।८८।) इति प्रतिषेधः उवङादेशः, तिङ्ङतिङ इति निघातः। विश्वाभिः, अशुप्रुषीत्यादिना क्वन्प्रत्ययान्तो विश्वशब्द आद्युदात्तः, टाप्सुपोरनुदात्तत्वात्तदेव शिष्यते। ऊतिभिः, ऊतियूतिजूतिसातिहेतिकीर्त्तयश्चेति क्तिन्नुदात्तः। करतां, डुकृञ् करणे, भौवादिकः, लोटस्तस्, तसस्तां, कर्त्तरि शप्, गुणो रपरत्वं, शपः पित्त्वादनुदात्तत्वं, तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। सुराधसः, राध साध संसिद्धौ, राध्नोत्यनेनेति राधो धनं, शोभनं राधो येषां ते, बहुव्रीहौ प्रकृत्या पूर्वपदं (पां ६।२।१।) इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तत्वं प्राप्तं, सोर्मनसी अलोमोषसी (पां ६।२।११७।) इत्युत्तरपदाद्युदात्तत्वेन बाध्यते॥६॥

। ७ । मरुत्वन्तं हवामह इन्द्रमा सोमपीतये ।
सजूर्गणेन तृम्पतु ॥

। ८ । इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः ।
विश्वे मम श्रुता हवं ॥

सप्तमीमृचमाह मरुत्वन्तमिति, मरुत्वन्तं मरुद्भिर्युक्तमिन्द्रं, सोमपीतये सोमपानार्थं आहवामहे आह्वयामः, स चेन्द्रो गणेन मरुद्गणेन सजूः सह तृम्पतु तृप्तो भवतु । मरुत्वन्तं, मरुतोऽस्य सन्तीति मरुत्वान्, झयः (पां ८ । २ । १० । ) इति मतुपो वत्वं, तसौ मत्वर्थे (पां १ । ४ । १९ । ) इति भसञ्ज्ञया बाधितत्वाज्जश्त्वाभावः, मतुप्सुपौ पित्त्वादनुदात्तौ । ननु ह्रस्वनुड्भ्यां मतुप् (पां ६ । १ । १७६ । ) इति मतुप उदात्तत्वेन भवितव्यं, स्वरविधौ व्यञ्जनमविद्यमानवदिति तकारस्याविद्यमानवत्त्वेन ह्रस्वात् परत्वान्न ह्रस्वनुड्भ्यामित्यत्र नुड्ग्रहणसामर्थ्यादविद्यमानपरिभाषा नाश्रियत इति वृत्तावुक्तं, अतो मरुच्छब्दस्य स्वर एव शिष्यते । सजूः, जुषी प्रीतिसेवनयोः, सम्पदादिलक्षणः क्विप्, समाना प्रीतिर्यस्येति बहुव्रीहिः, समानस्य छन्दसि (पां ६ । ३ । ८४ । ) इति सभावः, ससजुषो रुः (पां ८ । २ । ६६ । ) इति रुत्वं, रोः, उपधायाश्च (पां ८ । २ । ७८ । ) इत्युपधादीर्घः, बहुव्रीहिस्वरे प्राप्ते त्रिचक्रादीनां छन्दसीत्युत्तरपदान्तोदात्तं । तृम्पतु, तृप तृम्प तृप्तौ, तुदादिभ्यः शः, शेमुचादीनां (पां ७ । १ । ५९ । ) इति नुमागमः । ७ ।

अष्टमीमृचमाह इन्द्र ज्येष्ठा इति । हे देवासः, इन्द्रमरुद्रूपाः, विश्वे सर्वे यूयं, मम हवमाह्वानं श्रुत शृणुत । कीदृशाः इन्द्रज्येष्ठाः, इन्द्रो ज्येष्ठो मुख्यो येषु तथाविधा मरुद्गणा मरुत्समूहरूपाः । पूषरातयः पूषाख्यो देवो रातिर्दाता येषामिन्द्रमरुतां ते पूषरातयः । इन्द्रज्येष्ठा, आमन्त्रिताद्युदात्तत्वं, पादादित्वादनिघातः । मरुद्गणाः, विभाषितं विशेषवचने बहुवचनं (पां ८ । १ । ७३ । ) इति पूर्वस्याविद्यमानवत्त्वादनिघातः । देवासः, पूषरातयः, पूर्ववत् । श्रुता, श्रु श्रवणे, लोण्मध्यमपुरुषबहुवचनं, तस्थस्थमिपां तांतंतामः (पां ३ । ४ । १०१ । ) इति तादेशः, व्यत्ययेन शप्, बहुलं छन्दसि (पां २ । ४ । ७३ । ) इति शपो लुक् । सार्वधातुकार्द्धधातुकयोः (पां ७ । ३ । ८४ । )

। ९ । हत वृत्रं सुदानव इन्द्रेण सहसा युजा ।
मा नो दुःशंस ईशत ॥

। १० । विश्वान्देवान्हवामहे मरुतः सोमपीतये ।
उग्रा हि पृश्निमातरः ॥ ९ ॥

इति गुणे प्राप्ते, क्ङिति च (पां १।१।५।) इति प्रतिषेधः। द्व्यचोऽतस्तिङः (पां ६।३।१३५।) इति दीर्घः। एवं, ह्वेञ् स्पर्द्धायां शब्दे च, भावेऽनुपसर्गस्य (पां ३।३।७५।) इत्यप्, सम्प्रसारणं, परपूर्वत्वं, गुणावादेशौ, पित्त्वादनुदात्तत्वं, धातुस्वर एव शिष्यते ॥ ८ ॥

नवमीमृचमाह हत वृत्रमिति। हे सुदानवः शोभनदानयुक्ता मरुद्गणाः, सहसा बलवता युजा योग्येनेन्द्रेण वृत्रं शत्रुं हत नाशयत, दुःशंसो दुष्टेन शंसनेन कीर्त्तनेन युक्तो वृत्रो नोऽस्मान् प्रति मा ईशत समर्थो माभूत्। हत, हन हिंसागत्योः, लोट्, तस्थस्थमिपां (पां ३।४।१०१।) इत्यादिना तादेशः। अदिप्रभृतिभ्यः शपः (पां २।४।७२।) इति शपो लुक्। अनुदात्तोपदेश (पां ६।४।३७।) इत्यादिनानुनासिकलोपः। सुदानवः, डुदाञ् दाने, दाभाभ्यां नु रित्यौणादिको नुः प्रत्ययः, प्रादिसमासे आमन्त्रित निघातः। युजा, युजिर् योगे, ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च (पां ३।२।५९।) इति क्विन्प्रत्ययः। सावेकाचस्तृतीयादिर् (पां ६।१।१६८।) इत्यादिना तृतीयैकवचनस्योदात्तत्वं। दुःशंसः ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् (पां ३।३।१२६।) इति खल् प्रत्ययः। लिति (पां ६।१।१९३।) इति प्रत्ययात् पूर्वस्योदात्तत्वं। ईशत, ईश ऐश्वर्ये, माङि लुङ् (पां ३।३।१७५।) इति लुङि प्राप्ते, छन्दसि लुङ्लङ्लिटः (पां ३।४।६।) इति व्यत्ययेन लङ्, त आदेशः। बहुलं छन्दसि (पां २।४।७३।) इति शपो लुगभावः। नमाङ्योगे (पां ६।४।७४।) इत्यडागमाभावः, तिङ्ङतिङः (पां ८।१।२८।) इति निघातः ॥ ९ ॥

दशमीमृचमाह विश्वान्देवानिति। मरुतो मरुत्सम्बन्धान्, विश्वान् सर्वान् देवान्, सोमपीतये सोमपानार्थं, हवामहे आह्वयामः। ते मरुतः पृश्निमातरः, पृश्नेर्नानाविधवर्णयुक्ताया भूमेः पुत्राः, हि प्रसि-

११। जयतामिव तन्यतुर्मरुतामेति धृष्णुया।
यच्छुभं याथ ना नरः॥

१२। हस्काराद्विद्युतस्पर्यतो जाता अवन्तु नः।
मरुतो मृलयन्तु नः॥

अर्थः, सा च प्रसिद्धिः उग्रा इति, पृश्नेः पुत्रा इति मन्त्रान्तरादवगन्तव्या, पृश्निर्माता येषान्ते पृश्निमातरः। पृश्निशब्दो घृणिः पृश्निरित्युणादावाद्युदात्तो निपातितः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥१०॥
इति प्रथमस्य द्वितीये नवमो वर्गः ॥९॥

एकादशीमृचमाह जयतामिवेति। मरुतां देवानां तन्यतुः शब्दो धृष्णुया धार्ष्ट्ययुक्तः सन्नेति गच्छति, केषामिव, जयतां विजययुक्तानां शूराणां भटानामिव। हे नरः नेतारो मरुतः, यूयं यद्यदा शुभं शोभनं देवयजनं, ना याथ न प्राप्नुथ, तदा त्वदीयः शब्दो गच्छतीति पूर्वत्रान्वयः। तन्यतुः, तनु विस्तारे, ऋतन्यञ्जीत्यादिना यतुच् प्रत्ययः औणादिकः, प्रत्ययस्वरः। धृष्णुया, ञिधृषा प्रागल्भ्ये, त्रसि गृधि धृषि क्षिपेः क्नुः (पां ३।२।१४०।) इति क्नु प्रत्ययः, सुपां सुलुक्पूर्व (पां ७।१।३९।) इत्यादिना सोर्याजादेशः, चित्त्वादन्तोदात्तः याथ, तप्तनप्तनथनाश्च (पां ७।१।४५।) इति थनादेशः, यच्छब्दयोगान्निघाताभावः ॥११॥

द्वादशीमृचमाह हस्कारादिति। हस्काराद्दीप्तिकराद्विद्युतो विशेषेण दीप्यमानात्, अतोऽन्तरिक्षात् परि जाताः सर्वत उत्पन्ना मरुतो नोऽस्मान् अवन्तु रक्षन्तु, तथाविधा मरुतः नोऽस्मान्मृलयन्तु सुखयन्तु। हस्कारात्, हसे हसने, अत्र तु प्रकाशमात्रे वर्त्तते। अस्मात्सम्पदादिलक्षणः क्विप्, तस्मिन्नुपपदे, डुकृञ् करणे इत्यस्मात्, कर्म्मण्यण् (पां ३।२।१।) इत्यण्प्रत्ययः, तत्पुरुषे तुल्यार्थ (पां ६।२।२।) इत्यादिना पूर्वपदप्रकृतिस्वरे प्राप्ते, गतिकारकोपपदात् (पां ६।२।१३९।) इत्यादिना कृदुत्तरपदप्रकृतिस्वरत्वं, अतः कृ कमि कंस (पां ७।३।४६।) इत्यादिना विसर्ज्जनीयस्य सत्वं ॥१२॥

---

। १३ । आ पूषन् चित्रबर्हिषमाघृणे धरुणं दिवः ।
आजा नष्टं यथा पशुं ॥
। १४ । पूषा राजानमाघृणिरपगूल्हं गुहा हितं ।
अविन्दच्चित्रबर्हिषं ॥
। १५ । उतो स मह्यमिन्दुभिः षड्युक्ताँ अनुसेषिधत् ।
गोभिर्यवं न चर्कृषत् ॥ १० ॥

त्रयोदशीमृचमाह आ पूषन्निति । हे पूषन्, चित्रबर्हिषं विचित्रैर्बर्हिर्भिर्युक्तं, धरुणं यागस्य धारकं सोमं, दिव आ, द्युलोकादाहरेति शेषः । अत्र पूषा विशेष्यते, आघृणे आगतदीप्तियुक्त, तत्र दृष्टान्तः, हे आज गमनशील, यथा लोके नष्टं पशुं महारण्यादावन्वीष्य कश्चिदाहरति तद्वत् । आ घृणे, घृ क्षरणदीप्त्योरित्यस्मात्, घृणि पृश्नि पार्ष्णिचूर्णिभूर्णिरित्यादिना औणादिको निप्रत्ययो निपातितः, ऋवर्णाच्चेति वक्तव्यमिति वार्त्तिकेन णत्वं, प्रादिसमासः, आमन्त्रिताद्युदात्तत्वं । धरुणं, धृञ् धारणे, अस्मादण्यन्ताद्धातोः अर्जेर्णिलुक्चेति चकाराद्धृधातोरप्युनन्प्रत्ययः, व्यत्ययेन नित्स्वराभावे प्रत्ययस्वरः । दिवः, ऊडिदं ( पा ६ । १ । १७१ । ) इत्यादिना विभक्तेरुदात्तत्वं । आज, अज गतिक्षेपणयोः ॥ १३ ॥

चतुर्दशीमृचमाह पूषा राजानमिति । आघृणिः पूषा, राजानं सोममविन्दत् अलभत । कीदृशं राजानं, अपगूल्हं, अपगूढमत्यन्तगूढं । तत्र हेतुः, गुहाहितं गुहासदृशे दुर्गे द्युलोके स्थितं । तथा चित्रबर्हिषं । अपगूल्हं, गुह संवरणे, निष्ठा ( पा ३ । २ । १०२ । ) इति कर्मणि क्तः, हो ढः ( पा ८ । २ । ३१ । ) इति हस्य ढत्वं । झषस्तथोर्धोऽधः ( पा ८ । २ । ४० । ) इति तस्य धकारः, ष्टुत्वढलोपदीर्घाः, समासे, गतिरनन्तरः ( पा ६ । २ । ४९ । ) इति गतेः प्रकृतिस्वरत्वं । गुहा, सुपां सुलुक् ( पा ७ । १ । ३९ । ) इत्यादिना सप्तम्या लुक् । हितं, निष्ठायां दधातेर्हिरादेशः ॥ १४ ॥

पञ्चदशीमृचमाह उतो स मह्यमिन्दुभिरिति । उतो अपि च, स पूषा, मह्यं यजमानाय, इन्दुभिर्यागहेतुभिः सोमैर्युक्तान् षट् वसन्तादीनृतून्

१ १६ । अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयतां ।
पृञ्चतीर्मधुना पयः ॥

सेषिधत्, अनुक्रमेण पुनः पुनर्नयन् वर्त्तत इति शेषः। अत्र दृष्टान्तः, गोभिर्बलीवर्दैर्यवं न चर्कृषत्, न शब्द उपमार्थः, यथा यवमुद्दिश्य भूमिं प्रतिवत्सरं पुनः पुनः कर्षति तद्वत्। मह्यं, ङयि च ( पां ६।१।२१२।) इत्याद्युदात्तत्वं। इन्दुभिः, उन्दी क्लेदने, उन्देरिच्चादेरित्यौणादिक उः प्रत्ययः, उकारस्येकारादेशश्च, निदित्यनुवृत्तेराद्युदात्तत्वं। युष्मान्, दीर्घादटिसमानपादे ( पां ८।३।९।) इति संहितायां नकारस्य रुत्वं, आतोऽटिनित्यं ( पां ८।३।३।) इति सानुनासिक आकारः। सेषिधत्, षिध गत्यां, धातोरेकाचः ( पां ३।१।२२।) इति यङ्, यङोऽचि च (पां २।४।७४।इति तस्य लुक्, प्रत्ययलक्षणेन, सन्यङोः (पां ६।१।९।) इति द्विर्भावो हलादिशेषः, गुणो यङ्लुकोः ( पां ७।४।८२।) इत्यभ्यासस्य गुणः, इण्कोः ( पां ८।३।५७।) इति षत्वं, सनादित्वाद्धातुसंज्ञायां, लटः शतृ, कर्त्तरि शप्, चर्करीतं परस्मैपदमदादिवच्चेति वचनाच्छपो लुक्, नाभ्यस्ताच्छतुः(पां ७।१।७८।)इति नुमप्रतिषेधः, प्रत्ययस्वरे प्राप्ते, अभ्यस्तानामादिः ( पां ६।१।१८९।) इत्याद्युदात्तत्वं, गोभिः, सावेकाचस्तृतीयादिः ( पां ६।१।१६८।) इति भिस उदात्तत्वे प्राप्ते, न गोश्वन्साववर्ण ( पां ६।१।१८२।) इत्यादिना प्रतिषेधः। चर्कृषत्, कृष विलेखने, यङ्लुकि, द्विर्भावहलादिशेषोरदत्वचुत्वानि, रुग्रिकौ च लुकि ( पां ७।४।९१।) इत्यभ्यासस्य रुगागमः, तस्माद्यङ्लुङन्ताल्लट्तिप्, इतश्च लोपः परस्मैपदेषु ( पां ३।४।९७।) इतीकारलोपः, लेटोऽडाटौ ( पां ३।४।९४।) इत्यडागमः, अदिप्रभृतिभ्यः शपः ( पां २।४।७२।) इति शपो लुक्, लघूपधगुणे प्राप्ते, नाभ्यस्तस्याचिपिति ( पां ७।३।८७।) इत्यादिना निषेधः, तिङ्ङतिङः ( पां ८।१।२८।) इति निघातः ॥ १५ ॥ इति प्रथमस्य द्वितीये दशमो वर्गः ॥ १० ॥

अपां नप्त्रीयेष्वेकधनास्वपनीतासु स्वयमनुगच्छन्नम्बय इति द्वे अनुब्रूयात्, तृतीयया अपोदेवीरित्यनयैकधनासु हविर्धानं प्रविष्टासु स्वयमनुप्रविशेत्, तथैव सूचितं, अम्बयो यन्त्यध्वभिरिति तिस्र उत्तमयानुप्रपद्येत इति, अस्मिंस्तृचे प्रथमां सूक्तं षोडशीमृचमाह अम्बयो यन्तीति।

१७। अमूर्या उप सूर्य्ये याभिर्वा सूर्य्यः सह।
ता नो हिन्वन्त्वध्वरं ॥

अध्वरीयतामध्वरमात्मन इच्छतामस्माकं अम्बयो मातृस्थानीया आपः, तथाच कौषीतकिब्राह्मणे समाम्नायते अम्बयो यन्त्यध्वभिरित्यापो वा अम्बय इति, ता आपः, अध्वभिर्देवयजनमार्गैर्यन्ति गच्छन्ति। कीदृश्य आपः, जामयो हितकारिण्यो बन्धवः। तथा मधुना माधुर्य्यरसेन युक्तं पयः पृञ्चतीर्गवादिषु योजयन्त्यः। अम्बयः, इति लवि अवि शब्दे, एतस्मादच इरित्यौणादिक इ प्रत्ययप्रकरणे ऽम्बशब्दो बाहुलकादिप्रत्ययान्तः, प्रत्ययस्वरः। अध्वभिः, अदेर्धश्चेति चौणादिकः क्वनिप्, दकारस्य धकारश्च, पित्त्वात्प्रत्ययस्यानुदात्तत्वे प्राप्ते धातुस्वरः। जामयः, जमु झमु अमु अदने, बाहुलकादिः प्रत्ययः। अध्वरीयतां, अध्वरशब्दात्, सुप आत्मनः क्यच् (पां ३। १। ८।) इति क्यच्, क्यचि च (पां ७। ४। ३३।) इति ईत्वं, अपुत्रादीनामिति वक्तव्यमिति वचनात्, न छन्दस्यपुत्रस्य (पां ७। ४। ३५।) इति ईत्वनिषेधाभावः, सर्व्वे विधयश्छन्दसि विकल्प्यन्त इति परिभाषया, कव्यध्वरपृतनस्य (पां ७। ४। ३९।) इत्यकारलोपोऽपि न भवति, क्यच्प्रत्ययान्तधातोर्लटः शतृ, शपः पित्त्वादनुदात्तत्वं, शतुश्च लसार्वधातुकस्वरेण तयोः क्यजा सहैकादेशः, एकादेश उदात्तेनोदात्तः (पां ८। २। ५।) इत्यन्तोदात्तत्वे सति, शतुरनुमो नद्यजादी (पां ६। १। १७३।) इति षष्ठ्या उदात्तत्वं। पृञ्चतीः, पृची सम्पर्के, लटः शतृ, रुधादिभ्यः श्नम्, श्नसोरल्लोपः (पां ६। ४। १११।) इत्यकारलोपः, अनुस्वारपरसवर्णौ, उगितश्च (पां ४। १। ६।) इति ङीप्, वा छन्दसि (पां ६। १। १०६।) इति पूर्वसवर्णदीर्घत्वं, शतुरनुमो नद्यजादी (पां ६। १। १७३। इति ङीप उदात्तत्वं॥ १६॥

सप्तदशीमृचमाह अमूर्या इति। या अमूरापः सूर्य्ये उप समीपेनावस्थिताः, आपः सूर्य्ये समाहिता इति श्रुत्यन्तरात्, वा अथवा सूर्य्यो याभिरद्भिः सह वर्त्तते, पूर्वत्रापां प्राधान्यं, उत्तरत्र तु सूर्य्यस्येति विशेषः, तास्तादृश्य आपो, नो ऽस्मदीयमध्वरं यागं हिन्वन्तु प्रीणयन्तु। याभिः, साववेकाचः (पां ६। १। १६८।) इत्यादिना प्राप्तस्य विभक्त्युदात्तस्य, न गोश्वन् साववर्ण (पां ६। १। १८२।) इत्यादिना प्रतिषेधः। शेषानुप्रक्रिया स्पष्टा॥ १७॥

। १८ । अपो देवीरुपह्वये यत्र गावः पिबन्ति नः ।
सिन्धुभ्यः कर्त्वं हविः ॥
। १९ । अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये ।
देवा भवत वाजिनः ॥
। २० ॥ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निञ्च विश्वशम्भुवमापश्च विश्वभेषजीः ॥ ११ ॥

अष्टादशीमृचमाह अपो देवीरिति । नोऽस्मदीया गावो, यत्र यास्वप्सु पिबन्ति पानं कुर्वन्ति, ता अपो देवीरुपह्वये आह्वयामि, सिन्धुभ्यः स्यन्दनशीलाभ्योऽद्भ्यो देवताभ्यो हविः कर्त्वं अस्माभिः कर्त्तव्यं । अपः, ऊडिदं ( पां ६ । १ । १७१ । ) इत्यादिना शस उदात्तत्वं । पिबन्ति, पा पाने, पा घ्रा ध्मा स्था म्ना दाण् (पां ७ । ३ । ७८ ।) इत्यादिना पिबादेशः, शपः पित्त्वादनुदात्तत्वं, तिङश्च लसार्वधातुकस्वरेणाद्युदात्तत्वं, निपातैर्यद्यदिहन्त ( पां ८ । १ । ३० । ) इत्यादिना निघाताभावः । कर्त्वं, डुकृञ् करणे, कृत्यार्थे तवैकेन्केन्यत्वनः ( पां ३ । ४ । १४ । ) इति कर्म्मणि त्वन् प्रत्ययः, गुणः, नित्स्वरेणाद्युदात्तत्वं । १८ ।

एकोनविंशीमृचमाह अप्स्वन्तरमिति । अप्सु जलेषु अन्तर्मध्येऽमृतं पीयूषं वर्त्तते, तस्याब्विकारत्वात्, अमृतं वा आपः इति श्रुत्यन्तराच्च, तथैवाप्सु भेषजमौषधं वर्त्तते, क्षुद्रोगनिवर्त्तकस्यान्नस्याप्कार्य्यत्वात्, उत अपि च, तादृशीनामपां देवतानां प्रशस्तये प्रशंसार्थं, हे देवा ऋत्विगादयो ब्राह्मणाः, एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा इतिश्रुत्यन्तरात्, वाजिनो वेगवन्तो भवत, शीघ्रं स्तुतिं कुरुतेत्यर्थः । अप्सु, ऊडिदं ( पां ६ । १ । १७१ । ) इत्यादिना सप्तम्या उदात्तत्वं, संहितायां, उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ( पां ८ । २ । ४ । ) इति स्वरितत्वं । अमृतं, नञो जरमरमित्रमृताः ( पां ६ । २ । ११६ । ) इत्युत्तरपदाद्युदात्तत्वं । प्रशस्तये, तादौ च निति ( पां ६ । २ । ५० । ) इत्यादिना गतेः प्रकृतिस्वरत्वं । भवत, आमन्त्रितं पूर्वमविद्यमानवत् ( पां ८ । १ । ७२ । ) इति पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वेन पादादित्वादनिघातः । १९ ।

कारीरेष्टावुक्तमाज्यभागस्याप्सु म इत्येषानुवाक्या, वर्षकामेष्टिःकारी-

॥२१॥ आपः पृणीत भेषजं वरूथं तन्वे३ मम।
ज्योक् च सूर्य्यं दृशे॥२१॥

रीति खण्डेऽप्स्वग्ने सधिष्टव अप्सु मे सोमोऽब्रवीदिति सूचितं, तामेतां सूक्ते विंशीमृचमाह अप्सु म इति। अप्सु जलेषु अन्तर्मध्ये विश्वानि भेषजा सर्वाणि औषधानि सन्तीति, मे मह्यं मन्त्रदर्शिने मुनये सोमो देवोऽब्रवीत्, तथा विश्वशम्भुवं सर्वस्य जगतः सुखकरमेतन्नामकमग्निं चाप्सु वर्त्तमानं सोमोऽब्रवीत्, तथाच तैत्तिरियाः, अग्ने स्त्रयोज्यायांस इत्यनुवाके सोऽपः प्राविशदित्यग्नेरप्सु प्रवेशमामनन्ति, लतागुल्मवृक्ष-तृणादीनामौषधानां वृष्टिजन्यत्वेन जलवर्त्तित्वं प्रसिद्धं, विश्वभेषजी-र्विश्वानि भेषजानि यासु तथाविधा आपोऽब्रवीत्। भेषजा, सुपां सुलुक् (पां ७।१।३९।) इत्यादिना आकारः। विश्वशम्भुवं, भवतेरन्तर्भावि-तण्यर्थात् क्विप्, व्यत्ययेन पूर्वपदप्रकृतिस्वरत्वं, यद्वा, विश्वे सर्वेऽपि व्यापाराः सुखकरा यस्येति बहुव्रीहौ विश्वं संज्ञायां (पां ६।२।१०६।) इति पूर्वपदान्तोदात्तत्वं, आपः, कर्म्मणि शसि प्राप्ते व्यत्ययेन जस्, अप्तृन्तृच् (पां ६।४।११।) इत्यादिनोपधादीर्घः। विश्वभेषजीः, विश्वशम्भुरिति वत्॥२०॥ इति प्रथमस्य द्वितीये एकादशो वर्गः॥११॥

एकविंशीमृचमाह आपः पृणीतेति। हे आपो, मम तन्वे शरीरार्थं, वरूथं रोगनिवारकं भेषजमौषधं पृणीत पूरयत, च किञ्च ज्योक् चिरं सूर्य्यं दृशे द्रष्टुं, नीरोगा वयं शक्नुयामेति शेषः। पृणीत, पॄ पालनपूरणयोः, लोण्मध्यमपुरुषबहुवचनं च, तस्य, तस्थस्थमिपान्ताम् तम् तामः (पां ३।४।१०१।) इति तादेशः, क्र्यादिभ्यः श्ना, प्वादीनां ह्रस्वः, ईहल्यघोः (पां ६।४।११३।) इति ईत्वं, ऋवर्णाच्चेति वक्तव्यमितिवार्त्तिकेन णत्वं, सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति परिभाषया तिङ्स्वरः शिष्यते, आप इत्यस्यामन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वे पादादित्वान्निघाताभावः। वरूथं, वृञ् वरणे, जॄवृञ्भ्यामूथन्नित्यौणादिक ऊथन्प्रत्ययः, नित्त्वादाद्युदात्तः। तन्वे, ङिति ह्रस्वश्च (पां १।४।६।) इति नदीसंज्ञा, पाक्षिकीत्याडागमाभावः, उदात्तयणो हल्पूर्व्वात् (पां ६।१।१७४।) इति विभक्त्युदात्तत्वे प्राप्ते व्यत्ययेन, उदात्तस्वरितयोर्यणः (पां ८।२।४।) इत्यादिना स्वरितत्वं। दृशे, दृशे विख्ये च (पां ३।४।११।) इति तुमर्थे निपात्यते॥२१॥

। २२ ॥ इदमापः प्रवहत यत्किञ्च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतं ॥
। २३ ॥ आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आगहि तं मा संसृज वर्चसा ॥

पशौ मार्जने इदमापः प्रवहतेत्येषा विनियुक्ता, कृतायां वपाया-मिति खण्डे सूचितं, इदमापः प्रवहतेति, एषैव अवभृतेऽष्टौ स्नाने विनि-युक्ता, पत्नीसंयाजैश्चरित्वेति खण्डे इदमापः प्रवहत सुमित्रियान आप ओषधयः सन्त्विति सूचितं, तामेतां सूक्ते द्वाविंशीमृचमाह इदमाप प्रवहतेति । मयि यजमाने यत्किञ्च दुरितं अज्ञाननिष्पन्नं, वा अथवा अहं यजमानः, अभिदुद्रोह सर्वतो बुद्धिपूर्वकं द्रोहं कृत-वानस्मि, वा अथवा शेपे साधुजनं शप्तवानस्मि, इति यदस्ति, उत अपि च अनृतमुक्तवानिति यदस्ति, तदिदं सर्वमपराधजातं प्रवहत मत्तोऽपनीय प्रवाहेणान्यतो नयत । मयि, मपर्य्यन्तस्य, त्वमावेकवचने (पां ७।२।९७।) इति मादेशे कृते, अतो गुणे (पां ६।१।९७।) इति पररूपे च सति, योऽचि (पां ७।२।८९।) इति दकारस्य यकारादेशः, एकादेशस्वरेण मकारात् परस्याकारस्योदात्तत्वं । दुद्रोह, द्रुह जिघांसायां, णलि, गुणे, द्विवचनह्रस्वहलादिशेषाः, लिति (पां ६।१।१९३।) इति प्रत्ययात् पूर्वस्योदात्तत्वं, यद्वृत्तान्नित्यं (पां ८।१।६६।) इति यद्वृत्तयोगान्निघाताभावः। शेपे, शप आक्रोशे, लिटि व्यत्ययेन तङ्, उत्तमैकवचनमिट्, टेरेत्वं, अत एकहल्मध्येऽना-देशादेर्लिटि (पां ६।४।१२०।) इत्येत्वाभ्यासलोपौ, प्रत्ययस्व-रेणान्तोदात्तत्वं, पूर्ववन्निघाताभावः ॥ २२ ॥

पश्चावाहवनीयोपस्थाने आपो अद्यान्वचारिषमित्येषा, मनोतायै सम्प्रेषित इति खण्डे सूचितं, एत्योपतिष्ठन्ते आपो अद्यान्वचारिषमिति, तामेतां सूक्ते त्रयोविंशीमृचमाह आपो अद्यान्वचारिषमिति। अद्यास्मि-न्दिने अवभृथार्थमापोऽन्वचारिषं जलान्यनुप्रविष्टोऽस्मि, प्रविश्य च रसेन जलसारेण समगस्महि सङ्गताः स्मः, हे अग्ने, पयस्वान् जलेन वर्त्तमानत्वेन पयोयुक्तस्त्वमागहि अस्मिन् कर्म्मण्यागच्छ, तं मा तादृशं स्नातं मां वर्चसा तेजसा संसृज संयोजय । आपः, कर्म्मणि शसि

॥२४॥ सं माग्ने वर्चसा सृज सं प्रजया समायुषा।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः॥१२॥

प्राप्ते व्यत्ययेन जस्। अचारिषं, चर गत्यर्थः, लुङि, च्लेः सिच् (पां ३।१।४४।) इति च्लेः सिच्, आर्द्धधातुकस्येड्वलादेः (पां ७।२।३५।) इति इट्, नेटि (पां ७।२।४।) इति वृद्धिप्रतिषेधे प्राप्ते, तदपवादतया, अतो ल्रान्तस्य (पां ७।२।२।) इत्युपधाया वृद्धिः। अगस्महि, समो गमृच्छिभ्यां (पां १।३।२९।) इत्यात्मनेपदं, च्लेः सिच्, मन्त्रेघसह्वरणशवृदह (पां २।४।८०।) इत्यादिना च्लेर्लुग-भावश्छान्दसः, एकाच उपदेशेऽनुदात्तात् (पां ७।२।१०।) इतीट्-प्रतिषेधः, वागमः, (पां १।२।१३।) इति सिचः कित्त्वात्, अनुदात्तो-पदेश वनतितनोत्यादीनां (पां ६।४।३७।) इत्यादिनानुनासिक-लोपः। गहि, लोटि गमेः सिपो हि, अपित्त्वेन ङित्त्वात्, अनुदात्तो-पदेशेत्यादिनानुनासिकलोपः, अतो हेः (पां ६।४।१०५।) इति हेर्लुङ् न भवति, असिद्धवदत्राभात् (पां ६।४।२२।) इति मलोप-स्यासिद्धत्वात् ॥२३॥

चतुर्विंशीमृचमाह सं माग्न इति। हे अग्ने, वर्चःप्रजायुर्भिर्मां संयोजय, देवाः सोमपातारः, अस्य मे यजमानस्य विद्युरनुष्ठानं जानीयुः, किञ्च इन्द्रश्च ऋषिगणैः सह ममानुष्ठानं विद्याज्जानीयात्। विद्युः, विद ज्ञाने, लिङि झेर्जुस्, यासुट्, लिङः सलोपः (पां ७।२।७९।) इति सकारलोपः, उस्यपदान्तात् (पां ६।१।९६।) इति पररूपत्वं, यासुट उदात्तत्वेनैकादेश उकारोऽप्युदात्तः। अस्य, इदमो-ऽन्वादेशेऽशनुदात्तस्तृतीयादौ (पां २।४।३२।) इत्यशनुदात्तः, विभ-क्तिरपि सुप्त्वेनानुदात्ता। सह ऋषिभिरित्यत्र, ऋत्यकः (पां ६।१।१२८।) इति प्रकृतिभावः ॥२४॥ इति प्रथमस्य द्वीतीये द्वादशो वर्गः ॥१२॥

## अथ षष्ठोऽनुवाकः।

### चतुर्विंशसूक्तं।

१।१ कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य
नाम । को नो मह्या अदितये पुनर्दात् पितरञ्च
दृशेयं मातरञ्च ॥

प्रथममण्डलस्य षष्ठेऽनुवाके सप्त सूक्तानि। तत्र कस्य नूनमिति पञ्चदशर्चं प्रथमं सूक्तं, अजीगर्त्तपुत्रस्य शुनःशेफस्यार्षं, त्रैष्टुभं, अभि त्वा देवेति तृचो गायत्रः, आद्यायाः कायीत्यभिनिवक्तत्वात् प्रजापतिर्देवता, अग्नेर्वयमित्यस्याग्निः, अभि त्वा देवेत्यस्य तृचस्य सविता, भगभक्तस्येत्येषा भगदेवताका वा, शेषा वारुण्यः। तथा चानुक्रान्तं, कस्य पञ्चोनाजीगर्त्तिः शुनः शेफः सकृत्रिमो वैश्वामित्रो देवरातो वारुणन्तु त्रैष्टुभमादौ काय्याग्नेय्यौ, सावित्रस्तृचो गायत्रोऽस्यान्त्याभागी वेति। राजसूयेऽभिषेचनीयेऽहनि मरुत्वतीये परिसमाप्ते सति एतदादिकं सूक्तसप्तकमभिषिक्तस्य पुत्रादिभिः परिवृतस्य राज्ञः पुरस्ताद्धोत्रा आख्यातव्यं, तथाच सूत्रेऽभिहितं, संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौनःशेफमाचष्टेतीति। ब्राह्मणमभवति, तदेतत् परं ऋक्शतगाथं शौनः शेफमाख्यानं तद्धोता राज्ञेऽभिषिक्तायाचष्टे, हिरण्यकशिपावासीन आचष्टे, हिरण्यकशिपावासीनः प्रतिगृणातीति। तस्मिन् सूक्ते प्रथमामृचमाह कस्य नूनमिति। कस्येत्यनयर्चा शुनःशेफो यूपे बद्धः कान्दिशीकः कन्देवमुपधावानीति विचिकित्सति, तथाचाम्नायते, हन्ताहं देवता उपधावानीति, स प्रजापतिमेव प्रथमं देवतानामुपससारेति, वयं शुनः शेफनामका अमृतानां देवानां मध्ये कतमस्य किञ्जातीयस्य च देवस्य चारु शोभनं नाम मनामहे उच्चारयामः, को देवो मां मुमूर्षुं पुनरपि मह्यै महत्यै अदितये पृथिव्यै दात् दद्यात् तेन दानेनाहमनृतः सन् पितरं मातरञ्च दृशेयं पश्येयं। कतमस्य, किं शब्दात्, वा बहूनां जाति परिप्रश्ने डतमच् (पां ५।३।९३।) इति डतमच् प्रत्ययः, चितः (पां ६।१।१६३।) इत्यन्तोदात्तत्वं, अमृतानां,

। २ । अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम । स नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च ॥

। ३ । अभि त्वा देव सवितरीशानं वार्य्याणां । सदावन्भागमीमहे ॥

नञ्सुभ्यां ( पां ६ । २ । १७२ । ) इत्युत्तरपदान्तोदात्तत्वे प्राप्ते, नञो जरमरमित्रमृताः ( पां ६ । २ । ११६ । ) इत्युत्तरपदाद्युदात्तत्वं । मनामहे, मन ज्ञाने, व्यत्ययेन शप्, पादादित्वादनिघातः। मह्यै, उदात्तयणो हल्पूर्वात् ( पां ६ । १ । १७४ । ) इति विभक्तेरुदात्तत्वं । दात्, गातिस्था ( पां २ । ४ । ७७ । ) इति सिचो लुक्, बहुलं छन्दस्यमाङ्योगेऽपि ( पां ६ । ४ । ७५ । ) इत्यडागमाभावः। दृशेयं, दृशिर् प्रेक्षणे, आशीर्लिङि मिपोऽम्, दृशेरग्वक्तव्य इति वार्त्तिकेनाक्प्रत्ययः, अङोऽपवादः, कित्त्वाल्लघूपधगुणाभावः, लिङ्याशिष्यङ् ( पां ३ । १ । ८६ । ) इत्यङ् न हि, ऋदृशोऽङि गुणः ( पां ७ । ४ । १६ । ) इति गुणः स्यात्, यासुट्सलोपः, अतो येयः ( पां ७ । २ । ८० । ) इति इयादेशः, आद्गुणः ( पां ६ । १ । ८७ ) इति गुणः, यासुट्स्वरेणैकार उदात्तः । मातरं चेत्यत्र चशब्दाद्दृशेयमित्यनुषज्यते, अतस्तदपेक्षयैषा तिङ्विभक्तिः प्रथमेति. चवायोगे प्रथमा ( पां ८ । १ । ५९ । ) इति न निहन्यते ॥ १ ॥

द्वितीयामृचमाह अग्नेर्वयमिति । इत्थं प्रथमयर्चा विचिकित्सां कृत्वा प्रजापतेः सकाशात् तं देवमग्निमिष्ट्वानया तुष्टाव । तथा च श्रूयते, तं प्रजापतिरुवाचाग्निर्देवानां नेदिष्ठस्तमेवोपधावेति, सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चेति पूर्ववद्योजना। दात्, ददातु, दृशेयं पश्यामीत्येवमाशीःपरत्वेन पदद्वयं योज्यं ॥ २ ॥

प्रथमे छन्दोमे वैश्वदेवशस्त्रे अभि त्वा देव सवितरिति सावित्रस्तृचः सूक्तस्थानीयः । अथ छन्दोमा इति खण्डे अभित्वा देव सवितः प्रेतां यज्ञस्य शम्भुवेति सूत्रितं, अभित्वेत्येषा अग्निमन्थनेऽपि विनियुक्ता, प्रातर्वैश्वदेवमिति खण्डे अभित्वादेवसवितर्मही द्यौः पृथिवी च न इति सूत्रितं । श्रूयते च, अभित्वा देव सवितरिति सावित्रीमन्वाहेति । तथा प्रवर्ग्येऽप्येषैव विनियुक्ता । अथोत्तर इति खण्डेऽभित्वा देव

। ४ । यश्चिद्धि त इत्था भगः शशमानः पुरा निदः।
अद्वेषो हस्तयोर्दधे॥

सवितः समीवत्सद्मसाद्भिरिति सूचितं। तथा ग्रावस्तोत्रेऽपि
एतस्मिन् काले ग्रावस्तुदिति खण्डे मध्यमस्वरेणेदं सवनमभित्वा देव-
सवितरिति सूचितं, तामेतां सूक्ते तृतीयामृचमाह अभित्वा देव
सवितरिति। अग्निना प्रेरितः सन् सवितारमभित्वेत्यनेन तृचेन
प्रार्थयते, तथैव श्रूयते तमग्निरुवाच सविता वै प्रसवानामीशे, तमे-
वोपधावेति, सवितारमुपससाराभित्वा देवसवितरित्यनेन तृचेनेति।
हे सदावन् सर्वदा रक्षक, हे सवितर्देव वार्य्याणां वरणीयानां धनाना-
मीशानं स्वामिनं त्वां प्रति भागं भजनीयं धनं अभि सर्वत ईमहे
याचामहे। ईशानं, ईश ऐश्वर्य्ये, लटः शानच्, तास्यनुदात्तेन्ङिद-
दुपदेशात् ( पां ६।१।१८६।) इति लसार्वधातुकानुदात्तत्वे धातु-
स्वरः। वार्य्याणां, वृञ् सम्भक्तौ, ऋहलोर्ण्यत् ( पां ३।१।१२४।)
इति ण्यत्प्रत्ययः, ईडवन्दवृशंसदुहां ण्यतः ( पां ६।१।२१४।) इत्या-
द्युदात्तत्वं। अवन्, आमन्त्रितनिघातः। भागं, कर्षात्वतः ( पां ६।१।
१५९।) इति घञन्त उदात्तः॥ ३॥

चतुर्थीमृचमाह यश्चिद्धि त इति। हे सवितर्यो भगो भजनीयो
धनविशेषस्ते तव हस्तयोर्दधे धृतोऽभूत्, तद्धनविशेषमीमह इति
पूर्वत्रान्वयः। चिच्छब्दः पूजार्थे, हिशब्दः प्रसिद्धौ, धनस्य पूज्यत्वं
सर्वत्र प्रसिद्धं, तामेव पूज्यत्वप्रसिद्धिं विशदयति, इत्था शशमानोऽनेन
प्रकारेण शस्यमानः स्तूयमानः, धनस्तुतिप्रकारञ्च सर्वे जानन्ति।
ननु स्वकीये धने वैरिभिरपहृते सति वैरिगृहीतं धनं सर्वो लोको
निन्दति द्वेष्टि च, अतो धनस्तुतिर्न नियतेत्याशङ्क्याह निदःपुरा अद्वेषः,
निन्दायाः पूर्वं स्वकीयत्वेन व्यवस्थिते सति तदानीं द्वेषरहितः, तस्मा-
त्स्वकीयत्वाभिप्रायेण स्तूयमानत्वमुक्तमित्यर्थः। इत्था, प्रकारवचने,
इदमस्थमुः ( पां ५।३।२४।) इति थमुः, सुपां सुलुक् पूर्वसवर्णा
(पां ७।१।३९।) इत्यादिना विभक्तेर्डादेशः, टिलोपः, उदात्तनिवृत्ति-
स्वरेणाकार उदात्तः। शशमानः, शश प्लुतगतौ, इह स्तुत्यर्थः, ताच्छील्य-
वयोवचनशक्तिषु चानश् (पां ३।२।१२९।) इति ताच्छीलिकश्चानश्,
कर्त्तरि शप्, पितः ( पां ६।१।१९३।) इत्यन्तोदात्तत्वं। निदः,

। ५ । भगभक्तस्य ते वयमुदशेम तवावसा ।
मूर्द्धानं राय आरभे ॥ १३ ॥
। ६ । न हि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त
आपुः । नेमा आपो अनिमिषं चरन्तीर्न ये
वातस्य प्रमिनन्त्यभ्वं ॥

त्विदि कुत्सायां, सम्पदादिलक्षणः क्विप्, सावेकाचः (पां ६।१।१६८।) इत्यादिना पञ्चम्या उदात्तत्वं। अद्वेषः, न विद्यते द्वेषोऽस्येति बहुव्रीहौ, नञ्सुभ्यां (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तत्वं। दधे, कर्म्मणि लिट्, तस्यार्द्धधातुकत्वेन, अभ्यस्तानामादिः (पां ६।१।१८९।) इत्याद्युदात्तो न भवति, प्रत्ययस्वर एव शिष्यते, यद्वृत्तान्नित्यं (पां ८।१।६६।) इति यद्वृत्तयोगान्निघाताभावः ॥ ४ ॥

पञ्चमीमृचमाह भगभक्तस्य त इति। हे सवितस्ते त्वदीया वयं शुनःशेपनामानो भगभक्तस्य धनेन संयुक्तस्य तवावसा रक्षणेन उदशेम उत्कर्षेण व्याप्नुमः, किं कर्त्तुं रायो धनस्य मूर्द्धानमुत्कर्षमारभे प्रारब्धुं धनिकत्वप्रसिद्ध्या व्याप्ता भूयामेत्यर्थः। भगशब्दो वृषादित्वादाद्युदात्तः, तृतीया कर्म्मणि (पां ६।२।४८।) इति पूर्वपदप्रकृतिस्वरत्वं। अशेम, अशू व्याप्तौ, लिङ्, व्यत्ययेन परस्मैपदं शप्। रायः, ऊडिदम्पदाद्यप्पुम् (पां ६।१।१७१।) इत्यादिना षष्ठ्या उदात्तत्वं। आरभे, कृत्यार्थे तवैकेन् (पां ३।४।१४।) इत्यादिना तुमर्थे केन्प्रत्ययः, नित्स्वरेणाद्युदात्तत्वं ॥ ५ ॥ इति प्रथमस्य द्वितीये त्रयोदशो वर्गः ॥ १३ ॥

षष्ठीमृचमाह न हि ते क्षत्रमिति। अथ सविता प्रेरितः शुनःशेप एतदादिसूक्तशेषेण उत्तरेण च सूक्तेन वरुणं तुष्टाव। तथाच श्रूयते तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोपधावेति, स वरुणराजानमुपससारात उत्तराभिराभिरेकत्रिंशतेति। हे वरुण पतयन्तः प्रौढि वियत्युत्पतन्तोऽमी दृश्यमाना वयश्चन श्येनादयः पक्षिणोऽपि ते क्षत्रं त्वदीयं शरीरबलं नह्यापुर्नैवप्राप्ताः, त्वत्सदृशं शरीरबलं पक्षिणामपि नास्तीत्यर्थः, तथा सहस्त्वदीयं पराक्रमं तव सामर्थ्यमपि नापापुः, तथा मन्युं त्वदीयं कोपमपि नापापुः, त्वयि क्रुद्धे सति सोढुमशक्ता इत्यर्थः। अनिमिषं सर्वदा चरन्तीः प्रवाहरूपेण गच्छन्त्य

। ७ । अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः । नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥

आपस्त्वदीयं बलं नाप्रापुः, वातस्य वायोर्ये गतिविशेषास्त्वदीयमभ्वं वेगं न प्रमिनन्ति न हिंसन्ति, अतिक्रमं कर्त्तुं न शक्ता इत्यर्थः, तेऽपि ना प्रापुरिति पूर्वेणान्वयः । पतयन्तः, पत्लृ गतौ, चुरादिरदन्तः, लटः शतृ, गुणायादेशौ, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे णिच्स्वरः । आपुः, आप्लृ व्याप्तौ, लिट उसि द्विर्भावहलादिशेषौ, अत आदेः (पां ७ । ४ । ७० ।) इत्यात्वं, अत्र न सद्वो न मन्युमित्यादिभिरापुरित्यस्य सम्बन्धात् तदपेक्षया प्राथम्याच्च, चादिलोपे विभाषा (पां ८ । १ । ६३ ।) इति प्रथमा तिङ्विभक्तिर्न निहन्यते । चरन्तीः, वाच्छन्दसि (पां ६ । १ । १०६ ।) इति पूर्वसवर्णदीर्घः । प्रमिनन्ति, मीञ् हिंसायां, क्र्यादिभ्यः श्ना श्नाभ्यस्तयोरातः (पां ६ । ४ । ११२ ।) इत्याकारलोपः, मीनातेर्निगमे (पां ७ । ३ । ८१ ।) इति ह्रस्वत्वं, प्रत्ययस्वरः, तिङि चोदात्तवति (पां ८ । १ । ७१ ।) इति गतिरनुदात्तः, यद्वृत्तान्नित्यं (पां ८ । १ । ६६ ।) इति यद्वृत्तयोगादनिघातः ॥ ६ ॥

सप्तमीमृचमाह अबुध्ने राजेति । पूतदक्षः शुद्धबलो वरुणो राजा अबुध्ने मूलरहितेऽन्तरिक्षे तिष्ठन् वनस्य वननीयस्य तेजसस्तूपं सङ्घं ऊर्द्धमुपरि देशे ददते धारयन्ति, नीचीनाः स्युरूर्द्धदेशे वर्त्तमानस्य वरुणस्य रश्मय इत्याध्याहार्य्यं, ते ह्यधोमुखास्तिष्ठन्ति, एषां रश्मीनां बुध्नो मूलं उपरि तिष्ठतीति शेषः, तथा सति केतवः प्रज्ञापकाः प्राणा अस्मे अस्मास्वन्तर्निहिताः स्थापिताः स्युर्मरणं न भविष्यतीत्यर्थः । अबुध्ने, न विद्यते बुध्नो मूलमस्येति बहुव्रीहौ, नञ्सुभ्यां (पां ६ । २ । १७२ ।) इत्युत्तरपदान्तोदात्तत्वं । स्तूपं ददते, ददातिर्भौवादिकः । नीचीनाः, निपूर्वादञ्चतेः, ऋत्विगदधृक् (पां ३ । २ । ५९ ।) इति क्विन्, अनिदितां (पां ६ । ४ । २४ ।) इति नलोपः, न्यच्शब्दात्स्वार्थे, विभाषाञ्चेरदिक्स्त्रियां (पां ५ । ४ । ८ ।) इति खः, आयनेयीनीयियः (पां ७ । १ । २ ।) इत्यादिना तस्य ईनादेशः, आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति वचनादीकार उदात्तः, अचः (पां ६ । ४ ।

१८१ उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥

१३८।) इत्यकारलोपे, चौ (पां ६। ३। १३८।) इति दीर्घत्वं। स्थुः, गातिस्थाघुपाभूभ्यः (पां २। ४। ७७।) इत्यादिना सिचो लुक्, आतः (पां ३। ४। ११०।) इति झेर्जुसादेशः, उस्यपदान्तात् (पां ६। १। ९६।) इति पररूपत्वं, बहुलं छन्दस्यमाङ्योगेऽपि (पां ६। ४। ७५।) इत्यडागमाभावः। अस्मे, सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः (पां ७। १। ३९।) इति सप्तम्याः शे आदेशः। निहिताः, गतिरनन्तरः (पां ६। २। ४९।) इति गतेः प्रकृतिस्वरत्वं। स्थुः, अस्तेर्लिङि, श्नसोरल्लोपः (पां ६। ४। १११।) इत्यसोऽकारलोपः॥ ७॥

अष्टमीमृचमाह उरुं हीति। वरुणो राजा सूर्याय सूर्यस्य पन्थां मार्गं उरुं विस्तीर्णं चकार। हिशब्दः प्रसिद्धौ, उत्तरायणदक्षिणायनमार्गस्य विस्तारः प्रसिद्धः। किमर्थमेवं कृतवानिति तदुच्यते, अन्वेतवा उ, अनुक्रमेणोदयास्तमयौ गन्तुमेव, तथा अपदे पादरहितेऽन्तरिक्षे पादा प्रतिधातवे, पादौ प्रक्षेप्तुं अकः मार्गं कृतवान्, पूर्वं च रथस्य मार्गः, अत्र पादयोरिति शेषः, यद्वा अपदे यूपे बद्धेन मया गन्तुमशक्ये भूप्रदेशे पादौ प्रक्षेप्तुमुपायं बन्धविमोचनरूपं करोत्वित्यर्थः। उत अपि च हृदयाविधश्चित् शत्रोरपि अपवक्ता अपवदिता निराकर्त्ता भवतु। चकार, लित्स्वरेणाकार उदात्तः, हि च (पां ८। १। ३४।) इति निघातप्रतिषेधः। पन्थां, पथिमथ्यृभुक्षामात् (पां ७। १। ८५।) इति द्वितीयायामपि व्यत्ययेनात्वं, पथिन्शब्दस्य पतस्थ चेति इनिप्रत्ययान्तत्वेनान्तोदात्तत्वे प्राप्ते, पथिमथोः सर्वनामस्थाने (पां ६। १। १९९।) इत्याद्युदात्तत्वं। अन्वेतवै, अनुपूर्वादेतेः, तुमर्थे सेसेन् (पां ३। ४। ९।) इति तवैप्रत्ययः, तवै चान्तश्च युगपत् (पां ६। २। ५१।) इत्याद्यन्तयोरुदात्तत्वं। पादा, सुपां सुलुक् (पां ७। १। ३९।) इत्याकारः। प्रतिधातवे, दधातेस्तुमर्थे सेसेनित्यादिसूत्रेण तवेन्प्रत्ययः, तादौ चनिति (पां ६। २। ५०।) इत्यादिना गतेः प्रकृतिस्वरत्वं। अकः, करोतेः, छन्दसि लुङ्लङ्लिटः (पां ३। ४। ६।)

९ शतन्ते राजन् भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु । बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मत् ॥

इति लोडर्थे लुङ्, तस्य तिप्, मन्त्रेघस इत्यादिना च्लेर्लुक्, गुणो रपरत्वं, हल्ङ्याभ्यः ( पां ६ । १ । ६८ । ) इति तिपो लोपः, अडागमः । हृदयाविधः, हृञ् हरणे, वृहोः षुक्दुकौ चेत्यौणादिकः कयन्प्रत्ययो दुगागमश्च, व्यध ताडने, क्विप्, नहिवृतिवृषिव्यधि ( पां ६ । ३ । ११६ । ) इत्यादिना पूर्वपदस्य दीर्घत्वं, कृदुत्तरपदप्रकृतिस्वरत्वं ॥ ८ ॥

नवमीमृचमाह शतन्ते राजन् भिषज इति । हे राजन् वरुण, ते तव शतं सहस्रं भिषजो बन्धनिवारकाणि शतसहस्रसङ्ख्याकान्यौषधानि वैद्या वा सन्ति, ते तव सुमतिरस्मदनुग्रहबुद्धिरुर्वी विस्तीर्णा गभीरा गाम्भीर्य्योपेता स्थिरास्तु, निर्ऋतिमस्मदनिष्टकारिणीं पापदेवतां पराचैः पराङ्मुखीं कृत्वा दूरेऽस्मत्तो व्यवहिते देशे स्थापयित्वा तां बाधस्व, कृतञ्चिदस्माभिरनुष्ठितमपि एनः पापमस्मत् प्रमुमुग्धि प्रकर्षेण मुक्तं नष्टं कुरु । सुमतिष्टे, तादौ च निति ( पां ६ । २ । ५० । ) इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते, मन्क्तिन् ( पां ६ । २ । १५१ । ) इत्यादिनोत्तरपदान्तोदात्तत्वं, संहितायां विसर्ज्जनीयस्य सकारस्य, युष्मत्तततक्षुःष्वन्तःपादं ( पां ८ । ३ । १०३ । ) इति षत्वं । बाधस्व, बाधृ विलोडने, शपः पित्त्वादनुदात्तत्वं, तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । निर्ऋतिं, तादौ च निति ( पां ६ । २ । ५० । ) इति गतेः प्रकृतिस्वरत्वं । मुमुग्धि, मुच्लृ मोक्षणे, बहुलं छन्दसीति शपः श्लुः, हुझल्भ्यो हेर्धिः ( पां ६ । ४ । १०१ । ) इति हेर्धिरादेशस्तस्यापित्त्वेन ङित्त्वात् लघूपधगुणाभावः, चोः कुः ( पां ८ । २ । ३० । ) इति कुत्वं । ९ ॥

। १० । अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुहचिद्दिवेयुः । अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ १४ ॥

दशमीमृचमाह अमी य इति । अमी राज्ञावस्माभिर्दृश्यमाना ऋक्षाः सप्त ऋषयः, तथाच वाजसनेयिन आमनन्ति, ऋक्षा इति ह स्म वै पुरा सप्त ऋषीनाचक्षत इति, यद्वा ऋक्षाः सर्वेऽपि नक्षत्रविशेषाः, ऋक्षास्तृभिरिति नक्षत्राणामिति यास्केनोक्तत्वात्, उच्चैरुपरि द्युप्रदेशे निहितासः स्थापिता ये सन्ति, ते ऋक्षा नक्तं रात्रौ ददृश्रे सर्वैरपि दृश्यन्ते, दिवा अहनि कुहचिदीयुः क्वापि गच्छेयुर्न दृश्यन्त इत्यर्थः । वरुणस्य राज्ञो व्रतानि कर्म्माणि नक्षत्रदर्शनादिरूपाणि अदब्धानि केनाप्यहिंसितानि, किञ्च वरुणस्याज्ञयैव चन्द्रमा नक्तं रात्रौ विचाकशत्, विशेषेण दीप्यमान एति गच्छति । निहितासः, आज्जसेरसुक् ( पां ७ । १ । ५० । ) इत्यसुगागमः, थाथघञ् ( पां ६ । २ । १४४ । ) इति थाथादिस्वरेणोत्तरपदान्तोदात्तत्वे प्राप्ते, गतिरनन्तरः ( पां ६ । २ । ४९ । ) इति गतेः प्रकृतिस्वरत्वं । ददृश्रे, दृशेर्लिटि, इरयोरे ( पां ६ । ४ । ७६ । ) इति रे आदेशः व्यत्ययेनाद्युदात्तत्वं, यद्वृत्तान्नित्यं ( पां ८ । १ । ६६ । ) इति यद्वृत्तयोगादनिघातः । कुह, वाह चच्छन्दसि ( पां ५ । ३ । १३ । ) इति किं शब्दादुत्तरस्य त्रलो हादेशः, कुतिहोः ( पां ७ । २ । १०४ । ) इति किं शब्दस्य कु आदेशः, स्थानिवद्भावाल्लित्स्वरेणाद्युदात्तत्वं । विचाकशत्, काशृदीप्त्यर्थाद्यङ्लुगन्ताच्छतृप्रत्ययः, अभ्यस्तानामादिः ( पां ६ । १ । १८९ । ) इत्याद्युदात्तत्वं, समासे कृत्स्वरः, यद्वा काशतेर्वा व्यत्ययेनोपधाह्रस्वत्वं । चन्द्रमाः, चन्द्रे मो डिदित्यौणादिकसूत्रेण चन्द्रोपपदान्माङो असिः प्रत्ययस्तस्य डित्त्वेन टिलोपः, कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते, गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वञ्चेति पूर्वसूत्रात् पूर्वपदप्रकृतिस्वरत्वमनुवर्त्तते, तेन पूर्वपदप्रकृतिस्वरः, दासीभारादित्वाद्वा पूर्वपदप्रकृतिस्वरत्वं ॥ १० ॥ इति प्रथमस्य द्वितीये चतुर्दशो वर्गः ॥ १४ ॥

११११ तत्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेलमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥

११२१ तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आविचष्टे। शुनःशेपो यमह्वद्गृभीतः सो अस्मान्राजा वरुणो मुमोक्तु ॥

एकादशिनस्य वारुणस्य पशोर्वपापुरोडाशयोस्तत्त्वायामीति द्वे ऋचौ याज्ये, सूचितञ्च, तत्त्वा यामि ब्रह्मणा वन्दमान इति द्वे अस्तभ्नाद्यामिति, वरुणप्रघासेषु वारुणस्य हविषो याज्या तत्त्वा यामीत्येषा, पञ्चम्यां पौर्णमास्यामिति खण्डे सूचितं इमं मे वरुण श्रुधि तत्त्वा यामि ब्रह्मणा वन्दमान इति। तामेतां सूक्ते एकादशीमृचमाह तत्त्वा यामीति। हे वरुण, मुमूर्षुरहं ब्रह्मणा वन्दमानो वेदेन स्तुवन्, त्वां प्रति तदायुर्यामि याचे, सर्वत्र यजमानोऽपि हविर्भिस्तदायुराशास्ते प्रार्थयते, त्वमेव कर्म्मणि अहेलमानः, अनादरमकुर्वन् बोधि, अस्मदपेक्षितं बुध्यस्व, हे उरुशंस, बहुभिः स्तुत्य, नोऽस्मदीयमायुर्मा प्रमोषीः, प्रमुषितं मा कुरु। सप्तदशसङ्ख्यकेषु याज्याकर्म्मसु इमन्तु यामीति पठितं, च शब्दलोपश्छान्दसः। अहेलमानः, हेडृ अनादरे, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे सति धातुस्वरः शिष्यते, ततो नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वं। बोधि, बुध अवगमने, लोटः सेर्हिः, बहुलं छन्दसीति विकरणस्य लुक्, वा छन्दसि (पां ३। ४। ८८।) इत्यपित्त्वाभावेन ङित्त्वाभावाल्लघूपधगुणः, झल्भ्यो हेर्धिः (पां ६। ४। १०१।) इति हेर्धिरादेशः, धातोरन्तलोपश्छान्दसः। मोषीः, मुष स्तेये, लोडर्थे छान्दसो लुङ्, वदव्रजहलन्तस्याचः (पां ७। २। ३।) इति प्राप्ताया वृद्धेः, नेटि (पां ७। २। ४।) इति प्रतिषेधे सति लघूपधगुणः, बहुलं छन्दस्यमाङ्योगेऽपि (पां ६। ४। ७५।) इत्यडभावः॥ ११॥

द्वादशीमृचमाह तदिन्नक्तमिति। तदित्तदेव वरुणविषयं स्तोत्रं, नक्तं रात्रौ, मह्यं शुनःशेपाय, आहुः, कर्त्तव्यत्वेनाभिज्ञाः कथयन्ति, तथा दिवापि तदेवाहुः, हृदस्तदीयमनसो निष्पन्नोऽयं केतः प्रज्ञाविशेषो

। १३ । शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः । अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो विमुमोक्तु पाशान् ॥

ऽपि तदेव कर्तव्यत्वेनाविचष्टे, सर्वतो विशेषेण प्रकाशयति । गृभीतो गृहीतो यूपबद्धः शुनःशेप एतन्नामको जनो यं वरुणमह्वत् आहूतवान्, स वरुणो राजा अस्मान् शुनःशेपान् मुमोक्तु, बन्धान्मुक्तान् करोतु । मह्यं, ङयि च ( पां ६ । १ । २१२ । ) इत्याद्युदात्तत्वं । आहुः, ब्रुवः पञ्चानां ( पां ३ । ४ । ८४ । ) इत्यादिना ब्रुवो लटि झेरुसादेशः, धातोराहादेशश्च । हृदः, पद्दन्नोमास्हृन्निश ( पां ६ । १ । ६३ । ) इत्यादिना हृदयशब्दस्य हृदादेशः, ऊडिदम्पदाद्यप्पुम् ( पां ६ । १ । १७१ । ) इति पञ्चम्या उदात्तत्वं । शुनःशेपः, श्वन्नुक्षन्नित्यौणादिक-कनिन्प्रत्ययान्तः श्वन्शब्दः, शीङ्शीभ्यां रूपस्वाङ्गयोः पुट् चेत्यौणादिकः सपुडागमाद्यन्तः शेपशब्दः, शुन इव शेपो यस्येति समासे, शेपपुच्छलाङ्गूलेषु शुनः संज्ञायां षष्ठ्या अलुग्वक्तव्य इति वार्त्तिकेन षष्ठ्या अलुक्, पूर्वपदप्रकृतिस्वरत्वे प्राप्ते, उभे वनस्पत्यादिषु युगपत् ( पां ६ । २ । १४० । ) इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं । अह्वत्, ह्वेञो लुङि, लिपिसिचिह्वश्च ( पां ३ । १ । ५३ । ) इति च्लेरङादेशः, आतो लोप इटि च ( पां ६ । ४ । ६४ । ) इत्याकारलोपः, अडागमः, उदात्तः, यद्वृत्तयोगादनिघातः । गृभीतः, हृग्रहोर्भश्छन्दसीति हस्य भत्वं । सो अस्मान्, प्रकृत्यान्तःपादमव्यपरे ( पां ६ । १ । ११५ । ) इति प्रकृतिभावः । मुमोक्तु, बहुलं छन्दसीति विकरणस्य श्लुः ॥ १२ ॥

त्रयोदशीमृचमाह शुनःशेपो ह्यह्वदिति । गृभीतो बन्धनाय गृहीतस्त्रिसङ्ख्याकेषु द्रुपदेषु द्रोः काष्ठस्य यूपस्य पदेषु प्रदेशविशेषेषु बद्धः शुनःशेप आदित्यं अदितेः पुत्रं यं वरुणमह्वदाहूतवान्, हि यस्मादेवं तस्मात् स वरुणो राजा एनं शुनःशेपमवससृज्यात्, अवसृष्टं बन्धनाद्विमुक्तं करोतु । विमोकप्रकार एव स्पष्टीक्रियते, विद्वान् विमोकप्रकाराभिज्ञः, अदब्धः केनाप्यहिंसितो वरुणः, पाशान् बन्धनरज्जुविशेषान् विमुमोक्तु, विच्छिद्यैनं मुक्तं करोतु । त्रिषु, षट्त्रिचतुर्भ्यो हलादिः ( पां ६ । १ । १७९ । ) इति विभक्तेरुदात्तत्वं, संहितायां,

१४१ अव ते हेलो वरुण नमोभिरवयज्ञेभिरीमहे हविर्भिः। क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ॥

उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (पां ८।२।४।) इति परआकारः स्वर्य्यते। सह्यात्, षह विसर्गे, प्रार्थनायां लिङ्, बहुलं छन्दसीति विकरणस्य लुः। विद्वान्, विद ज्ञाने, विदेः शतुर्वसुः (पां ७।१।३६।) इति शतुर्वसुरादेशः, उगिदचां (पां ७।१।७०।) इति नुम्, हल्ङ्यादिसंयोगान्तलोपौ, संहितायां, दीर्घादटिसमानपादे (पां ८।३।९।) इति नकारस्य रुत्वं, आतोऽटिनित्यं (पां ८।३।३।) इति सानुनासिक आकारः। अदब्धः, दम्भु दम्भे, निष्ठायां, अनिदितां हल उपधायाः क्ङिति (पां ६।४।२४।) इति नलोपे, झषस्तथोर्धोऽधः (पां ८।२।४०।) इति धत्वं, अव्ययपूर्वपदप्रकृतिस्वरत्वं ॥ १३ ॥

अवभृथे अवते हेड इति द्वे ऋचौ वारुणस्य हविषो याज्यानुवाक्ये, पत्नीं संयाजैश्चरित्वेति खण्डे सूत्रितं, अवते हेडो वरुण नमोभिरिति द्वे इति, तयोराद्यां सूक्ते चतुर्दशीमृचमाह अवते हेड इति। हे वरुण, ते तव हेलः क्रोधं, नमस्कारैरवेमहे अवनयाम, तथा यज्ञैः सामानुष्ठानेन युक्तैर्हविर्भिरवेमहे, वरुणं परितोष्य क्रोधमपनयामः। हे असुर, अनिष्टक्षेपणशील, प्रचेतः प्रकर्षेण प्रज्ञायुक्त, राजन् दीप्यमान, वरुण, अस्मभ्यमस्मदर्थं क्षयन् अस्मिन् कर्म्मणि निवसन्, कृतान्यस्माभिरनुष्ठितान्येनांसि पापानि शिश्रथः, श्लथितानि शिथिलानि कुरु। हेलः, असुनो नित्त्वादाद्युदात्तत्वं। यज्ञेभिः, बहुलं छन्दसीति भिस ऐसादेशाभावः। ईमहे, ईङ् गतौ, विकरणस्य लुक्। क्षयन्, क्षि निवासगत्योः, लटः शतृ, व्यत्ययेन शप आद्युदात्तत्वं। असुर, असु-क्षेपणे, असेरुरन्नित्यौणादिकसूत्रेणोरन्प्रत्ययः, आमन्त्रिताद्युदात्तत्वं। शिश्रथः, श्रथ दौर्बल्ये, चुरादिरदन्तः, छान्दसे लुङि णिः, णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् (पां ३।१।४८।) इति च्लेश्चङ्, द्विर्भावहलादिशेषौ, अग्लोपित्वात् सन्वद्भावाभावेऽपि, बहुलं छन्दसीत्यभ्यासस्येत्वं, पूर्ववदडभावः॥१४॥

।१५। उदुत्तमं वरुण पाशमस्मद्वाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम॥

पञ्चदशीमृचमाह उदुत्तममिति। हे वरुण, उत्तममुत्कृष्टं शिरसि बद्धं पाशं, अस्मदस्मत्तः उच्छ्रथाय उत्कृष्य शिथिलं कुरु, अधमं निकृष्टं पादेऽवस्थितं पाशं अवश्रथाय अवकृष्य शिथिली कुरु, मध्यमं नाभिप्रदेशगतं पाशं विश्रथाय वियुज्य शिथिलीकुरु। अथानन्तरं हे आदित्य अदितेः पुत्र वरुण, वयं शुनःशेपाः, तव व्रते त्वदीये कर्म्मणि, अदितये खण्डनराहित्याय, अनागसोऽपराधरहिताः स्याम भवेम। उत्तमं, तमपः पित्त्वादनुदात्तत्वेनाद्युदात्तत्वे प्राप्ते, उत्तमशश्वत्तमौ सर्वत्रेत्युञ्छादिषु पाठात्, उञ्छादीनाञ्च (पा ६।१।१६०।) इत्यन्तोदात्तत्वं। अधमं, अवद्यावमाधमार्वरेफाः कुत्सित इति अवतेरमच्प्रत्ययो निपातितः, वस्य धत्वञ्च। श्रथाय, श्रथ दौर्बल्ये, संहितायां छान्दसो दीर्घः। तव, युष्मदस्मदोर्ङसि (पा ६।१।२११।) इत्याद्युदात्तत्वं। अनागसः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं, नञ्सुभ्यां (पा ६।२।१७२।) इति तु व्यत्ययेन न प्रवर्त्तते, यद्वा आगश्शब्दात्, अस्मायामेधा (पा ५।२।१२१।) इत्यादिना मत्वर्थीयो विनिस्तस्य, विन्मतोर्लुक् (पा ५।३।६५।) इति लुक्, नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वं॥१५॥ इति प्रथमस्य द्वितीये पञ्चदशो वर्गः॥१५॥

---

'c 115

VOL. I.] APRIL. [No. 4.

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE PATRONAGE OF THE

Hon. Court of Directors of the East India Company,

AND THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

EDITED BY DR. E. RÖER.



माधवाचार्य्यकृतभाष्यसहित ऋग्वेदसंहितायाः
प्रथमाष्टकस्य प्रथमावधि द्वितीयाध्याय पर्य्यन्तं।

---

THE FIRST TWO LECTURES OF THE SANHITA OF THE

## RIG VEDA,

WITH THE COMMENTARY OF MÁDHAVÁCHÁRYA, AND AN ENGLISH TRANSLATION OF THE TEXT.

BY DR. E. RÖER.

FASCICULUS IV.

CALCUTTA:
PRINTED BY J. THOMAS, AT THE BAPTIST MISSION PRESS,
CIRCULAR ROAD.
1848.

## ORIENTAL SECTION—ASIATIC SOCIETY.

1848.

G. A. BUSHBY, Esq.
WELBY JACKSON, Esq.
BABU DEBENDRANÁTHA THÁKURA.
H. M. ELLIOT, Esq.
W. SETON KARR, Esq.
BABU HARÍMOHANA SENA.
BABU RÁJENDRALÁL MITTRA.
Dr. E. ROER, Secretary, Oriental Department.

### Honorary (non-resident) Members.

B. H. HODGSON, Esq., *Darjiling.*
WALTER ELLIOTT, Esq., *Madras.*
H. H. WILSON, Esq. Boden Professor of Sanscrit, *Oxford.*

## पञ्चविंशसूक्तं।

। १ । यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतं।
मिनीमसि द्यवि द्यवि ॥

। २ । मा नो वधाय हत्नवे जिहीलानस्य रीरधः।
मा हृणानस्य मन्यवे ॥

यच्चिदित्येकविंशत्यृचं द्वितीयं सूक्तं, तथा चानुक्रान्तं यच्चित्सैकेति, ऋषिश्चान्यस्मादिति परिभाषया शुनःशेप एव ऋषिः, आदौ गायत्रमिति परिभाषितत्वाद्गायत्रीछन्दः, वारुणन्त्विति पर्य्यन्तोक्तत्वात् तद्धीतादिपरिभाषया वरुणो देवता, विनियोग उक्तः शौनःशेपोपाख्याने, विशेषविनियोगस्तु अभिप्लवषडहे इदं सूक्तं होत्रकशंस्ये स्तोमनिमित्तमावापार्थः, अभिप्लवष्ठ्याहानीति खण्डे तथैव सूत्रितं, यच्चिद्धि ते विश इति वारुणमेतस्य तृचमावपेत मैत्रावरुण इति, तस्मिन् सूक्ते प्रथमामृचमाह यच्चिदिति। हे वरुण देव, यथा लोके विशः प्रजाः कदाचित् प्रमादं कुर्व्वन्ति, तथा वयमपि ते तव सम्बन्धि यच्चिद्धि यदेव किञ्चित् व्रतं कर्म्म द्यवि द्यवि प्रतिदिनं प्रमिनीमसि प्रमादेन हिंसितवन्तस्तदपि व्रतं प्रमादपरिहारेण साङ्गं कुर्व्विति शेषः। यथा, लित्स्वरेणाद्युदात्तत्वे प्राप्ते, यथेति पादान्त इति फिट्सूत्रेण सर्व्वानुदात्तत्वं। मिनीमसि, मीञ् हिंसायां, इदन्तो मसिः (पा ७।१।४६।) इति मसिः, क्र्यादिभ्यः श्ना, मीनातेर्निगमे (पा ७।३।८१।) इति ह्रस्वत्वं, ई हल्यघोः (पा ६।४।११३।) इतीकारः, सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वचनात् तिङ एव स्वरः शिष्यते, यद्वृत्तान्नित्यं (पा ८।१।६६।) इति यद्वृत्तयोगान्निघाताभावः ॥ १ ॥

द्वितीयामृचमाह मा न इति। हे वरुण, जिहीळानस्य अनादरं कृतवतो हत्नवे हन्तुः पापहननशीलस्य तव सम्बन्धिने त्वत्कर्तृकाय वधाय नोऽस्मान् मा रीरधः, संसिद्धान् विषयभूतान् मा कुरु। हृणानस्य हृणीयमानस्य क्रुद्धस्य तव मन्यवे क्रोधाय मा अस्मान् रीरधः। वधाय, हनश्च वधः (पा ३।३।७६।) इति अबन्तो वधशब्दः,

। ३ । वि मृलीकाय ते मनो रथीरश्वं न सन्दितं ।
गीर्भिर्वरुण सीमहि ।

। ४ । परा हि मे विमन्यवः पतन्ति वस्यइष्टये ।
वयो न वसतीरुप ॥

उणादिषु पाठादन्तोदात्तः । हत्नवे, हन हिंसागत्योः, कृहनिभ्यां क्तुरित्यौणादिक क्तुःप्रत्ययः, धातोर्नकारस्य तकारः। जिहीळानस्य, हेडृ अनादरे, अस्माल्लिटः कानच्, द्विर्भावहलादिशेषाः, कुत्वचुत्वजश्त्वानि, एकारस्य ईकारादेशश्छान्दसः, चितः ( पां ६ । १ । १६३ । ) इत्यन्तोदात्तत्वं। रीरधः, राध साध संसिद्धौ, चङि णिलोपः, उपधाह्रस्वत्वं, द्विर्वचनहलादिशेषह्रस्वत्वसन्वद्भावेत्वाभ्यासदीर्घाः, नमाङ्योगे ( पां ६ । ४ । ७४ । ) इत्यडभावः। हृणानस्य, हृणीङ् लज्जायां, अस्माल्लानचि पृषोदरादित्वादभिमतरूपसिद्धिः ॥ २ ॥

तृतीयामृचमाह वि मृलीकायेति। हे वरुण, मृलीकायास्मत्सुखाय ते तव मनो गीर्भिः स्तुतिभिर्विसीमहि विशेषेण बध्नीमः, प्रसादयाम इत्यर्थः, तत्र दृष्टान्तः, रथी रथस्वामी सन्दितं सम्यक् खण्डितं दूरगमनेन श्रान्तमश्वं न, अश्वमिव, यथा स्वामी श्रान्तमश्वं घासप्रदानादिना प्रसादयति तद्वत् । रथी, मत्वर्थीय ईकारः। सन्दितं, दो अवखण्डने, निष्ठा ( पां ३ । २ । १०२ । ) इति क्तः, द्यतिस्यतिमास्थामिति किति ( पां ७ । ४ । ४० । ) इति इकारादेशः, गतिरनन्तरः ( पां ६ । २ । ४९ । ) इति गतेः प्रकृतिस्वरत्वं। गीर्भिः, सावेकाचः ( पां ६ । १ । १६८ । ) इति भिस उदात्तत्वं। सीमहि, षिवु तन्तुसन्ताने, व्यत्ययेनात्मनेपदं, बहुलं छन्दसीति विकरणस्य लुक्, लोपो व्योर्वलि ( पां ६ । १ । ६६ । ) इति वलिलोपः, यद्वा षिञ् बन्धने, इत्यस्माद्विकरणस्य लुक्, दीर्घश्छान्दसः ॥ ३ ॥

चतुर्थीमृचमाह परा हीति। हे वरुण, मे मम शुनःशेपस्य विमन्यवः क्रोधरहिता बुद्धयः, वस्यइष्टये वसीयसोऽतिशयेन वसुमतो जीवितस्य प्राप्तये, परापतन्ति पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति, हिशब्दोऽभिप्रेऽर्थे सर्वजनप्रसिद्धिमाह । परापतने दृष्टान्तः, वयो न पक्षिणो यथा वसतीर्निवासस्थानानि उप सामीप्येन प्राप्नु-

। ५ । कदा क्षत्रश्रियं नरमा वरुणं करामहे ।
मृळीकायोरुचक्षसं ॥ १६ ॥
। ६ । तदित्समानमाशाते वेनन्ता न प्र युच्छतः ।
धृतव्रताय दाशुषे ॥

वन्ति तद्वत् । पतन्ति, अनुदात्तं सर्वमपादादौ ( पां ८ । १ । १८ । ) इति पादादित्वादनिघातः । वस्य इष्टये, वसुमच्छब्दात्, विन्मतोर्लुक् ( पां ५ । ३ । ६५ । ) इति मतुपो लुकि, टिलोपे प्राप्ते, ईयसुनो यकारलोपश्छान्दसः । वसतीः, शतुरनुमो नद्यजादी (पां ६ । १ । १७३ ।) इति ङीप उदात्तत्वं ॥ ४ ॥

पञ्चमीमृचमाह कदा क्षत्रश्रियमिति । मृळीकायास्मत्सुखाय वरुणं कदा कस्मिन् काले आकरामहे अस्मिन् कर्म्मण्यागतं करवाम । कीदृशं, क्षत्रश्रियं बलसेविनं । नरं नेतारं । उरुचक्षसं बहूनां द्रष्टारं । क्षत्रश्रियं, क्षत्राणि श्रयतीति क्षत्रश्रीः, क्विब्वचिप्रच्छिश्रि इत्यादिनौणादिकः क्विप्, दीर्घश्च, कृदुत्तरपदप्रकृतिस्वरत्वं । नरं, ऋदोरप् ( पां ३ । ३ । ५७ । ) इत्यबन्तत्वादाद्युदात्तः । करामहे, करोतेर्व्यत्ययेन शप् । उरुचक्षसं, चष्टेर्बहुलं शिचेत्यौणादिकोऽसुन्, शिद्भावात् ख्याञादेशाभावः ॥ ५ ॥ इति प्रथमस्य द्वितीये षोडशो वर्गः ॥ १६ ॥

षष्ठीमृचमाह तदिदिति । धृतव्रताय अनुष्ठितकर्म्मणे, दाशुषे हविर्दत्तवते यजमानाय, वेनन्ता कामयमानौ मित्रावरुणाविति शेषः, तावुभौ समानं साधारणं तदिदस्माभिर्दत्तन्तदेव हविराशाते अश्नुवाते, न प्रयुच्छतः, कदाचिदपि प्रमादं मा कुरुतः । आशाते, अश्नोतेर्लिटि द्विर्भावहलादिशेषौ, अत आदेः ( पां ७ । ४ । ७० । ) इत्यात्वं, अनित्यमागमशासनमिति वचनात्, अश्नोतेश्च (पां ७ । ४ । ७२ ।) इति नुडभावः । वेनन्ता, वेनतिः कान्तिकर्म्मा, सुपां सुलुक् (पां ७ । १ । ३९ ।) इत्यादिना द्विवचनस्याकारः । प्रयुच्छतः, युच्छ प्रमादे । दाशुषे, दाशृ दाने इत्यस्मात् । दाश्वान् साह्वान् मीढ्वांश्च (पां ६ । १ । १२ ।) इति क्वसुप्रत्ययो निपातितः, वसोः सम्प्रसारणं ( पां ६ । ४ । १३१ । ) इति सम्प्रसारणं, शासि वसि घसीनाञ्च ( पां ८ । ३ । ६० । ) इति षत्वं ॥ ६ ॥

। ७ । वेदा यो वीनां पदमन्तरिक्षेण पतताम् ।
वेद नावः समुद्रियः ॥

। ८ । वेद मासो धृतव्रतो द्वादश प्रजावतः ।
वेदा य उपजायते ॥

सप्तमीमृचमाह वेदा य इति । अन्तरिक्षेण पततामाकाशमार्गेण गच्छतां वीनां पक्षिणां पदं यो वरुणो वेदा वेद जानाति, तथा समुद्रियः समुद्रेऽवस्थितो वरुणो नावो जले गच्छन्त्याः पदं वेद जानाति, सोऽस्माद्बन्धनान्मोचयतीति शेषः । वेद, विद ज्ञाने, विदो लटो वा ( पां ३ । ४ । ८३ । ) इति तिपो णल्, लित्स्वरेणाद्युदात्तत्वं, द्व्यचोऽतस्तिङः ( पां ६ । ३ । १३५ । ) इति संहितायां दीर्घः । वीनां, नामन्यतरस्यां ( पां ६ । १ । १७७ । ) इति नाम उदात्तत्वं । पततां, शपः पित्त्वादनुदात्तत्वं । शतुश्च लसार्वधातुकस्वरेण धातुस्वरः । नावः, सावेकाचः ( पां ६ । १ । १६८ । ) इति षष्ठ्या उदात्तत्वं । समुद्रियः, समुद्राभ्राद्घः ( पां ४ । ४ । ११८ । ) इति भवार्थे घः प्रत्ययः ॥ ७ ॥

अष्टमीमृचमाह वेद मास इति । धृतव्रतः स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः, प्रजावतस्तदा तदोत्पद्यमानप्रजायुक्तान् द्वादश मासश्चैत्रादीन् फाल्गुनान्तान् वेद जानाति, यस्त्रयोदशोऽधिकमास उपजायते, संवत्सरसमीपे स्वयमेवोत्पद्यते, तमपि वेद, वाक्यशेषः पूर्ववत् । मासः, पद्दन्नोमास् ( पां ६ । १ । ६३ । ) इत्यादिना मासशब्दस्य मासित्यादेशः, ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ( पां ६ । १ । १७१ । ) इति शस उदात्तत्वं । द्वादश, द्वौ च दश चेति द्वन्द्वः, द्व्यष्टनः संख्यायां ( पां ६ । ३ । ४७ ) इत्यात्वं, संख्या ( पां ६ । २ । ३५ । ) इति सूत्रेण पूर्वपदप्रकृतिस्वरत्वं । प्रजावतः, जनी प्रादुर्भावे, प्रपूर्वाज्जनेः, जन सन खन क्रम गमो विट् ( पां ३ । २ । ६७ । ) इति विट् प्रत्ययः, विड्वनोः ( पां ६ । ४ । ४१ । ) इत्यात्वं, कृदुत्तरपदप्रकृतिस्वरत्वं, प्रजा एषां सन्तीत्यर्थे, तदस्यास्त्यस्मिन् ( पां ५ । २ । ९४ । ) इति मतुप्, मादुपधायाश्च ( पां ८ । २ । ९ । ) इति मतुपो वत्वं । उपजायते, जनेः कर्म्मकर्त्तरि लटः कर्म्मवद्भावादात्मनेपदं यक्, जनादीनामुपदेश एवात्वं वक्तव्यमिति वचनात्, अचः कर्त्तृयकि ( पां ६ । १ । १९५ । ) इत्याद्यु-

। ९ । वेद वातस्य वर्त्तनिमुरोर्ऋष्वस्य बृहतः ।
वेदा ये अध्यासते ॥

। १० । निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ॥ १७ ॥

। ११ । अतो विश्वान्यद्भुता चिकित्वाँ अभिपश्यति ।
कृतानि या च कर्त्वा ॥

दात्तत्वं, तिङि चोदात्तवति ( पां ८। १। ७१। ) इत्युपसर्गस्य निघातः, न च, तिङ्ङतिङः ( पां ८। १। २८। ) इति निघातः, यद्वृत्तान्नित्यं ( पां ८। १। ६६। ) इति प्रतिषेधात् ॥ ८ ॥

नवमीमृचमाह वेद वातस्येति । उरोर्विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतो गुणैरधिकस्य वातस्य वायोर्वर्त्तनिं मार्गं वेद, वरुणो जानाति, ये देवा अध्यासते उपरि तिष्ठन्ति तानपि वेद जानाति । वातस्य, असिहसीत्यादिनौणादिकतन्प्रत्ययान्तो वातशब्दो नित्त्वादाद्युदात्तः । वर्त्तनिं, वर्त्ततेऽनेनेति वर्त्तनिः स्तोत्र इति सोमवायकस्य वर्त्तनिशब्दस्यान्तोदात्तत्वसिद्ध्यर्थमुञ्छादिषुपाठादस्य प्रत्ययस्वरेण मध्योदात्तत्वे प्राप्तेऽन्तोदात्तत्वं । बृहतः, बृहन्महतोरुपसंख्यानमिति ङस उदात्तत्वं । अध्यासते, असार्वधातुकानुदात्तत्वे सति धातुस्वरः ॥ ९ ॥

दशमीमृचमाह निषसादेति । धृतव्रतः पूर्वोक्तो वरुणः पस्त्यासु दैवीषु प्रजासु आनिषसाद आगत्य निषण्णवान्, किमर्थं प्रजानां साम्राज्यसिद्ध्यर्थं । कीदृशः सः, सुक्रतुः शोभनकर्म्मा । आनिषसाद, सदेरप्रतेः ( पां ८। ३। ६६। ) इति षत्वं । साम्राज्याय, सम्राजो भावः साम्राज्यं, गुणवचन ब्राह्मणादिभ्यः ( पां ५। १। १२४। ) इति ष्यञ्, ञ्नित्यादिर्नित्यं ( पां ६। १। १९७। ) इत्याद्युदात्तत्वं । सुक्रतुः, क्रत्वादयश्च ( पां ६। २। ११८। ) इत्युत्तरपदाद्युदात्तत्वं ॥ १० ॥ इति प्रथमस्य द्वितीये सप्तदशो वर्गः ॥ १७ ॥

एकादशीमृचमाह अतो विश्वानीति । अतोऽस्माद्वरुणाद्विश्वानि सर्वाण्यद्भुतान्याश्चर्य्याणि चिकित्वान् प्रज्ञावानभिपश्यति, सर्वतोऽवलो-

१९२१ स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत् ।
प्र ण आयूंषि तारिषत् ॥

श्यति, या कृतानि यान्याश्चर्य्याणि पूर्वं वरुणेन सम्पादितानि च-कारादन्यानि यान्याश्चर्य्याणि कर्त्त्वा, इतः परं कर्त्तव्यानि, तानि सर्वाण्यभिपश्यतीति पूर्वत्रान्वयः। अद्भुता, शेश्छन्दसि बहुलं (पां ६।१।७०।) इति शेर्लोपः, प्रत्ययलक्षणेन, नपुंसकस्य झलचः (पां ७।१।७२।) इति नुम्, नलोपः। चिकित्वान्, कित ज्ञाने, लिटः क्वसुः, अभ्यासहलादिशेषचुत्वानि, वस्वेकाजाद्घसां (पां ७।२।६७।) इति नियमादिडभावः, रुत्वानुनासिकावुक्तौ संहितायां। पश्यति, पा घ्रा ध्मा (पा ७।३।७८।) इत्यादिना दृशेः पश्यादेशः। कर्त्त्वा, कृत्यार्थेतवैकेन् (पां ३।४।१४।) इत्यादिना करोतेस्त्वन्, नित्त्वा-दाद्युदात्तत्वं, पूर्ववत् शेर्लोपः ॥ ११ ॥

द्वादशीमृचमाह स नो विश्वाहेति। सुक्रतुः शोभनप्रज्ञः स आदित्यो वरुणो विश्वाहा सर्वेष्वहःसु नोऽस्मान् सुपथा शोभन-मार्गेण सहितान् करत् करोतु, किञ्च नोऽस्माकमायूंषि प्रतारिषत् प्रवर्द्धयतु। सुपथा, स्वती पूजायामिति समासेन, पूजनात् पूजित मनुदात्तं (पां ८।१।६७।) इति समासान्तप्रतिषेधः, अव्ययपूर्व-पदप्रकृतिस्वरे प्राप्ते, परादिश्छन्दसि बहुलं (पां ६।२।१९९।) इत्युत्तरपदाद्युदात्तत्वं, क्रत्वादयश्च (पां ६।२।११८।) इत्येतन्न भवति अबहुव्रीहित्वात्, बहुव्रीहौ हि तद्विधीयते, आद्युदात्तं द्व्यच्छ-न्दसि (पां ६।२।११९।) इत्येतदपि न भवति, पथिन्शब्दस्यान्तो-दात्तत्वात्। करत्, करोतेर्लेटि व्यत्ययेन शप्, शपो लुकि, लेटोऽडाटौ (पां ३।४।९४।) इत्यडागमः, इतश्च लोपः (पां ३।४।९७।) इतीकारलोपः। यद्वा छान्दसे लुङि च्लिः, कृमृदृरुहिभ्यश्छन्दसि (पां ३।१।५९।) इति च्लेरङादेशः, ऋदृशोऽङि गुणः (पां ७।४।१६।) इति गुणः, बहुलं छन्दस्यमाङ्योगेऽपि (पां ६।४।७५।) इत्यड-भावः। प्र णः, उपसर्गाद्बहुलमिति नसो णत्वं। तारिषत्, तारयते-र्लेट्यडागमः, सिब्बहुलं लेटि (पां ३।१।३४।) इति सिप्, आदेश प्रत्यययोः (पां ८।३।५९।) इति षत्वं ॥ १२ ॥

। १३ । बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजं ।
परि स्पशो निषेदिरे ॥

। १४ । न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानां ।
न देवमभिमातयः ॥

त्रयोदशीमृचमाह बिभ्रद्द्रापिमिति । हिरण्ययं सुवर्णमयं द्रापिं कवचं बिभ्रद्धारयन् वरुणो निर्णिजं पुष्टं स्वशरीरं वस्त आच्छादयति, स्पशो हिरण्यस्पर्शिनो रश्मयः परिनिषेदिरे सर्वतो निषण्णाः । बिभ्रत्, बिभर्तेः, नाभ्यस्ताच्छतुः ( पां ७ । १ । ७८ । ) इति नुमभावः, अभ्यस्तानामादिः ( पां ६ । १ । १८९ । ) इत्याद्युदात्तत्वं । द्रापिं, द्रा कुत्सायां गतौ, द्रापयति इषून् कुत्सितां गतिं प्रापयतीति द्रापिः कवचं, अर्त्तिह्रीव्ली ( पां ७ । ३ । ३६ । ) इत्यादिना पुगागमः, औणादिक इप्रत्ययो णिलोपः । हिरण्ययं, ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ( पां ६ । ४ । १७५ । ) इति हिरण्यशब्दाद्विकारार्थे विहितस्य मयटो मशब्दलोपो निपातितः । वस्त, वस आच्छादने, लङि, अदादित्वाच्छपो लुक्, पूर्ववदडभावः । निर्णिजं, णिजिर् शौचपोषणयोः । स्पशः, स्पश बाधनस्पर्शनयोः, क्विप् च (पां ३ । २ । ७६ ।) इति क्विप् । निषेदिरे, षद्लृ विशरणगत्यवसादनेषु, अस्मात्कर्त्तरि कर्म्मणि लिट्, एत्वाभ्यासलोपौ, सदिरप्रतेः ( पां ८ । ३ । ६६ । ) इति षत्वं ॥ १३ ॥

चतुर्दशीमृचमाह न यं दिप्सन्तीति । दिप्सवो हिंसितुमिच्छन्तो वैरिणो यं वरुणं प्रति न दिप्सन्ति, भीताः सन्तो हिंसितुमिच्छां परित्यजन्ति, जनानां प्राणिनां द्रुह्वाणो द्रोग्धारोऽपि यं वरुणं प्रति न द्रुह्यन्ति, अभिमातयः पाप्मानः, पाप्मा वा, अभिमातिरिति श्रुत्यन्तरात्, देवन्तं वरुणं न स्पृशन्ति । दिप्सन्ति, दम्भु दम्भे, अस्मात्सनि, सनीवन्तर्धभ्रस्ज ( पां ७ । २ । ४९ । ) इत्यादिना इडभावः, हलन्ताच्च ( पां १ । २ । १० । ) इत्यत्र हलग्रहणस्य जातिवाचित्वात् सनः कित्वात्, दम्भ इच्च ( पां ७ । ४ । ५६ । ) इति दकारात् परस्याकारस्येकारः, अनिदितां ( पां ६ । ४ । २४ । ) इति नलोपः, भषभावाभावश्छान्दसः, अत्र लोपोऽभ्यासस्य ( पां ७ । ४ । ५८ । ) इत्यभ्यासलोपः, शपः

१ १५ १ उत यो मानुषेष्वा यशश्चक्रे असाम्या ।
अस्माकमुदरेष्वा ॥ १८ ॥

१ १६ १ परा मे यन्ति धीतयो गावो न गव्यूतीरनु ।
इच्छन्तीरुरुचक्षसं ॥

पित्त्वादनुदात्तत्वं, तिङश्चलसार्वधातुकस्वरेण सनो नित्त्वान्नित्स्वरेणा-
द्युदात्तत्वं, यद्वृत्तयोगादनिघातः । दिप्सवः, सनन्तादस्मेः, सन्नाशंसभिक्ष
उः (पां ३ । २ । १६८ ।) इत्युः प्रत्ययः, प्रत्ययस्वरः । मृक्षाणः, मृक्ष-
जिघांसायां, अन्येभ्योऽपि दृश्यन्ते (पां ३ । २ । ७५ ।) इति क्वनिप्,
प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वं ॥ १४ ॥

पञ्चदशीमृचमाह उत य इति । उत अपि च, यो वरुणो मानुषेषु
यशोऽन्नमाचक्रे, सर्वतः कृतवान्, स वरुणः कुर्वन्नपि आ सर्वतोऽसामि,
सम्पूर्णञ्चक्रे, नतु न्यूनं कृतवान्, विशेषतोऽस्माकमुदरेषु आ सर्वत-
श्चक्रे । मानुषेषु, मनोर्जातावञ्यतौ षुक् च (पां ४ । १ । १६१ ।) इत्यञ्,
षुगागमश्च, ञित्यादिर्नित्यं (पां ६ । १ । १९७ ।) इत्याद्युदात्तत्वं ।
यशः, अशेर्देवने युट्चेत्यौणादिकः युडागमः । चक्रे, प्रत्ययस्वरः ।
असामि, अव्यये नञ्कुन्निपातानामिति वक्तव्यमित्यव्ययपूर्वपदप्रकृति-
स्वरत्वं । उदरेषु, उदिदृणातेरजलौपूर्वपदान्त्यलोपश्चेत्यौणादिकोऽच्-
प्रत्ययः, लित्स्वरे प्राप्ते, गतिकारकोपपदात् (पां ६ । २ । १३९ ।) इति
कृदुत्तरपदप्रकृतिस्वरत्वं ॥ १५ ॥ इति प्रथमस्य द्वितीयेऽष्टादशो
वर्गः ॥ १८ ॥

षोडशीमृचमाह परा मे यन्तीति । उरुचक्षसं बहुभिर्द्रष्टव्यं वरुण-
मिच्छन्तीर्मे धीतयः शुनःशेपस्य बुद्धयः परायन्ति पराङ्मुखा निवृ-
त्तिरहिता गच्छन्ति, तत्र दृष्टान्तः, गावो न, यथा गावो गव्यूतीरनु,
गोष्ठान्यनुलक्ष्य गच्छन्ति तद्वत् । गव्यूतीः, गावोऽत्र यूयन्त इत्यधि-
करणे क्तिन्, गोर्यूतौ छन्दस्युपसङ्ख्यानमिति वार्त्तिकेनावादेशः, दासी-
भारादित्वात् पूर्वपदप्रकृतिस्वरत्वं, यद्वा यूतिर्यवनं, गवां यवनमत्रेति
बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । इच्छन्तीः, इषु इच्छायां, लटः शतृ,
तुदादिभ्यः शः, इषु गमियमाञ्छः (पां ७ । ३ । ७७ ।) इति छत्वं, अदु-
पदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते ॥ १६ ॥

१७ सं नु वोचावहै पुनर्यतो मे मध्वाभृतं ।
होतेव क्षदसे प्रियं ॥

१८ दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि ।
एता जुषत मे गिरः ॥

सप्तदशीमृचमाह सन्न्विति। यतो यस्मात् कारणात् मे मज्जीवनार्थं मधु मधुरं हविराभृतं, अदःसोमाख्ये कर्म्मणि सम्पादितं, अतः कारणाद्धोतेव होमकर्त्तेव, त्वमपि प्रियं हविः अदसे अश्नासि, पुनर्हविःस्वीकारादूर्द्धं हन्तत्वं जीवन्नहञ्च नु अवयं संवोचावहै सम्भूय प्रियवार्त्तां करवावहै। वोचावहै, लोडर्थे छान्दसे लुङि, ब्रुवो वचिः (पां २।४।५३।) इति ब्रुवो वचिरादेशः, अस्यति वक्ति ख्यातिभ्योऽङ् (पां ३।१।५२।) इति च्लेरङादेशः, वच उम् (पां ७।४।२०।) इत्युमागमो गुणः, व्यत्ययेन टेरेत्वं, यद्वा लोट एव लुङादेशः, स्थानिवद्भावादेत्वं। आभृतं, हृग्रहोर्भश्छान्दसीति सूत्रवार्त्तिकेन हृधातोर्हकारस्य भकारादेशः, गतिरनन्तरः (पां ६।२।४९।) इति गतेः प्रकृतिस्वरत्वं॥ १७॥

अष्टादशीमृचमाह दर्शन्न्विति। विश्वदर्शतं सर्वैर्दर्शनीयमस्मदनुग्रहार्थमत्राविर्भूतं वरुणं दर्शं नु अहं दृष्टवान् खलु, क्षमि क्षमायां भूमौ रथं वरुणसम्बन्धिनमधिदर्शमाधिक्येन दृष्टवानस्मि। एता उच्यमाना मे गिरो मदीयाः स्तुतीर्जुषत, वरुणः सेवितवान्। दर्शं, दृशेः, इरितो वा (पां ३।१।५७।) इति च्लेरङादेशः, ऋदृशोऽङि गुणः (पां ७।४।१६।) इति गुणः। विश्वदर्शतं, दृशेः, भृमृदृशि इत्यादिनौणादिकातच्प्रत्ययान्तो दर्शतशब्दो मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वं, यद्वा विश्वन्दर्शनीयमस्येति बहुव्रीहिः, बहुव्रीहौ विश्वं संज्ञायां (पां ६।२।१०६।) इति पूर्वपदान्तोदात्तत्वं। क्षमि, आतो धातोः (पां ६।४।१४०।) इत्यत्रात इति योगविभागादाकारलोपः॥ १८॥

१ १९ १ इमं मे वरुण श्रुधी हवमद्या च मृलय १
त्वामवस्युरा चके ॥
१ २० १ त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि १
स यामनि प्रतिश्रुधि ॥

वरुणप्रघासेषु इमं मे वरुणेति वारुणस्य हविषोऽनुवाक्या, पञ्चम्यां पौर्णमास्यामिति खण्डे सूचितं, इमं मे वरुण श्रुधि तत्त्वायामि ब्रह्मणा वन्दमान इति, तामेतां सूक्ते एकोनविंशीमृचमाह इमं म इति। हे वरुण, मे मदीयमिमं हवमाह्वानं श्रुधि शृणु, किंचाद्यास्मिन्दिने मृलयास्मान् सुखय, अवस्युः रक्षणेच्छुरहं त्वां वरुणमा आभिमुख्येन चके, शब्दयामि स्तौमीत्यर्थः। श्रुधि, श्रु श्रवणे, लोटो हिः, श्रुशृणु-पृकृवृभ्यश्छन्दसि (पां ६।४।१०२।) इति हेर्धिरादेशः, बहुलं छन्दसीति विकरणस्य लुक्, अन्येषामपि दृश्यते (पां ६।३।१३७।) इति संहितायां दीर्घः। अवस्युः, अवस् शब्दात्, सुप आत्मनः क्यच् (पां ३।१।८।) इति क्यच्, क्याच्छन्दसि (पां ३।२।१७०।) इत्युः प्रत्ययः। आचके, कै गै शब्दे, अस्माल्लिटि, आदेच उपदेशेऽशितीति (पां६।१।४५) इत्यात्वं, द्विर्भावचुत्वे, आतो लोप इटि च (पां ६। ४।६४।) इत्याकारलोपः, तिङ्ङतिङः (पां ८।१।२८। इति निघातः॥ १९॥

विंशीमृचमाह त्वं विश्वस्येति। हे मेधिर मेधाविन् वरुण, त्वं दिवश्च द्युलोकस्यापि, ग्मश्च भूलोकस्यापि, एवमात्मकस्य विश्वस्य सर्वस्य जगतो मध्ये, राजसि दीप्यसे, स तादृशस्त्वं, यामनि क्षेमप्रापणे अस्मदीये प्रतिश्रुधि प्रतिश्रवणमाज्ञापनं कुरु, रक्षिष्यामीति प्रत्युत्तरं देहीत्यर्थः। दिवः, ऊडिदं (पां ६।१।१७१।) इत्यादिना षष्ठ्या उदात्तत्वं। ग्मः, ग्मेत्येतद्भूनामसु पठितं, आतो धातोः (पां ६।४। १४०।) इत्यत्र आत इति योगविभागात्, आतो लोप इटि च (पां ६।४।६४।) इति प्रतिषेधेऽपि व्यत्ययेनाकारलोपः, उदात्तनि-वृत्तिस्वरेण विभक्तेरुदात्तत्वं। यामनि, या प्रापणे, आतो मनिन् क्वनिब्-वनिपश्च (पां ३।२।७४।) इति मनिन्, नित्त्वादाद्युदात्तत्वं। श्रुधि, उक्तं॥ २०॥

। २१ । उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत ।
अवाधमानि जीवसे ॥ १९ ॥

## षड्विंशसूक्तं ।

। १ । वसिष्वा हि मियेध्य वस्त्राण्यूर्जाम्पते ।
सेमं नो अध्वरं यज ॥

एकविंशीमृचमाह उदुत्तममिति । नोऽस्माकमुत्तमं शिरोगतं पाशं उन्मुमुग्धि, उत्कृष्य मोचय । मध्यममुदरगतं पाशं विचृत, वियुज्य नाशय । जीवसे जीवितुमधमानि मदीयान् पादगतान् पाशान् अवचृत, अवकृष्य नाशय, । उत्तमं, उत्कादिषु पाठादन्तोदात्तत्वं । मुमुग्धि, मुच्लृ मोक्षणे, बहुलं छन्दसीति विकरणस्य श्लुः, द्विर्भावः, हलादिशेषः, हुझल्भ्यो हेर्धिः ( पा ६ । ४ । १०१ । ) इति हेर्धिरादेशः, तिङ्ङतिङः ( पा ८ । १ । २८ । ) इति निघातः । चृत, चृती हिंसाग्रन्थनयोः, लोटो हिः, तुदादिभ्यः शः, अतो हेः ( पा ६ । ४ । १०५ । ) इति हेर्लुक् । जीवसे, जीव प्राणधारणे, तुमर्थे सेसेनसे ( पा ३ । ४ । ९ । इत्यसे प्रत्ययः, प्रत्ययस्वरः ॥ २१ ॥ इति प्रथमस्य द्वितीये एकोनविंशो वर्गः ॥ १९ ॥

वसिष्वेति दशर्चं तृतीयसूक्तं, अत्रानुक्रम्यते, वसिष्वदशाग्नेयं त्विति, शुनःशेप ऋषिर्गायत्रीच्छन्दः, इदमुत्तमञ्च सूक्तमाग्नेयं प्रातरनुवाक आग्नेये क्रतौ गायत्रे छन्दसि एतदादिसूक्तद्वयमनुवक्तव्यं, तथाच सूत्रितं, वसिष्वा हीति, सूक्तयोरुत्तमामुद्धरेदिति, तस्मिन् सूक्ते प्रथमामृचमाह वसिष्वा हीति । वरुणेनाभिष्टुतो प्रेरितः शुनःशेप एतदादिसूक्तद्वयेनाग्निमस्तौत्, तथाचाम्नायते, तं वरुण उवाच अग्निर्वै देवानां मुखं सुहृदयतमः, तमु स्तुहि अथ त्वोत्स्रक्ष्यामीति सोऽग्निं तुष्टाव अत उत्तराभिर्द्वाविंशत्येति । हे मियेध्य, मेधस्य यज्ञस्य योग्य, ऊर्जाम्पते अन्नानाम्पालकाग्ने, वस्त्राण्याच्छादनानि तेजांसि वसिष्व आच्छादय, प्रज्वलितस्तेजसा भवेत्यर्थः, हि यस्मात् प्रज्वलितस्तस्मात् स तादृशस्त्वं नोऽस्मदीयमिममध्वरं यज निष्पादय । वसिष्व, वस आच्छादने, लोटि, थासस्से ( पा ३ । ४ । ८० । ) इति से आदेशः,

। २ । नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः।
अग्ने दिवित्मता वचः॥

। ३ । आ हि ष्मा सूनवे पितापिर्यजत्यापये॥
सखा सख्ये वरेण्यः॥

सवाभ्यां वामौ ( पां ३ । ४ । ९१ । ) इत्येकारस्थाने व आदेशः, छन्दस्युभयथा ( पां ३ । ४ । ११७ । ) इत्यार्द्धधातुकत्वात्, आर्द्धधातुकस्येड्वलादेः ( पां ७ । २ । ३५ । ) इतीडागमः, असार्वधातुकानुदात्तत्वे धातुस्वरः, अन्येषामपि दृश्यते ( पां ६ । ३ । १३७ । ) इति संहितायां दीर्घः । मियेध्य, मकारैकारयोर्मध्ये इयागमश्छान्दसः। उर्ज्जांम्पते, सुबामन्त्रिते पराङ्गवत्स्वरे ( पां २ । १ । २ । ) इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्याष्टमिको निघातः। सेमं, सोऽचि लोपे चेत् पादपूरणं ( पां ६ । १ । १३७ । ) इति सोर्लोपः ॥ १ ॥

द्वितीयामृचमाह नि नो होतेति । सदा यविष्ठ, सर्वदा युवतम, हे अग्ने, वरेण्यो वरणीयस्त्वं नोऽस्माकं होता होमनिष्पादको भूत्वा दिवित्मता दीप्तिमता वचो वचसा स्तूयमानः सन् निषीदेति शेषः। कीदृशस्त्वं, मन्मभिर्ज्ञापकैस्तेजोभिर्युक्त इति शेषः। यविष्ठ, युवन्शब्दादिष्ठनि, स्थूलदूरयुवह्रस्व क्षिप्र ( पां ६ । ४ । १५६ । ) इत्यादिना यणादिपरस्य लोपः, पूर्वस्योकारस्य गुणश्च, अवादेशः, आमन्त्रितनिघातः। मन्मभिः, मन ज्ञाने, अन्येभ्योऽपि दृश्यन्ते ( पां ३ । २ । ७५ । ) इति मनिन्प्रत्ययः, नित्त्वादाद्युदात्तत्वं । दिवित्मता, दिवु क्रीडादौ, इक्श्तिपौ धातुनिर्देश इति इक्प्रत्ययः, तेन च धातुवाचिना दिविशब्देन धात्वर्थो दीप्तिर्लक्ष्यते, यद्वौणादिको भावे क्विप्प्रत्ययः, दिविशब्दान्मतुपि तकारोपजनश्छान्दसः। वचः, सुपां सुलुक् ( पां ७ । १ । ३९ । ) इति तृतीयैकवचनस्य लुक् ॥ २ ॥

तृतीयामृचमाह आ हि ष्मेति। हे अग्ने वरेण्यो वरणीयः पिता पितृस्थानीयस्त्वं, सूनवे पुत्रस्थानीयाय मह्यं, अभीष्टं देहीति शेषः। हि ष्मेति निपातद्वयं सर्वथेत्यमुमर्थमाचष्टे। अभीष्टदाने दृष्टान्तद्वयमुच्यते, यथा आपिर्बन्धुरापये बन्धवे आयजति हि ष्म, सर्वथा ददातीति शेषः। सखा प्रियः, सख्ये प्रियाय यथा ददाति तथा त्वमपि देहि।

। ४ । आ नो बर्ही रिशादसो वरुणो मित्रो अर्यमा ॥
सीदन्तु मनुषो यथा ॥
। ५ । पूर्व्य होतरस्य नो मन्दस्व सख्यस्य च ।
इमा *उषु श्रुधी गिरः ॥ २० ॥

ष्मा सूनवे, निपातस्य च ( पा ६ । ३ । १३६ । ) इति दीर्घः। यजतीत्यस्य सखा सख्ये इत्यत्राप्यनुषङ्गात्तदपेक्षयेयं प्रथमेति, चादिलोपे विभाषा ( पा ८ । १ । ६३ । ) इति नेह भवति, यद्वा, हि च ( पा ८ । १ । ३४ । ) इति निघातप्रतिषेधः । सख्ये, समाने ख्यश्चोदात्त इति सखिशब्द औणादिक इप्रत्ययान्त आद्युदात्तः, सुपः पित्त्वादनुदात्तत्वे स एव शिष्यते ॥ ३ ॥

चतुर्थीमृचमाह आ नो बर्हिरिति । हे अग्ने, वरुणादयो देवास्त्वद्बन्धवस्त्वया प्रेरिता रिशादसो हिंसकानदन्तो नोऽस्मदीयं बर्हिर्यज्ञमासीदन्तु, तत्र दृष्टान्तः, यथा मनुषः प्रजापतेर्यज्ञमासीदति तद्वत् । बर्ही रिशादसः, विसर्जनीयस्य रुत्वे कृते, रोरि ( पा ८ । ३ । १४ । ) इति रेफलोपः, ढ्रलोपे पूर्वस्य दीर्घोऽणः ( पा ६ । ३ । १११ । ) इति इकारस्य दीर्घत्वं । रिशादसः, रिश हिंसायां, रिशन्ति हिंसन्ति इति रिशाः शत्रवः, इगुपधज्ञाप्रीकिरः कः ( पा ३ । १ । १३५ । ) इति कः प्रत्ययस्तानदन्तीति रिशादसः, सर्वधातुभ्योऽसुन्नित्यौणादिकोऽसुन्प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वं । सीदन्तु, षद्लृ विशरणगत्यवसादनेषु, पा घ्रा ध्मा स्था म्ना दाण् ( पा ७ । ३ । ७८ । ) इत्यादिना सीदादेशः, शपः पित्त्वादनुदात्तत्वं, तुशश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । मनुषः, मन ज्ञाने, मन्यते जानातीति मनुः प्रजापतिः, जनेरुसिर्न्चेत्यनुवृत्तौ, बहुलमन्यत्रापीत्यौणादिक उसिः प्रत्ययः, नित्त्वादाद्युदात्तत्वं । यथा, यथेति पादान्त इति फिट्सूत्रेण सर्वानुदात्तत्वं ॥ ४ ॥

पञ्चमीमृचमाह पूर्व्य होतरिति । हे पूर्व्य अस्मदादेः पूर्वमुत्पन्न, होतर्होमनिष्पादकाग्ने, नोऽस्मदीयस्यास्य प्रवर्त्तमानस्य यज्ञस्य सख्यस्य चास्मदनुग्रहस्य च सिद्ध्यर्थं मन्दस्व, त्वं हृष्टो भव, इमा अस्माभिः

* ऊषु इति दीर्घादिमन्तो लिखितपुस्तकपाठः ।

६ यच्चिद्धि शश्वता तना देवं देवं यजामहे ।
त्वे इद्धूयते हविः ॥

प्रयुज्यमाना गिर उषु स्तुतिरूपवाचोऽपि श्रुधि शृणु । पूर्व्य, आमन्त्रिताद्युदात्तत्वं । होतरित्यस्य, नामन्त्रिते समानाधिकरणे ( पां ८ । १ । ७३ ।) इति पूर्वस्याविद्यमानवत्त्वादाष्टमिको निघातः । अस्य, ऊडिदं ( पां ६ । १ । १७१ । ) इत्यादिना षष्ठ्या उदात्तत्वं । मन्द्रस्य, मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु, ष्ट्रपः पित्त्वादनुदात्तत्वं, तिङश्च लसार्वधातुकस्वरेण धातुस्वरः, अनुदात्तं सर्वमपादादौ ( पां ८ । १ । १८ । ) इति सूत्रे अपादादाविति पर्युदासादाष्टमिकनिघाताभावः । सख्यस्य, सख्युः कर्म्म सख्यं, सख्युर्यः ( पां ५ । १ । १२६ । ) इति यः प्रत्ययः, यस्येति च ( पां ६ । ४ । १४८ । ) इति इकारलोपे प्रत्ययस्वरः । उषु, सुञः ( पां ८ । ३ । १०७ । ) इति षत्वं । श्रुधि, श्रु श्रवणे, श्रुशृणुपॄकृवृभ्यश्छन्दसि ( पां ६ । ४ । १०२ । ) इति हेर्धिरादेशः, बहुलं छन्दसीति शपो लुक् ॥ ५ ॥ इति प्रथमस्य द्वितीये विंशो वर्गः ॥ २० ॥

यच्चिद्धित्वमाह यच्चिदिति । हे अग्ने, यच्चिद्धि यद्यपि, शश्वता शाश्वतेन नित्येन, तना विस्तृतेन, हविषा देवन्देवमन्यमन्यं वरुणेन्द्रादिरूपं नानाविधन्देवताविशेषं यजामहे, तथापि तद्धविःसर्वं त्वे इत् त्वय्येव हूयते, अतो देवतान्तरविषयो यागोऽपि त्वदीयैव सेवेत्यर्थः । तना, तनु विस्तारे, क्विप् च ( पां ३ । २ । ७६ । ) इति क्विप्, यद्वा, पचाद्यच्, सुपां सुलुक् ( पां ७ । १ । ३९ । ) इति तृतीयाया आकारः । देवन्देवं, नित्यवीप्सयोः ( पां ८ । १ । ४ । ) इति द्विर्भावः, तस्य परमाम्रेडितं ( पां ८ । १ । २ । ) इत्युत्तरस्याम्रेडितसञ्ज्ञायां, अनुदात्तञ्च ( पां ८ । १ । ३ । ) इत्यनुदात्तत्वं । यजामहे, निपातैर्यद्यदिहन्त ( पां ८ । १ । ३० । ) इति निघातप्रतिषेधः । त्वे, युष्मच्छब्दात् सप्तम्येकवचनस्य, सुपां सुलुगिति शे आदेशः, त्वमावेकवचने ( पां ७ । २ । ९७ । ) इति मपर्य्यन्तस्य त्वादेशः, शेषे लोपः ( पां ७ । २ । ९० । इति लोपे, अतो गुणे ( पां ६ । १ । ९७ । ) इति पररूपत्वं, शे ( पां १ । १ । १३ । ) इति प्रगृह्यसञ्ज्ञायां, प्लुतप्रगृह्या अचि नित्यं ( पां ६ । १ । १२५ । ) इति प्रकृतिभावः । हूयते, अकृत्सार्वधातुकयोर्दीर्घः ( पां ७ । ४ । २५ । ) इति दीर्घः ॥ ६ ॥

। ७ । प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः ।
प्रियाः स्वग्नयो वयं ॥

। ८ । स्वग्नयो हि वार्यं देवासो दधिरे च नः ।
स्वग्नयो मनामहे ॥

। ९ । अथा न उभयेषाममृतमर्त्यानां ।
मिथः सन्तु प्रशस्तयः ॥

सप्तमीमृचमाह प्रियो नो अस्त्विति । विश्पतिर्विशां प्रजानां पालकः, होता होमनिष्पादकः, मन्द्रो हृष्टः, वरेण्यो वरणीयोऽग्निर्नोऽस्माकं प्रियोऽस्तु । वयमपि स्वग्नयः शोभनाग्नियुक्ताः सन्तस्तव प्रिया भूयास्मेति शेषः । विश्पतिः, पत्यावैश्वर्ये ( पां ६ । २ । १८ । ) इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते, परादिश्छन्दसि बहुलं ( ६ । २ । १९९ । ) इत्युत्तरपदाद्युदात्तत्वं । वरेण्यः, वृञ एण्य इत्यौणादिक एण्यप्रत्ययः, वृषादित्वाद्युदात्तत्वं । स्वग्नयः, बहुव्रीहौ, नञ्सुभ्यां ( पां ६ । २ । १७२ । ) इत्युत्तरपदान्तोदात्तत्वं ॥ ७ ॥

अष्टमीमृचमाह स्वग्नयो हीति । स्वग्नयः शोभनाग्नियुक्ता देवासो दीप्यमाना ऋत्विजो नोऽस्मदीयं वार्यं वरणीयं हविर्हि यस्माद्दधिरे धृतवन्तस्तस्माद्वयं स्वग्नयः शोभनाग्नियुक्ताः सन्तो मनामहे, त्वां याचामहे । वार्यं, वृञ् वरणे, वृङ् सम्भक्तौ, ऋहलोर्ण्यत् ( पां ३ । १ । १२४ । ) इति ण्यत्, ईडवन्दवृशंसदुहां ण्यतः ( पां ६ । १ । २१४ । ) इत्याद्युदात्तत्वं । दधिरे, इरेचश्चित्त्वादन्तोदात्तत्वं, हि च ( पां ८ । १ । ३४ । ) इति निघातप्रतिषेधः । मनामहे, मन ज्ञाने, व्यत्ययेन श्नप् ॥ ८ ॥

नवमीमृचमाह अथा न इति । हे अमृत, मरणरहिताग्ने, अथ कर्मानुष्ठानानन्तरं, मर्त्यानां मनुष्याणां नोऽस्माकमस्मत्स्वामिनस्तवोभयेषां मिथः परस्परं प्रशस्तयः प्रशंसारूपा वाचः सन्तु, सम्यगनुष्ठितमिति यजमानविषया प्रशंसा, सम्यगनुगृहीतमित्यग्निविषया । अथ, निपातस्य च ( पां ६ । ३ । १३६ । ) इति संहितायां दीर्घः, अपादादाविति पर्युदासात् षाष्ठिकमाद्युदात्तत्वं । मर्त्यानां, मृङ् प्राणत्यागे, असिहसीत्यादिना तन्प्रत्ययान्त औणादिको मर्तशब्दः, अस्मा-

११०१ विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः।
चनो धाः सहसो यहो॥ ३१॥

सप्तविंशत्सूक्तं।

१११ अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः।
सम्राजन्तमध्वराणां॥

ङ्भावे, छन्दसि च (पां ५।१।६७।) इति यत्, यतोऽनावः (पां ६।१।२१३।) इत्याद्युदात्तः। सन्तु, श्नसोरल्लोपः (पां ६।४।१११।) इत्यकारलोपः। प्रशस्तयः, तादौ च (पां ६।२।५०।) इति गतेः प्रकृतिस्वरत्वं॥ ९॥

दशमीमृचमाह विश्वेभिरग्न इति। सहसो बलस्य यहो पुत्र, हे देवतारूपाग्ने, विश्वेभिरग्निभिः सर्वैराहवनीयादिभिर्युक्तस्त्वं इममस्मदीयं यज्ञमिदमस्मदीयं वचः स्तोत्रञ्च सेवमानश्चनोऽन्नं धाः, अस्मभ्यं धेहि। विश्वेभिः, बहुलं छन्दसीति भिस ऐसादेशाभावः। चनः, चायृ पूजानिशामनयोः, चायेरन्ने ह्रस्वश्चेत्यौणादिकोऽसुनप्रत्ययस्तत्सन्नियोगेन नुडागमश्च, नित्त्वादाद्युदात्तत्वं। धाः, लुङि, गातिस्थाघुपाभूभ्यः सिचः, परस्मैपदेषु (पां २।४।७७।) इति सिचो लुक्, बहुलं छन्दस्यमाङ्योगेऽपि (पां ६।४।७५।) इत्यडागमाभावः। सहसो यहो इति, सुबामन्त्रिते पराङ्गवत्स्वरे (पां २।१।२।) इति पराङ्गवद्भावात्, आमन्त्रितस्य च (पां ८।१।१९।) इति सर्वामन्त्रितसमुदायो निहन्यते॥ १०॥ इति प्रथमस्य द्वितीये एकविंशो वर्गः॥ २१॥

अश्वं न त्वेति त्रयोदशर्चं चतुर्थं सूक्तं, पूर्ववदृष्यादयः, त्रयोदश्या नमो महद्भ्य इत्यस्यास्त्रिष्टुप्छन्दः, विश्वेदेवा देवता, तथा चानुक्रान्तं, अश्वं, सप्त ना गायत्र्यन्त्या दैवी त्रिष्टुबिति, प्रातरनुवाकाश्विनशस्त्रयोरुत्तमावर्जितस्य विनियोग उक्तः, तस्मिन् सूक्ते प्रथमामृचमाह, अश्वं नत्वेति। अध्वराणां यज्ञानां सम्राजन्तं सम्राट्स्वरूपं स्वामिनमग्निं त्वां नमोभिः स्तुतिभिर्वन्दध्यैर्वन्दितुं प्रवृत्ता इति शेषः। अत्र दृष्टान्तः, वारवन्तं वालयुक्तमश्वं न, अश्वमिव, अश्वो यथा वालैर्बाधकान् मशकमक्षिकादीन् परिहरति, तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः

१२१ स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः ।
मीढ्वाँ अस्माकं बभूयात् ॥
१३१ स नो दूराच्चासाच्च नि मर्त्यादघायोः ।
पाहि सदमिद्विश्वायुः ॥

परिहरसीत्यर्थः । वारवन्तं, मतुपः पित्त्वादनुदात्तत्वं, वारो नित्त्वादाद्युदात्तो वारशब्दः, कर्षात्वतो घञोऽन्त उदात्तः (पां ६ । १ । १५९ ।) इत्यन्तोदात्तत्वं व्यत्ययेन न प्रवर्त्तते । वन्दध्यै, वदि अभिवादनस्तुत्योः, इदितो नुम् धातोः ( पां ७ । १ । ५८ । ) इति नुम्, तुमर्थे सेसेन् ( पां ३ । ४ । ९ । ) इत्यध्यै प्रत्ययः । समानगन्तं, शपः पित्त्वादनुदात्तत्वं, शतुश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते, समासे कृदुत्तरपदप्रकृतिस्वरः । अध्वराणां, नञ्सुभ्यां ( पां ६ । २ । १७२ ।) इत्युत्तरपदान्तोदात्तत्वं ॥ १ ॥

द्वितीयामृचमाह स घा न इति । स घ, स एवाग्निर्नोऽस्माकं सुशेवः सुमुखो भवत्विति शेषः । कीदृशः, शवसा बलस्य सूनुः पुत्रः । पृथुप्रगामा पृथुप्रगमनः । किञ्चास्माकं मीढ्वान् कामान् वर्षिता बभूयात् भवतु । स घा नः, ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणां ( पां ६ । ३ । १३३ ।) इति दीर्घः । शवसा, सुपां सुपो भवन्तीति षष्ठ्यादेशः । पृथुप्रगामा, प्रकर्षेण गमनं प्रगामः, भावे घञ् ( पां ३ । ३ । १८ । ) इति घञ्, पृथुःप्रगामो यस्यासौ पृथुप्रगामा, सुपां सुलुक्पूर्वसवर्णा ( पां ७ । १ । ३९ । ) इत्यादिना पूर्वसवर्णं आकारः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । सुशेवः, इण्शीभ्यां वन्निति शेवशब्दो वन्प्रत्ययान्त आद्युदात्तः, ततो बहुव्रीहौ, नञ्सुभ्यां ( पां ६ । २ । १७२ ।) इत्युत्तरपदान्तोदात्तत्वे प्राप्ते, आद्युदात्तं द्व्यच्छन्दसि ( पां ६ । २ । ११९ ।) इत्युत्तरपदाद्युदात्तत्वं । मीढ्वाँ, मिह सेचने इत्ययं क्वसुप्रत्ययान्तो, दाश्वान् साह्वान् मीढ्वांश्च ( पां ६ । १ । १२ । ) इति निपातितः, बभूयात्, भवतेश्छान्दसस्य लिटः, लिटो लिङो भवन्तीति लिङादेशः, यासुट्, स्थानिवद्भावाद्द्विर्भावः, द्विर्वचने, भवतेरः ( पां ७ । ४ । ७३ ।) इत्यत्वं, तिङ्ङतिङः ( पां ८ । १ । २८ ।) इति निघातः ॥ २ ॥

तृतीयामृचमाह स नो दूरादिति । हे अग्ने, विश्वायुर्विश्वगमनः

। ४ । इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसं ।
अग्ने देवेषु प्रवोचः ॥

। ५ । आ नो भज परमेष्वा वाजेषु मध्यमेषु ।
शिक्षा वस्वो अन्तमस्य ॥ २२ ॥

स त्वं, दूराच्च दूरदेशेऽपि, आसाच्च आसन्नदेशेऽपि, अघायोः, अघं पापमनिष्टं कर्तुमिच्छतो मर्त्यान्मनुष्याद्वैरिणो नोऽस्मान् सदमित् सर्वदैव निपाहि, नितरां पालय। अघायोः, सुप आत्मनः क्यच् ( पां ३ । १ । ८ । ) इति क्यच्, अश्वाघस्यात् ( पां ७ । ४ । ३७ । ) इत्यात्वं । पाहि, पादादित्वादनिघातः। विश्वायुः, इण् गतावित्यस्माद्भावे, एतेर्णिच्चेत्युसिः प्रत्यय औणादिकः, विश्वमयनं गमनं यस्येति बहुव्रीहिः, बहुव्रीहौ विश्वं सञ्ज्ञायां ( पां । ६ । २ । १०६ । ) इति पूर्वपदान्तोदात्तत्वं ॥ ३ ॥

चतुर्थीमृचमाह इममू ष्विति। हे अग्ने, त्वमस्माकमस्मत्सम्बन्धिनं इममू षु पुरोदेशेऽनुष्ठीयमानमपि सनिं हविर्दानं नव्यांसं नवतरं गायत्रं स्तुतिरूपवचोऽपि देवेषु देवानामग्रे प्रवोचः प्रब्रूहि। ऊषु, निपातस्य च ( पां ६ । ३ । १३६ । ) इति संहितायां दीर्घः, सुञः ( पां ८ । ३ । १०७ । ) इति षत्वं। नव्यांसं, नवशब्दादीयसुनि, ईकारलोपश्छान्दसः, ईयसुनो नित्त्वादाद्युदात्तत्वं। वोचः, छन्दसि लुङ् लङ् लिटः ( पां ३ । ४ । ६ । ) इति लोडर्थे प्रार्थनायां लुङि, अस्यति वक्ति ख्यातिभ्योऽङ् ( पां ३ । १ । ५२ । ) इति च्लेरङादेशः, वच उम् ( पां ७ । १ । २० । ) इत्युमागमः ॥ ४ ॥

पञ्चमीमृचमाह आ नो भजेति। हे अग्ने, परमेषूत्कृष्टेषु द्युलोकवर्त्तिषु वाजेष्वन्नेषु नोऽस्मानाभज, सर्वतः प्रापय। मध्यमेष्वन्तरिक्षलोकवर्त्तिषु वाजेष्वाभज। अन्तमस्यान्तिमस्यान्तिकतमस्य भूलोकस्य सम्बन्धीनि वस्वो वसूनि शिक्ष देहि। शिक्ष, शिक्ष विद्योपादाने, शपः पित्त्वाद्धातुस्वरः, द्व्यचोऽतस्तिङः ( पां ६ । ३ । १३५ । ) इति संहितायां दीर्घः। अन्तमस्य, अन्तिकतमस्य, तमे तादेश्चेति तिकशब्दलोपः। ॥ ५ ॥ इति प्रथमस्य द्वितीये द्वाविंशो वर्गः ॥ २२ ॥

। ६ । विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ ।
सद्यो दाशुषे क्षरसि ॥
। ७ । यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः ।
स यन्ता शश्वतीरिषः ॥
। ८ । नकिरस्य सहन्त्य पर्येता कयस्य चित् ।
वाजो अस्ति श्रवाय्यः ॥

षष्ठीमृचमाह विभक्तासीति । हे चित्रभानो विचित्ररश्मियुक्ताग्ने, विभक्ता विभक्तस्य धनस्य प्रापयितासि । तत्र दृष्टान्त उच्यते, आकार उपमानार्थः, यथा सिन्धोर्नद्या उपाके समीपे ऊर्म्मा ऊर्म्मिमत्यङ्गोपलक्षितं कुल्यादिरूपं प्रवाहं विभजन्ति तद्वत्, दाशुषे हविर्दत्तवते यजमानाय सद्यस्तदानीमेव क्षरसि, कर्म्मफलभूतां वृष्टिं करोषि । सिन्धोः, स्यन्दू प्रस्रवणे, स्यन्देः सम्प्रसारणं धश्चेत्यौणादिक उःप्रत्ययः । ऊर्म्मा, अर्त्तेरूच्चेत्यौणादिक ऊत्प्रत्ययो मिच्च भवति । निदित्यनुवृत्तौ आद्युदात्तत्वं । दाशुषे, घृतव्रताय दाशुष इत्यत्रोक्तं ॥६॥
सप्तमीमृचमाह यमग्न इति । हे अग्ने, पृत्सु सङ्ग्रामेषु यं मर्त्यं यजमानमवा रक्षसि, यं पुरुषं वाजेषु सङ्ग्रामेषु जुनाः प्रेरयसि, स नरो यजमानः शश्वतीरिषः नित्यान्यन्नानि यन्ता नियन्तुं समर्थो भवति । पृत्सु, पद्दन्न आदिषु मांसपृतनासानूनां मांस्पृन्स्नवो वाच्या इति वार्त्तिकेन पृतनाशब्दस्य पृदादेशः, सावेकाचः ( पां ६ । १ । १६८ । ) इति विभक्तेरुदात्तत्वं । अवः, आवः, अकाराकारयोर्विपर्य्ययः, यद्वा लेटि अडागमः, इतश्च ( पां ३ । ४ । १०० । ) इति सिप इकारस्य लोपः । जुनाः, जु इति गत्यर्थः सौत्रो धातुः, लङ्सिप्, क्र्यादिभ्यः श्ना, बहुलं छन्दस्यमाङ्योगेऽपि ( पां ६ । ४ । ७५ । ) इत्यडभावः, यद्वृत्तान्नित्यं ( पां ८ । १ । ६६ । ) इति यद्वृत्तयोगादनिघातः । यन्ता, तृनो नित्त्वादाद्युदात्तत्वं । शश्वतीः, उगितश्च ( पां ४ । १ । ६ । ) इति ङीप् ॥७॥
अष्टमीमृचमाह नकिरस्येति । हे सहन्त्य शत्रूणामभिभवनशीलाग्ने, अस्य त्वद्भक्तस्य यजमानस्य कयस्य चित् कस्यापि पर्य्येता नकिः आक्रमिता नास्ति, किञ्चास्य यजमानस्य श्रवाय्यः श्रवणीयो वाजो

११ । स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः ।
धिये वाजाय हिन्वतु ॥
१२ । स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
उक्थैरग्निर्बृहद्भानुः ॥

हुझल्भ्यो हेर्धिः (पां ६ । ४ । १०१ ।) इति हेर्धिरादेशः, बलच्छुत्ते, यद्वा, विष्लृ व्याप्तावित्यस्माल्लोण्मध्यमैकवचने अभ्यासस्य गुणाभावः। विशे विशे, सावेकाचः (पां ६ । १ । १६८ ।) इति चतुर्थ्या उदात्तत्वं, अनुदात्तञ्च (पां ८ । १ । ३ ।) इत्याम्रेडितानुदात्तत्वं । यज्ञियाय, यज्ञर्त्विग्भ्यां घखञौ (पां ५ । १ । ७१ ।) इति घः। दृशीकं, अनि दृशिभ्यांश्चिदित्यौणादिकः कीकन्प्रत्ययः, नित्त्वादाद्युदात्तः ॥ १० ॥ इति प्रथमस्य द्वितीये त्रयोविंशो वर्गः ॥ २३ ॥

एकादशीमृचमाह स नो महानिति । सोऽग्निर्नोऽस्मान् धिये कर्म्मणे वाजायान्नाय च हिन्वतु प्रीणयतु, कीदृशः सः, महान् गुणाधिकः। अनिमानो निमानवर्जितः, अपरिच्छिन्न इत्यर्थः। धूमकेतुर्धूमेन ज्ञाप्यमानः। पुरुश्चन्द्रो बहुदीप्तियुक्तः। महाँ अनीत्यत्र संहितायां नकारस्य रुत्वानुनासिकावुक्तौ। अनिमानः, न विद्यते निमानोऽस्येति बहुव्रीहौ, नञसुभ्यां (पां ६ । २ । १७२ ।) इत्युत्तरपदान्तोदात्तत्वं। धूमकेतुः, इषियुधीन्धिदसिश्याधूसूभ्यो मक् इत्यौणादिको मक्प्रत्ययः, धूमः केतुर्यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। पुरुश्चन्द्रः, चदि आह्लादने दीप्तौ च, अस्मात्, स्फायि तञ्चीत्यादिना कर्त्तरि औणादिको रक्प्रत्ययः, पुरुश्चासौ चन्द्रश्चेति समासान्तोदात्तत्वं, ह्रस्वाच्चन्द्रोत्तरपदमन्त्रे (पां ६ । १ । १५१ ।) इति सुट्, तस्यश्चुत्वेन शकारः। धिये, सावेकाच इति चतुर्थ्या उदात्तत्वं। हिन्वतु, हिवि प्रीणनार्थः, इदितो नुम् धातोः (पां ७ । १ । ५८ ।) इति नुमागमः ॥ ११ ॥

द्वादशीमृचमाह स रेवाँ इवेति। सोऽग्निरुक्थैः स्तोत्रैर्युक्तान् नोऽस्मान् शृणोतु, तत्र दृष्टान्तः, रेवानिव, यथा लोके धनवान्राजा बन्दिनां स्तोत्रं शृणोति तद्वत्। कीदृशः सः, विश्पतिः प्रजापालकः। दैव्यः, देवानां सम्बन्धी, अग्निर्वै देवानां होतेति श्रुत्यन्तरात्, केतुर्दूतः पालकः, अग्निर्वै देवानां दूत आसीदिति श्रुतेः। बृहद्भानुः, प्रौढरश्मिः

1131 नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नमो आशिनेभ्यः। यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमावृक्षि देवाः॥ २४॥

स देवान्, एतत्तदोः सुलोपोऽकोरनञ्समासे हलि (पां ६।१।१३२।) इति सोर्लोपः, रयेर्मतौ बहुलमिति सम्प्रसारणं परपूर्वत्वं, आद्गुणः (पां ६।१।८७।) इति गुणः, छन्दसीरः (पां ८।२।१५।) इति मतुपो वत्वं, रयिशब्दाच्च मतुप उदात्तत्वं वक्तव्यमिति वार्त्तिकेन मतुप उदात्तत्वं। विश्पतिः, परादिश्छन्दसि बहुलं (पां ६।२।१९९।) इत्युत्तरपदान्तोदात्तत्वं। रेवद्भानुः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥१२॥

दर्शपौर्णमासयोस्तु स्रुगादानात् पूर्वभाविनि जपे नमो महद्भ्य इत्येषा, ब्रह्मौदने प्राशिष्यमाणे इति खण्डे सूर्यो नो दिवस्पातु नमो महद्भ्यो नमोऽर्भकेभ्य इति सूचितं, तामेतां त्रयोदशीमृचमाह नमो महद्भ्य इति। अग्निना प्रेरितः शुनःशेपो विश्वान् देवाननया तुष्टाव, तथाचाम्नायते, तमग्निरुवाच विश्वान् देवान् स्तुह्यथ त्वोत्स्रक्ष्यामीति, स विश्वान् देवान् तुष्टाव, नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चेति। महान्तो गुणैरधिकाः, अर्भका गुणैर्न्यूनाः, युवानस्तरुणाः, आशिना वयसा व्याप्ता वृद्धाः, यथोक्तचतुर्विधदेहयुक्तेभ्यो देवेभ्यो नमो नमोऽस्तु। यदि शक्नवाम कथञ्चिद्धनादिसम्पत्त्या शक्ताश्चेत्तदानीं देवान् यजाम, हे देवाः ज्यायसो ज्येष्ठस्य देवताविशेषस्य आ सर्वतः प्रवृत्तं शंसं स्तोत्रं मा वृक्षि, अहं विच्छिन्नं माकार्षं। आशिनेभ्यः, अशू व्याप्तौ, बहुलमन्यत्रापीत्यौणादिक इनच्प्रत्ययः, चितः (पां ६।१।१६३।) इत्यन्तोदात्तत्वं, यजाम, शपः पित्त्वादनुदात्तत्वं, तिङश्च सार्वधातुकस्वरेण धातुस्वरः। शक्नवाम, शक्लृ शक्तौ, आडुत्तमस्य पिच्च (पां ३।४।९२।) इति तिङः पिद्भावादनुदात्तत्वे सति विकरणस्वरः, निपातैर्यद्यदिहन्त (पां ८।१।३०।) इत्यादिना निघातप्रतिषेधः। ज्यायसः, प्रशस्यशब्दादीयसुनि, ज्य च (पां ५।३।६१।) इति ज्यादेशः, ज्यादादीयसः (पां ६।४।१६०।) इति ईयसुन ईकारस्य आत्वं, नित्त्वादाद्युदात्तत्वं। शंसं, हलश्च (पां ३।३।१२१।) इति

## अष्टाविंशसूक्तं।

१ १ १ यत्र ग्रावा पृथुबुध्न ऊर्ध्वो भवति सोतवे।
उलूखलसुतानामवेद्विन्द्र जल्गुलः॥

वृक्। वृक्षि, ओव्रश्चू छेदने, व्यत्ययेनात्मनेपदोत्तमपुरुषैकवचनं, इट्, च्लेः सिच्, स्वरति सूति सूयति (पां ७।२।४४।) इत्यादिना इडभावः, स्कोः संयोगाद्योरन्ते च (पां ८।२।२९।) इत्युपधाभूतसकारलोपः, व्रश्च भ्रस्ज सृज मृज (पां ८।२।३६।) इत्यादिना षत्वं, षढोः कः सि (पां ८।२।४१।) इति कत्वं, आदेशप्रत्यययोः (पां ८।३।५९।) इति षत्वं, नमाङ्योगे (पां ६।४।७४।) इत्यडभावः॥ १२॥ इति प्रथमस्य द्वितीये चतुर्विंशो वर्गः॥ २४॥

यत्र ग्रावेति नवर्चं पञ्चमं सूक्तं, आदितः षडनुष्टुभः, आयजी इत्याद्यास्तिस्रो गायत्र्यः, आदितश्चतसृणामिन्द्रो देवता, ततो द्वे उलूखलदैवत्ये, तदनन्तरभाविन्यौ उलूखलमुसलदेवताके, अन्त्याया उच्छिष्टमित्यस्या हरिश्चन्द्राधिषवणचर्मसोमानामन्यतमो देवता, तथाच बृहद्देवतायामुक्तं, चर्माधिषवणीयं वा सोमं वाऽन्त्या प्रशंसतीति, तदुक्तमनुक्रमण्यां। यत्र ग्रावा नव षडनुष्टुबादि, यच्चिद्धीत्युलूखल्यौ, परे मौसल्यौ च, प्रजापतेर्हरिश्चन्द्रस्यान्त्या चर्मप्रशंसा वेति (निं चं २।) आद्याश्चतस्रोऽञ्जःसवे होमे विनियुक्ताः, पञ्चम्याद्याश्चतस्रोऽभिषवे, अन्त्या द्रोणकलशे सोमावनयने, तथाच ब्राह्मणं, अथ हैनं शुनःशेपोऽञ्जःसवन्ददर्श, तमेताभिश्चतसृभिरभितुष्टाव यच्चिद्धि त्वं गृहे गृह इति, अथैनं द्रोणकलशमभ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयाथोपास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवाञ्चकारेति, तत्र प्रथमामृचमाह यत्र ग्रावेति। हे इन्द्र, यत्र यस्मिन्नञ्जःसवे कर्मणि, सोतवे अभिषवार्थं, ग्रावा पाषाणः, पृथुबुध्नः स्थूलमूलः, ऊर्ध्वः उन्नतो भवति, तस्मिन् कर्मणि उलूखलसुतानां उलूखलेनाभिषुतानां रसं अवेत् स्वकीयत्वेनावगत्यैव जल्गुलो भक्षय। पृथुबुध्नः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं, निपातैर्यद्यदिहन्त (पां ८।१।३०।) इति निघातप्रतिषेधः। सोतवे, षुञ् अभिषवे, तुमर्थे सेसेन् (पां ३।४।९।) इति तवेन्प्रत्ययः, नित्त्वादाद्युदात्तत्वं। उलूखलसुतानां, उलूखलेन

। २ । यत्र द्वाविव जघनाधिषवण्या कृता । उलू॰ ॥
। ३ । यत्र नार्यपच्यवमुपच्यवं च शिक्षते । उलू॰ ॥
। ४ । यत्र मन्थां विबध्नते रश्मीन्यमितवा इव । उलू॰ ॥

सुतानां, तृतीयाकर्म्मणि ( पां ६ । २ । ४८ । ) इति पूर्वपदप्रकृतिस्वरत्वं । जल्गुलः, गल अदने, अस्माद्यङ्लुकि, लेण्मध्यमैकवचने, लेटोऽडाटौ ( पां ३ । ४ । ९४ । ) इत्यडागमः, इतश्चलोपः परस्मैपदेषु ( पां ३ । ४ । ९७ । ) इतीकारलोपः, उपधाया उत्वं, वर्णादिविशेषाभावश्च पृषोदरादित्वात् ॥ १ ॥

द्वितीयामृचमाह यत्र द्वाविवेति । यत्र यस्मिन् कर्म्मणि, अधिषवण्या उभे अभिषवणफलके द्वाविव जघना द्वौ जघनप्रदेशाविव । जघनं जघंन्यत इति यास्कः । कृता विस्तीर्णीकृते सम्पादिते, अन्यत् पूर्ववत् । जघना, हन्तेः शरीरावयवे द्वे चेत्यौणादिकसूत्रेण हन्धातोरच्प्रत्ययः, द्वित्वं, कर्द्दमादित्वान्मध्योदात्तः, सुपां सुलुक् ( पां ७ । १ । ३९ । ) इत्याकारः । अधिषवण्या, षुञ् अभिषवे, ल्युट्, भवे छन्दसि ( पां ४ । ४ । ११० । ) इति यत्, उपसर्गात्सुनोति ( पां ८ । ३ । ६५ । ) इति षत्वं, तित्स्वरितं ( पां ६ । १ । १८५ । ) इति स्वरितः, नच, यतोऽनावः ( पां ६ । १ । २१३ । ) इत्याद्युदात्तं, तत्र हि, निष्ठा च द्व्यजनात् ( पां ६ । १ । २०५ । ) इत्यस्मादनुवृत्तेर्द्व्यच्कस्यैव तदिति । कृता, पूर्ववदाकारः ॥ २ ॥

तृतीयामृचमाह यत्र नार्यपच्यवमिति । यत्र यस्मिन् कर्म्मणि नारी पत्नी अपच्यवं शालाया निर्गमनं, उपच्यवं च शालाप्राप्तिं, शिक्षते अभ्यासं करोति, अन्यत् पूर्ववत् । अपच्यवं, च्युङ् गतौ, ऋदोरप् ( पां ३ । ३ । ५७ । ) इत्यप्, गुणावादेशौ, थाथादिनोत्तरपदान्तोदात्तत्वं, एवमुपच्यवं । शिक्षते, शिक्ष विद्योपादाने, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः, निपातैर्यद्यदिहन्त ( पां ८ । १ । ३० । ) इति निघातप्रतिषेधः ॥ ३ ॥

चतुर्थीमृचमाह यत्र मन्थामिति । यत्र यस्मिन् कर्म्मणि मन्थामाग्निरमथनहेतुं मन्थानं विबध्नते निबध्नन्ति, तत्र दृष्टान्तः, रश्मीन् अश्वबन्धनार्थान् प्रग्रहान् यमितवा इव नियन्तुमिव, अन्यत् पूर्व-

१ ५ १ यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥ २५ ॥

वत्। मन्थां, पथिमथ्यृभुक्षामात् (पा ७।१।८५।) इति द्वितीयायामपि व्यत्ययेनात्वं, प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते, पथि मथोः सर्वनामस्थाने (पा ६।१।१९९।) इत्याद्युदात्तत्वं, यद्वा मथ्यतेऽनयेति मन्था, मथिविलोडन इत्यस्मात्, हलश्च (पा ३।३।१२१।) इति करणे घञ्, ततष्टाप्, ञित्वादाद्युदात्तत्वं। विबध्नते, बन्ध बन्धने, क्र्यादिभ्यः श्ना, अनिदितां (पा ६।४।२४।) इति नलोपः, श्नाभ्यस्तयोरातः (पा ६।४।११२।) इत्याकारलोपः प्रत्ययस्वरः, तिङ्ङि चोदात्तवति (पा ८।१।७१।) इति गतेर्निघातः। यमितवै, यमु उपरमे, तुमर्थेसेसेनसे… (पा ३।४।९।) इति तवैप्रत्ययः, इडागमश्छान्दसः, यद्वा ण्यन्तात् तवै प्रत्ययस्येडागमे सति णिलोपश्छान्दसः, अन्तश्च तवै युगपत् (पा ६।१।२००।) इत्याद्यन्तयोरुदात्तत्वं ॥ ४ ॥

अभिषवे विनियुक्तासु चतसृषु प्रथमां सूक्ते पञ्चमीमृचमाह यच्चिद्धि त्वमिति। हे उलूखलक, यच्चिद्धि यद्यपि त्वं अवघातार्थं गृहे गृहे युज्यसे, तथापीह वैदिके कर्मणि तीव्रमुसलप्रहारेण द्युमत्तमं अतिशयेन दीप्तं प्रभूतध्वनियुक्तं शब्दं वद, तत्र दृष्टान्तः, जयतामिव दुन्दुभिर्यथा युद्धे जयं प्राप्नुवतां राज्ञां दुन्दुभिर्महान्तं ध्वनिं करोति तद्वत्। उलूखलशब्दं यास्क एवं व्याख्यातवान्, उलूखलमुरुकरं वोर्ध्वखं वोर्करं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वै तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणमिति (नि ९।२।१०।) उलूखलक, अपादादाविति पर्युदासादाष्टमिकनिघाताभावे षाष्ठिकमाद्युदात्तत्वं। युज्यसे, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यकः स्वरः शिष्यते, न च तिङ्ङतिङः (पा ८।१।२८।) इति निघातः, निपातैर्यद्यदिहन्त (पा ८।१।३०।) इति निषेधात्, द्युमत्तमं, दीव्यतेर्दीप्त्यर्थस्य सम्पदादिलक्षणः क्विप्, दिव उत् (पा ६।१।१३१।) इत्युत्वं, यथादेशे; ह्रस्वनुड्भ्यां मतुप् (पा ६।१।१७६।) इति मतुप्, तस्य उदात्तत्वं, ननु दिव उदित्यत्र प्रातिपदिकं गृह्यते, न धातुरित्युक्तत्वात्, अत्र द्युरित्यादाविवाप्यूठा भवितव्यं, एवं तर्हि दीप्तिमत् समर्थाप-

१४ इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसं ।
अग्ने देवेषु प्रवोचः ॥
१५ आ नो भज परमेष्वा वाजेषु मध्यमेषु ।
शिक्षा वस्वो अन्तमस्य ॥ २२ ॥

स त्वं, दूराच्च दूरेऽपि, आसाच्च आसन्नदेशेऽपि, अघायोः, अघं पापमनिष्टं कर्तुमिच्छतो मर्त्यान्मनुष्यान्वैरिणो नोऽस्मान् सदमित् सर्वदैव निपाहि, नितरां पालय। अघायोः, सुप आत्मनः क्यच् ( पां ३ । १ । ८ । ) इति क्यच्, अश्वाघ स्यात् ( पां ७ । ४ । ३७ । ) इत्यात्वं । पाहि, पादादित्वादनिघातः। विश्वायुः, इण् गतावित्यस्माद्भावे, एतेर्णिच्चेत्युसिः प्रत्यय औणादिकः, विश्वमयनं गमनं यस्येति बहुव्रीहिः, बहुव्रीहौ विश्वं सञ्ज्ञायां ( पां । ६ । २ । १०६ । ) इति पूर्वपदान्तोदात्तत्वं ॥ ३ ॥

चतुर्थीमृचमाह इममू ष्विति । हे अग्ने, त्वमस्माकमस्मत्सम्बन्धिनं इममू षु पुरोदेशेऽनुष्ठीयमानमपि सनिं हविर्दानं नव्यांसं नवतरं गायत्रं स्तुतिरूपवचोऽपि देवेषु देवानामग्रे प्रवोचः प्रब्रूहि। ऊषु, निपातस्य च ( पां ६ । ३ । १३६ । ) इति संहितायां दीर्घः, सुञः ( पां ८ । ३ । १०७ । ) इति षत्वं। नव्यांसं, नवशब्दादीयसुनि, ईकारलोपश्छान्दसः, ईयसुनो नित्त्वादाद्युदात्तत्वं। वोचः, छन्दसि लुङ् लङ् लिटः ( पां ३ । ४ । ६ । ) इति लोडर्थे प्रार्थनायां लुङि, अस्यति वक्ति ख्यातिभ्योऽङ् ( पां ३ । १ । ५२ । ) इति च्लेरङादेशः, वच उम् ( पां ७ । १ । २० । ) इत्युमागमः ॥ ४ ॥

पञ्चमीमृचमाह आ नो भजेति। हे अग्ने, परमेषूत्कृष्टेषु द्युलोकवर्त्तिषु वाजेष्वन्नेषु नोऽस्मानाभज, सर्वतः प्रापय। मध्यमेष्वन्तरिक्षलोकवर्त्तिषु वाजेष्वाभज। अन्तमस्यान्तिमस्यान्तिकतमस्य भूलोकस्य सम्बन्धीनि वस्वो वसूनि शिक्ष देहि। शिक्ष, शिक्ष विद्योपादाने, शपः पित्त्वाद्धातुस्वरः, द्व्यचोऽतस्तिङः ( पां ६ । ३ । १३५ । ) इति संहितायां दीर्घः। अन्तमस्य, अन्तिकतमस्य, तमे तादेश्चेति तिकशब्दलोपः। ॥ ५ ॥ इति प्रथमस्य द्वितीये द्वाविंशो वर्गः ॥ २२ ॥

। ६ । विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ ।
सद्यो दाशुषे क्षरसि ॥
। ७ । यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः ।
स यन्ता शश्वतीरिषः ॥
। ८ । नकिरस्य सहन्त्य पर्येता कयस्य चित् ।
वाजो अस्ति श्रवाय्यः ॥

षष्ठीमृचमाह विभक्तासीति । हे चित्रभानो विचित्ररश्मियुक्ताग्ने, विभक्ता विशिष्टस्य धनस्य प्रापयितासि । तत्र दृष्टान्त उच्यते, आकार उपमानार्थः, यथा सिन्धोर्नद्या उपाके समीपे ऊर्म्मा ऊर्म्मिमत्तरङ्गोपलक्षितं कुल्यादिरूपं प्रवाहं विभजन्ति तद्वत्, दाशुषे हविर्दत्तवते यजमानाय सद्यस्तदानीमेव क्षरसि, कर्म्मफलभूतां वृष्टिं करोषि । सिन्धोः, स्यन्दू प्रस्रवणे, स्यन्देः सम्प्रसारणं धश्चेत्यौणादिक उःप्रत्ययः । ऊर्मा, अर्त्तेरूच्चेत्यौणादिक ऊत्प्रत्ययो मिच्च भवति । नित्त्वादित्यनुवृत्तौ आद्युदात्तत्वं । दाशुषे, छतमताय दाशुष इत्यत्रोक्तं ॥६॥

सप्तमीमृचमाह यमग्न इति । हे अग्ने, पृत्सु सङ्ग्रामेषु यं मर्त्त्यं यजमानमवा रक्षसि, यं पुरुषं वाजेषु सङ्ग्रामेषु जुनाः प्रेरयसि, स नरो यजमानः शश्वतीरिषः नित्यान्यन्नानि यन्ता नियन्तुं समर्थो भवति । पृत्सु, पद्दन्नादिषु मांसपृतनासानूनां मांस्पृत्स्नवो वाच्या इति वार्त्तिकेन पृतनाशब्दस्य पृदादेशः, सावेकाचः ( पां ६ । १ । १६८ । ) इति विभक्तेरुदात्तत्वं । अवः, आवः, अकाराकारयोर्विपर्य्ययः, यद्वा लेटि अडागमः, इतश्च ( पां ३ । ४ । १०० । ) इति सिप इकारस्य लोपः । जुनाः, जु इति गत्यर्थः सौत्रो धातुः, लङ्सिप्, क्र्यादिभ्यः श्ना, बहुलं छन्दस्यमाङ्योगेऽपि ( पां ६ । ४ । ७५ । ) इत्यडभावः, यद्वृत्तान्नित्यं ( पां ८ । १ । ६६ । ) इति यद्वृत्तयोगादनिघातः । यन्ता, तृनो नित्त्वादाद्युदात्तत्वं । शश्वतीः, उगितश्च ( पां ४ । १ । ६ । ) इति ङीप् ॥ ७ ॥

अष्टमीमृचमाह नकिरस्येति । हे सहन्त्य शत्रूणामभिभवनशीलाग्ने, अस्य त्वद्भक्तस्य यजमानस्य कयस्य चित् कस्यापि पर्य्येता नकिः आक्रमिता नास्ति, किञ्चास्य यजमानस्य श्रवाय्यः श्रवणीयो वाजो

। ९ । स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता ।
विप्रेभिरस्तु सनिता ॥

। १० ॥ जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
स्तोमं रुद्राय दृशीकं ॥ २३ ॥

ऽस्ति बलविशेषोऽस्ति। क्यस्य यकारोपजनश्छान्दसः। श्रवाय्यः, श्रुदक्षिस्पृहिगृहिभ्य आय्य इत्यौणादिक आय्यप्रत्ययः ॥ ८ ॥

नवमीमृचमाह स वाजमिति। विश्वचर्षणिः सर्वैर्मनुष्यैरुपेतः सोऽग्निरर्वद्भिरश्वैर्वाजं सङ्ग्रामं तरुता तारयितास्तु, विप्रेभिर्मेधाविभिर्ऋत्विग्भिः सहितः, सनिता धनस्य दातास्तु। विश्वचर्षणिः, विश्वे चर्षणयो मनुष्या यस्य, बहुव्रीहौ विश्वं संज्ञायां ( पां ६।२।१०६। ) इति पूर्वपदान्तोदात्तत्वं। अर्वद्भिः, ऋ गतौ, अन्येभ्योऽपि दृश्यन्ते ( पां ३।२।७५। ) इति वनिप्, भिसि, अर्वणस्त्रसावनञः ( पां ६।४।१२७। ) इति नकारस्य तृ इत्ययमादेशः। तरुता, तॄ प्लवनतरणयोः, अस्मात्, ग्रसित स्कभित ( पां ७।२।३४। ) इत्यादौ तृन्नन्तो निपातितः, निपातनादेवेकारस्योत्वं ॥ ९ ॥

अग्नेर्यामे होतुरतिरिक्तोक्थे जराबोधतद्विविड्ढीति स्तोत्रियतृचः, यस्य पशवो नोपधावेरन्निति खण्डे सूचितं, अतिरिक्तोक्थानि जराबोध तद्विविड्ढीति, तामेतां सूक्ते दशमीमृचमाह जराबोध तदिति। हे जराबोध जरया स्तुत्या बोधमानाग्ने, विशे विशे तत्तद्यजमानरूपप्रजानुग्रहार्थं, यज्ञियाय यज्ञसम्बन्ध्यनुष्ठानसिद्ध्यर्थं, देवयजनं विविड्ढि प्रविश, यजमानोऽपि रुद्राय क्रूरायाग्नये तुभ्यं, दृशीकं दर्शनीयं समीचीनं स्तोमं स्तोत्रं करोतीति शेषः। अत्र यास्क एवं व्याख्यातवान्, जरा स्तुतिर्जरतेः स्तुतिकर्म्मणस्तां बोधयता बोधयितरिति वा तद्विविड्ढि तत्कुरु, मनुष्यस्य यज्ञियाय यजनाय स्तोमं रुद्राय दर्शनीयमिति। ( निं १०।८। ) जराबोध, जॄष् वयोहानौ, अत्र स्तुत्यर्थः, षिद्भिदादिभ्योऽङ् ( पां ३।३।१०४। ) इत्यङ् प्रत्ययः, ततष्टाप्, जरया स्तुत्या बोधो यस्यासौ जराबोधः, यद्वा जरया बुध्यत इति जराबोधः, कर्म्मणि घञ्, आमन्त्रिताद्युदात्तत्वं। विविड्ढि, विश प्रवेशने, लोटो हि, बहुलं छन्दसीति शपः श्लुः, अभ्यासहलादिशेषौ,

। ११ । स नो महां अनिमानो धूमकेतुः पुरुश्चन्द्रः ।
धिये वाजाय हिन्वतु ॥

। १२ । स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
उक्थैरग्निर्बृहद्भानुः ॥

झभषभ्यो हेर्धिः (पां ६ । ४ । १०१ ।) इति हेर्धिरादेशः, वलचुत्वे, यद्वा, विष्लृ व्याप्तावित्यस्माल्लोण्मध्यमैकवचने अभ्यासस्य गुणाभावः। विप्रे विप्रे, सावेकाचः (पां ६ । १ । १६८ ।) इति चतुर्थ्या उदात्तत्वं, अनुदात्तञ्च (पां ८ । १ । ३ ।) इत्याम्रेडितानुदात्तत्वं । यज्ञियाय, यज्ञर्त्विग्भ्यां घखञौ (पां ५ । १ । ७१ ।) इति घः । दृशीकं, अनि दृशिभ्यांकिच्चेत्यौणादिकः कीकन्प्रत्ययः, नित्त्वादाद्युदात्तः ॥ १० ॥ इति प्रथमस्य द्वितीये त्रयोविंशो वर्गः ॥ २३ ॥

एकादशीमृचमाह स नो महानिति । सोऽग्निर्नोऽस्मान् धिये कर्मणे वाजायान्नाय च हिन्वतु प्रीणयतु, कीदृशः सः, महान् गुणाधिकः । अनिमानो निमानवर्जितः, अपरिच्छिन्न इत्यर्थः । धूमकेतुर्धूमेन ज्ञाप्यमानः । पुरुश्चन्द्रो बहुदीप्तियुक्तः । महाँ अनीत्यत्र संहितायां नकारस्य रुत्वानुनासिकावुक्तौ । अनिमानः, न विद्यते निमानोऽस्येति बहुव्रीहौ, नञसुभ्यां (पां ६ । २ । १७२ ।) इत्युत्तरपदान्तोदात्तत्वं । धूमकेतुः, इषियुधीन्धिदसिश्याधूसूभ्यो मक् इत्यौणादिको मक्प्रत्ययः, धूमः केतुर्यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । पुरुश्चन्द्रः, चदि आह्लादने दीप्तौ च, अस्मात्, स्फायि तञ्चीत्यादिना कर्त्तरि औणादिको रक्प्रत्ययः, पुरुश्चासौ चन्द्रश्चेति समासान्तोदात्तत्वं, ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे (पां ६ । १ । १५१ ।) इति सुट्, तस्य श्चुत्वेन शकारः । धिये, सावेकाच इति चतुर्थ्या उदात्तत्वं । हिन्वतु, हिविः प्रीणनार्थः, इदितो नुम् धातोः (पां ७ । १ । ५८ ।) इति नुमागमः ॥ ११ ॥

द्वादशीमृचमाह स रेवाँ इवेति । सोऽग्निरुक्थैः स्तोत्रैर्युक्तान् नोऽस्मान् शृणोतु, तत्र दृष्टान्तः, रेवानिव, यथा लोके धनवान्राजा बन्दिनां स्तोत्रं शृणोति तद्वत् । कीदृशः सः, विश्पतिः प्रजापालकः । दैव्यः, देवानां सम्बन्धी, अग्निर्वै देवानां होतेति श्रुत्यन्तरात्, केतुर्दूतः पालकः, अग्निर्वै देवानां दूत आसीदिति श्रुतेः । बृहद्भानुः, प्रौढरश्मिः

११३१ नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नमो आशिनेभ्यः । यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमावृक्षि देवाः ॥ २४ ॥

स देवान्, एतत्तदोः सुलोपोऽकोरनञ् समासे हलि ( पां ६ । १ । १३२ । ) इति सोर्लोपः, रयेर्मतौ बहुलमिति सम्प्रसारणं पर-पूर्वत्वं, आद्गुणः ( पां ६ । १ । ८१ । ) इति गुणः, छन्दसीरः ( पां ८ । २ । १५ । ) इति मतुपो वत्वं, अरिशब्दाच मतुप उदात्तत्वं वक्तव्य-मिति वार्त्तिकेन मतुप उदात्तत्वं । विश्पतिः, परादिश्छन्दसि बहुलं ( पां ६ । २ । १९९ । ) इत्युत्तरपदान्तोदात्तत्वं । इन्द्रानुः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ १२ ॥

दर्शपौर्णमासयोस्तु स्रुगादानात् पूर्वभाविनि जपे नमो महद्भ्य इत्येषा, अग्न्यौदने प्राशित्र्यमाणा इति खण्डे सूर्यो नो दिवस्पातु नमो महद्भ्यो नमोऽर्भकेभ्य इति सूचितं, तामेतां त्रयोदशीमृचमाह नमो महद्भ्य इति । अग्निना प्रेरितः शुनःशेपो विश्वान् देवाननया तुष्टाव, तथाचाम्नायते, तमग्निरुवाच विश्वान् देवान् स्तुह्यथ त्वोत्स्रक्ष्यामीति, स विश्वान् देवान् तुष्टाव, नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चेति । महान्तो गुणैरधिकाः, अर्भका गुणैर्न्यूनाः, युवानस्तरुणाः, आशिना वयसा व्याप्ता वृद्धाः, यथोक्तचतुर्विधदेहयुक्तेभ्यो देवेभ्यो नमो नमोऽस्तु । यदि शक्नवाम कथञ्चिद्धनादिसम्पत्त्या शक्ताश्चेत्तदानीं देवान् यजाम, हे देवाः ज्यायसो ज्येष्ठस्य देवताविशेषस्य मा सर्वतः प्रवृत्तं शंसं स्तोत्रं मा वृक्षि, अहं विच्छिन्नं माकार्षं । आशिनेभ्यः, अशू व्याप्तौ, बहुलमन्यत्रापीत्यौणादिक इनच्प्रत्ययः, चितः ( पां ६ । १ । १६३ । ) इत्यन्तोदात्तत्वं, यजाम, शपः पित्त्वादनुदात्तत्वं, तिङश्चलसार्वधातुक-स्वरेण धातुस्वरः । शक्नवाम, शकॢ शक्तौ, आडुत्तमस्य पिच्च ( पां ३ । ४ । ९२ ।) इति तिङः पिद्वद्भावादनुदात्तत्वे सति विकरणस्वरः, निपा-तैर्यद्यदिहन्त ( पां ८ । १ । ३० । ) इत्यादिना निघातप्रतिषेधः । ज्यायसः, प्रशस्यशब्दादीयसुनि, ज्य च (पां ६ । १ । ६१ । ) इति ज्यादेशः, ज्यादादीयसः ( पां ६ । ४ । १६० । ) इति ईयसुन ईकारस्य आत्वं, नित्त्वादाद्युदात्तत्वं । शंसं, हलश्च (पां ३ । ३ । १२१ । ) इति

## अष्टाविंशसूक्तं ।

१ । १ । यत्र ग्रावा पृथुबुध्न ऊर्द्ध्वो भवति सोतवे ।
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥

घञ् । वृक्षि, ओव्रश्चू छेदने, व्यत्ययेनात्मनेपदोत्तमपुरुषैकवचनं, लुङ्, च्लेः सिच्, स्वरति सूति सूयति ( पा ७ । २ । ४४ । ) इत्यादिना इडभावः, स्कोः संयोगाद्योरन्ते च ( पा ८ । २ । २९ । ) इत्युपधाभूतसकारलोपः, व्रश्च भ्रस्ज सृज मृज ( पा ८ । २ । ३६ । ) इत्यादिना षत्वं, षढोः कः सि ( पा ८ । २ । ४१ । ) इति कत्वं, आदेशप्रत्यययोः ( पा ८ । ३ । ५९ । ) इति षत्वं, नमाङ्योगे ( पा ६ । ४ । ७४ । ) इत्यडभावः ॥ १२ ॥ इति प्रथमस्य द्वितीये चतुर्विंशो वर्गः ॥ २४ ॥

यत्र ग्रावेति नवर्चं पञ्चमं सूक्तं, आदितः षडनुष्टुभः, आयजी इत्याद्यास्तिस्रो गायत्र्यः, आदितश्चतसृणामिन्द्रो देवता, ततो द्वे उलूखलदैवत्ये, तदनन्तरभाविन्या उलूखलमुसलदेवताके, अन्त्याया उच्छिष्टमित्यस्या हरिश्चन्द्राधिषवणचर्म्मसोमानामन्यतमो देवता, तथाच बृहद्देवतायामुक्तं, चर्म्माधिषवणीयं वा सोमं वान्त्या प्रशंसतीति, तदुक्तमनुक्रमण्यां । यत्र ग्रावा नव षडनुष्टुबादि, यच्चिद्ध्यौलूखल्यौ, परे मौसल्यौ च, प्रजापतेर्हरिश्चन्द्रस्यान्त्या चर्म्मप्रशंसा वेति (निं चं २ ।) आद्याश्चतस्रोऽञ्जःसवे होमे विनियुक्ताः, पञ्चम्याद्याश्चतस्रोऽभिषवे, अन्त्या द्रोणकलशे सोमावनयने, तथाच ब्राह्मणं, अथ हैनं शुनःशेपोऽञ्जःसवन्ददर्श, तमेताभिश्चतसृभिरभितुष्टाव यच्चिद्धि त्वं गृहे गृह इति, अथैनं द्रोणकलशमभ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयाथो हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवाञ्चकारेति, तत्र प्रथमामृचमाह यत्र ग्रावेति । हे इन्द्र, यत्र यस्मिन्नञ्जःसवे कर्म्मणि, सोतवे अभिषवार्थं, ग्रावा पाषाणः, पृथुबुध्नः स्थूलमूलः, ऊर्द्ध्व उन्नतो भवति, तस्मिन् कर्म्मणि उलूखलसुतानां उलूखलेनाभिषुतानां रसं अवेत् स्वकीयत्वेनावगत्यैव जल्गुलो भक्षय । पृथुबुध्नः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं, निपातैर्यद्यदिहन्त (पा ८ । १ । ३० ।) इति निघातप्रतिषेधः । सोतवे, षुञ् अभिषवे, तुमर्थे सेसेन् ( पा ३ । ४ । ९ ।) इति तवेन्प्रत्ययः, नित्त्वादाद्युदात्तत्वं । उलूखलसुतानां, उलूखलेन

। २ । यत्र द्वाविव जघनाधिषवण्या कृता । उलू॰ ॥
। ३ । यत्र नार्यपच्यवमुपच्यवं च शिक्षते । उलू॰ ॥
। ४ । यत्र मन्थां विबध्नते रश्मीन्यमितवा इव । उलू॰ ॥

सुतानां, तृतीयाकर्म्मणि (पां ६ । २ । ४८ ।) इति पूर्वपदप्रकृतिस्वरत्वं । जघगुलः, गल अदने, अस्मादाहुलुकि, लोण्मध्यमैकवचने, लोटोऽडाटौ (पां ३ । ४ । ९४ ।) इत्यडागमः, इतश्चलोपः परस्मैपदेषु (पां ३ । ४ । ९७ ।) इतीकारलोपः, उपधाया उत्वं, हलादिशेषाभावश्च पृषोदरादित्वात् ॥ १ ॥

द्वितीयामृचमाह यत्र द्वाविवेति । यत्र यस्मिन् कर्म्मणि, अधिषवण्या उभे अभिषवणफलके द्वाविव जघना द्वौ जघनप्रदेशाविव । जघनं जघंन्यत इति यास्कः । कृता विस्तीर्णीकृते सम्पादिते, अन्यत् पूर्ववत् । जघना, हन्तेः शरीरावयवे द्वेचेत्यौणादिकसूत्रेण हनधातोरच्प्रत्ययः, द्वित्वं, कर्द्दमादित्वान्मध्योदात्तः, सुपां सुलुक् (पां ७ । १ । ३९ ।) इत्याकारः । अधिषवण्या, षुञ् अभिषवे, ल्युट्, भवेच्छन्दसि (पां ४ । ४ । ११० ।) इति यत्, उपसर्गात्सुनोति (पां ८ । ३ । ६५ ।) इति षत्वं, तित्स्वरितं (पां ६ । १ । १८५ ।) इति स्वरितः, नच, यतोऽनावः (पां ६ । १ । २१३ ।) इत्याद्युदात्तं, तत्र हि, शिक्षा च इत्यनात् (पां ६ । १ । २०५ ।) इत्यस्यानुवृत्तेर्द्व्यच्कस्यैव तदिति । कृता, पूर्ववदाकारः ॥ २ ॥

तृतीयामृचमाह यत्र नार्यपच्यवमिति । यत्र यस्मिन् कर्म्मणि नारी पत्नी अपच्यवं शालाया निर्गमनं, उपच्यवं च शालाप्राप्तिं, शिक्षते अभ्यासं करोति, अन्यत् पूर्ववत् । अपच्यवं, च्युङ् गतौ, ऋदोरप् (पां ३ । ३ । ५७ ।) इत्यप्, गुणावादेशौ, थाथादिनोत्तरपदान्तोदात्तत्वं, एवमुपच्यवं । शिक्षते, शिक्ष विद्योपादाने, अदुपदेशात्लसार्वधातुकानुदात्तत्वे धातुस्वरः, निपातैर्यद्यदिहन्त (पां ८ । १ । ३० ।) इति निघातप्रतिषेधः ॥ ३ ॥

चतुर्थीमृचमाह यत्र मन्थामिति । यत्र यस्मिन् कर्म्मणि मन्थामाथिरमथनहेतुं मन्थानं विबध्नते निबध्नन्ति, तत्र दृष्टान्तः, रश्मीन् अश्वबन्धनार्थान् प्रग्रहान् यमितवा इव नियन्तुमिव, अन्यत् पूर्व-

१ ५ १ यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥ २५ ॥

वत्। मन्थां, पथिमथ्यृभुक्षामात् ( पां ७ । १ । ८५ । ) इति द्वितीयायामपि व्यत्ययेनात्वं, प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते, पथि मथोः सर्वनामस्थाने ( पां ६ । १ । १९९ । ) इत्याद्युदात्तत्वं, यद्वा मथ्यतेऽनयेति मन्था, मथिविलोडन इत्यस्मात्, हलश्च ( पां ३ । ३ । १२१ । ) इति करणे घञ्, ततष्टाप्, ञित्वादाद्युदात्तत्वं। विबध्नीते, बन्ध बन्धने, क्र्यादिभ्यः श्ना, अनिदितां ( पां ६ । ४ । २४ । ) इति नलोपः, श्नाभ्यस्तयोरातः ( पां ६ । ४ । ११२ । ) इत्याकारलोपः प्रत्ययस्वरः, तिङि चोदात्तवति ( पां ८ । १ । ७१ । ) इति गतेर्निघातः । यमितवै, यमु उपरमे, तुमर्थेसेसेनसेन् ( पां ३ । ४ । ९ । ) इति तवैप्रत्ययः, इडागमश्छान्दसः, यद्वा ण्यन्तात् तवै प्रत्ययस्येडागमे सति णिलोपश्छान्दसः, अन्तश्चतवैयुगपत् ( पां ६ । १ । २०० । ) इत्याद्यन्तयोरुदात्तत्वं ॥ ४ ॥

अभिषवे विनियुक्तां चतसृषु प्रथमां सूक्ते पञ्चमीमृचमाह यच्चिद्धि त्वमिति । हे उलूखलक, यच्चिद्धि यद्यपि त्वं अवघातार्थं गृहे गृहे युज्यसे, तथापीह वैदिके कर्म्मणि तीव्रमुसलप्रहारेण द्युमत्तमं अतिशयेन दीप्तं प्रभूतध्वनियुक्तं शब्दं वद, तत्र दृष्टान्तः, जयतामिव दुन्दुभिर्यथा युद्धे जयं प्राप्नुवतां राज्ञां दुन्दुभिर्महान्तं ध्वनिं करोति तद्वत्। उलूखलशब्दं यास्क एवं व्याख्यातवान्, उलूखलमुरुकरं वोर्क्करं वोर्करं वोरुमे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वै तत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणमिति ( निं ९ । २ । २० । ) उलूखलक, अपादादाविति पर्य्युदासादाष्टमिकनिघाताभावे षाष्ठिकमाद्युदात्तत्वं। युज्यसे, अनुपदेशात्सार्वधातुकानुदात्तत्वे यक् स्वरः शिष्यते, न च तिङ्ङतिङः ( पां ८ । १ । २८ । ) इति निघातः, निपातैर्यद्यदिहन्त ( पां ८ । १ । ३० । ) इति निषेधात्, द्युमत्तमं, दीव्यतेर्दीप्त्यर्थस्य सम्पदादिलक्षणः क्विप्, दिव उत् ( पां ६ । १ । १३१ । ) इत्युत्वं, यथादेशे; ह्रस्वनुड्भ्यां मतुप् ( पां ६ । १ । १७६ । ) इति मतुप्, तस्य उदात्तत्वं, ननु दिव उदित्यत्र प्रातिपदिकं गृह्यते, न धातुरित्युक्तत्वात्, अत्र द्युरित्यादाविवाप्यूठा भवितव्यं, एवं तर्हि दीप्तिमत् सम्भवाच-

१ ६ १ उत स्म ते वनस्पते वातो विवात्यग्रमित् ।
अथो इन्द्राय पातवे सुनु सोममुलूखल ॥
१ ७ १ आयजी वाजसातमा ता ह्युच्चा विजर्भृतः ।
हरी इवान्धांसि बप्सता ॥

केन दिवुप्रातिपदिकेन दीर्घिर्लक्ष्यत इत्युक्तं भविष्यति ॥ ५ ॥ इति प्रथमस्य द्वितीये पञ्चविंशो वर्गः ॥ २५ ॥

षष्ठीमृचमाह उत स्म त इति । उत अपि च हे वनस्पते, उलूखल-रूपवृक्ष, ते अग्रमित् तव पुरत एव वातो विवाति स्म त्वरोपेतमु-सलप्रहारैर्वायुर्विशेषेण प्रसरति खलु, अथोऽनन्तरं हे उलूखल, इन्द्रो-पकारार्थं पातवे पातुं सोमं सुनु, सोमाभिषवं त्वं कुरु। वनस्पते, पारस्करादित्वात् सुट्कार्य्यकारणशब्दः। पातवे, पा पाने, तुमर्थेसेसे-नसे (पां ३ । ४ । ९ ।) इति तवेन् प्रत्ययः, ञ्नित्यादिर्नित्यं (पां ६ । १ । १९७ ।) इत्याद्युदात्तत्वं । सुनु, उतश्च प्रत्ययादसंयोगपूर्वात् (पां ६ । ४ । १०६ ।) इति हेर्लुक्, विकरणस्वरेणाद्युदात्तत्वं, पादादित्वाद निघातः। उलूखल, ऊर्द्धं खमस्येत्युलूखलः, पृषोदरादित्वादाकृति-गणः ॥ ६ ॥

सप्तमीमृचमाह आयजी वाजसातमेति। ये उलूखल मुसले आयजी सर्वतो यज्ञसाधने वाजसातमा अतिशयेनान्नप्रदे, ता हि ते खलु उच्चा प्रौढध्वनिर्यथा भवति तथा विजर्भृतो विशेषेण पुनः पुनर्विहारं कुरुतः। तत्र दृष्टान्तः, अन्धांस्यन्नानि यवसकादीनि खाद्यानि बप्सन्तौ भक्षयन्तौ हरी इव चन्द्रस्याश्वाविव। अत्र यास्क एवं व्याचख्यौ, आयजी आयष्टव्ये अन्नानां सम्भक्ततमे ते उच्चैर्विजर्हियेते हरी इवान्धांसि भक्षयन्ताविति (निं ९ । ४ । २ ।) आयजी, यजेरौणादिकः करणे इःप्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वं। वाजसातमा, वाजं सनोतीति वाजसाः, षणु दाने, जन सन खन क्रमगमो विट् (पां ३ । २ । ६७ ।) इति विट्प्रत्ययः, विड्वनोरनुनासिकस्यात् (पां ६ । ४ । ४१ ।) इत्यात्वं, कृदुत्तरपदप्रकृतिस्वरत्वे आतिशायनिकस्तमप्, सुपां सुलुक् (पां ७ । १ । ३९ ।) इत्यादिना पूर्वसवर्णदीर्घः। विजर्भृतः, हृञ् हरणे, अस्माद्यङ्लुकि, अभ्यासहलादिशेषारदत्वेषु कृतेषु, रुग्रिकौ च लुकि

। ८ । ता नो अद्य वनस्पती ऋष्वावृष्वेभिः सोतृभिः ।
इन्द्राय मधुमत्सुतं ॥

। ९ । उच्छिष्टं चम्वोर्भर सोमं पवित्र आसृज ।
निधेहि गोरधि त्वचि ॥ २६ ॥

(पां ७।४।९१।) इति रुगागमः, ततः प्रत्ययलक्षणेन धातुसञ्ज्ञायां, लिटि, द्विवचनं तस्, चर्करीतं परस्मैपदमदादिवच्चेति वचनाच्छपो लुक्, गुणे प्राप्ते, क्ङिति च (पां १।१।५।) इति प्रतिषेधः, ऋग्वेदोर्भश्छन्दसीति वार्त्तिकेन भत्वं, प्रत्ययस्वरः, हि च (पां ८।१।३४।) इति निघातप्रतिषेधः। बप्सता, भस भक्षणदीप्त्योः, लटः शतृ, जुहोत्यादिभ्यः श्लुः (पां २।४।७५।) इति श्लुः, घसिभसोर्हलि च (पां ६।४।१००।) इत्युपधालोपः, नाभ्यस्तात् (पां ७।१।७८।) इति नुम्प्रतिषेधः, अभ्यस्तानामादिः (पां ६।१।१८९।) इत्याद्युदात्तत्वं ॥ ७ ॥

अष्टमीमृचमाह ता नो अद्येति। अद्यास्मिन् कर्म्मणि, हे वनस्पती उलूखलमुसलरूपौ तौ युवां, ऋष्वेभिर्दर्शनीयैः, सोतृभिरभिषवकर्तृभिः सह, ऋष्वौ तौ दर्शनीयौ भूत्वा, इन्द्राय, इन्द्रार्थं, मधुमत्, माधुर्योपेतं सोमरूपं नोऽस्मदीयं सुतं अभिषुणुतं। ता, सुपां सुलुगित्याकारः। नो अद्य, प्रकृत्यान्तःपादं (पां ६।१।११५।) इत्यादिना प्रकृतिभावः। वनस्पती, उभयपदप्रकृतिस्वरे प्राप्ते, आमन्त्रितस्य च (पां ८।१।१९।) इति सर्वानुदात्तत्वं, प्लुतप्रगृह्या अचि (पां ६।१।१२५।) इति प्रकृतिभावः। सुतं, षुञ् अभिषवे, बहुलं छन्दसीति विकरणस्य लुक्, निघातः ॥ ८ ॥

सोमावनयने विनियुक्तां सूक्ते नवमीमृचमाह उच्छिष्टमिति। हे ऋत्विग्विशेष, हरिश्चन्द्रदेवतापन्ने हरिश्चन्द्रेति वा, चम्वोः सोमस्य भक्ष्यत्वसम्पादकयोरधिफलकयोः शिष्टमभिषवराहित्येनावशिष्टं सोमं उद्धर, शकटोपरि भर, सोममभिषुतं सोमं पवित्रे दशापवित्रे आसृज, आनीय प्रक्षिप, प्रक्षिप्ते सत्यवशिष्टं सोमं, गोस्त्वचि आनडुहे चर्म्मणि, अधिनिदेहि, अध्यारोप्य स्थापय। चम्वोः, चमु अदने, चम्यते भक्ष्यत इति चमूः, कषि चमीत्यादिना औणादिक ऊःप्रत्ययः, प्रत्ययस्वरः सप्तमीद्विवचनस्य, उदात्तस्वरितयोर्यणः (पां ८।२।४।) इति स्वरि-

ऊनत्रिंशसूक्तं ॥

१ १ १ यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ।

नत्वं, उदात्तयणो हल्पूर्वात् ( पां ६ । १ । १७४ । ) इति व्यत्ययेन न भवति । भर, इयहोर्भश्छन्दसीति सूत्रवार्त्तिकेन हकारस्य भत्वं । धेहि, घ्वसोरेद्धावभ्यासलोपश्च ( पां ६ । ४ । ११९ । ) इत्येकारादेश-स्तत्सन्नियोगेनाभ्यासलोपश्च न भवति, निघातः । त्वचि, सावेकाच-स्तृतीयादिः ( पां ६ । १ । १६८ । ) इति विभक्तेरुदात्तत्वं ॥ ९ ॥ इति प्रथमस्य द्वितीये षड्विंशो वर्गः ॥ २६ ॥

यच्चिद्धि सत्य सोमपा इति सप्तर्चं षष्ठं सूक्तं शुनःशेपस्यार्षं पाङ्क्त-मैन्द्रं, अनुक्रमणिका च, यच्चित् सप्त पाङ्क्तमिति । पृष्ठ्यषडहस्य पञ्च-मेऽहनि माध्यन्दिने सवने होत्रका यच्चिद्धीति सप्तर्चं सूक्तं त्रींस्तृचान् कृत्वा स्वशस्त्रमेकैकं तृचमावपेरन्, चतुर्थेऽहनीति खण्डे यच्चिद्धि सत्य सोमपा इत्येकैकमेवेति सूचितं, तत्र प्रथमामृचमाह यच्चिद्धीति । विश्वैर्देवैः प्रेरितः शुनःशेप एतदादिकाभिर्द्वाविंशतिसङ्ख्याकाभि-र्ऋग्भिरिन्द्रं तुष्टाव, तथा च ब्राह्मणं, तं विश्वेदेवा ऊचुरिन्द्रो वै देवा-नामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं नु स्तुह्य-त्वोत्स्रक्ष्याम इति, स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इत्येतेन सप्तर्चेन सूक्तेन चोत्तरस्य पञ्चदशभिरिति । हे सोमपा, सोमस्य पातः, सत्यवादिन्निन्द्र, यच्चिद्धि यद्यपि, वयं अनाशस्ता इव स्मसि अप्रशस्ता इव भवामस्तथापि हे तुवीमघ बहुधनेन्द्र, त्वं गोष्वश्वेषु शुभ्रिषु शोभनेषु सहस्रसङ्ख्याकेषु च निमित्तभूतेषु नोऽस्मान् क्षिप्रं आशंसय सर्वतः प्रशस्तान् कुरु, अस्मद्दोषमनपेक्ष्य गवादीन् प्रयच्छेत्यर्थः । सोमपा, विजन्तः, आमन्त्रितनिघातः । अनाशस्ता इव, शंस्स्तुतौ, निष्ठा ( पां ३ । २ । १०२ । ) इति क्तः, यस्य विभाषा ( पां ७ । २ । १५ । ) इतीट्प्रतिषेधः, नञा बहुव्रीहौ, नञ्सुभ्यां ( पां ६ । २ । १७२ । ) इत्युत्तरपदान्तोदात्तत्वं । स्मसि, इदन्तो मसिः ( पां ७ । १ । ४६ । ) इति मसिः । तू, ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणां ( पां ६ । ३ । १३३ । ) इति दीर्घः । गोषु, सावेकाचः ( पां ६ । १ । १६८ । ) इति

१ २ १ शिप्रिन्वाजानाम्पते शचीवस्तव दंसना ।
आ तू न• ॥
१ ३ १ निष्वापया मिथूदृशा सस्तामबुध्यमाने ।
आ तू न• ॥

विभक्त्युदात्तत्वस्य, नगोश्वन् साववर्णां (पा ६ । १ । १८२ ।) इति प्रतिषेधः । अश्वेषु, अशुतेऽश्वानमित्यश्वः, अशिप्रुषीत्यादिना क्वन्प्रत्ययः, नित्त्वादाद्युदात्तत्वं । शुभ्रिषु, शुभ दीप्तौ, स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्, इत्यौणादिकः क्मिन्प्रत्ययः, व्यत्ययेनान्तोदात्तत्वं ॥ १ ॥

द्वितीयामृचमाह शिप्रिन् वाजानामिति । हे शचीवः, शक्तिमन्, शिप्रिन् शोभनहनूयुक्त, वाजानाम्पते अन्नानाम्पालक, तव दंसना कर्म्मविशेषोऽनुग्रहरूपः सर्वदा वर्त्तते, अन्यत् पूर्ववत् । शिप्रिन्, शिप्रे हनूनासिके वेति यास्कः, अत इनिठनौ (पा ५ । २ । ११५ ।) इति मत्वर्थीय इनिः प्रत्ययः, आमन्त्रिताद्युदात्तत्वं । वाजानाम्पते, सुबामन्त्रिते पराङ्गवत्स्वरे (पा २ । १ । २ ।) इति पराङ्गवत्त्वात् षष्ठ्यामन्त्रितसमुदायनिघातः, नच आमन्त्रितं पूर्वमविद्यमानवत् (पा ८ । १ । ७२ ।) इति शिप्रिन्नित्यस्याविद्यमानवत्त्वेन पदादपरत्वात्, पादादित्वाच्च निघातः, नामन्त्रिते समानाधिकरणे सामान्यवचनं (पा ८ । १ । ७३ ।) इत्यविद्यमानवत्त्वप्रतिषेधात् । शचीवः, छन्दसीरः (पा ८ । २ । १५ ।) इति मतुपो वत्वं, मतुवसोरु सम्बुद्धौ छन्दसि (पा ८ । ३ । १ ।) इति रुत्वे, खरवसानयोः (पा ८ । ३ । १५ ।) विसर्जनीयः, पादादित्वादामन्त्रितनिघाताभावः ॥ २ ॥

तृतीयामृचमाह निष्वापयेति । मिथूदृशा परस्परं सङ्गतत्वेन दृश्यमाने यमदूत्यौ निष्वापय नितरां सुप्ते कुरु, ते चास्मान्मारयितुमबुध्यमाने सत्यौ सस्तां, निद्रां प्राप्नुतां । अन्यत्पूर्ववत् । निष्वापय, सुषामादित्वात् षत्वं, अन्येषामपि दृश्यते (पा ६ । ३ । १३७ ।) इति दीर्घः । मिथूदृशा, मिथुनतया युगलरूपेण पश्यत इति मिथूदृशा, क्विन्च (पा ३ । २ । ७६ ।) इति दृशेः कर्त्तरि क्विप्, कृदुत्तरपदप्रकृतिस्वरत्वं, पूर्ववत् पूर्वपदस्य दीर्घत्वं, सुपां सुलुक् (पा ७ । १ । ३९ ।) इति विभक्तेराकारः । सस्तां, षस स्वप्ने, लोटि तसस्तां, अदिप्रभृतिभ्यः

१ ४ १ ससन्तु त्या अरातयो बोधन्तु शूर रातयः १
आ तू न॰ ११
१ ५ १ समिन्द्र गर्दभं मृण नुवन्तं पापयामुया १
आ तू न॰ ११
१ ६ १ पताति कुण्डृणाच्या दूरं वातो वनादधि १
आ तू न॰ ११

शपः ( पां २ । ४ । ७२ । ) इति शपो लुक्, प्रत्ययस्वरः, पादादित्वान्निघाताभावः । अबुध्यमाने, नेति नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं ॥३॥

चतुर्थीमृचमाह ससन्तु त्या इति । त्या अस्माभिरदृश्यमानाः परोक्षास्ता अरातयोऽदानशीलाः शत्रवः ससन्तु निद्रामाप्नुवन्तु, हे शूर शौर्य्ययुक्तेन्द्र, रातयो दानशीला बन्धवो बोधन्तु अस्मान् बुध्यन्तां । अन्यत् पूर्ववत् । ससन्तु, प्रत्ययस्वरः । अरातयः, रा दाने, मन्त्रे वृष ( पां ३ । ३ । ९६ । ) इत्यादिना भावे क्तिन्, न विद्यते रातिर्येष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं, नञ्सुभ्यां ( पां ६ । २ । १७२ । ) इति तु सर्वे विधयश्छन्दसि विकल्पन्त इति परिभाषया न भवति, यद्वा क्तिच्क्तौ च सञ्ज्ञायां ( पां ३ । ३ । १७४ । ) इति कर्त्तरि क्तिच्, नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं । बोधन्तु, पादादित्वात्, तिङ्ङतिङः ( पां ८ । १ । २८ । ) इति निघाताभावः ॥ ४ ॥

पञ्चमीमृचमाह समिन्द्र गर्द्दभमिति । हे इन्द्र अमुया अनयास्माभिः श्रूयमाणया पापया निन्दारूपया वाचा नुवन्तं स्तुवन्तं अपकीर्त्तिं प्रकटयन्तमित्यर्थः, तादृशं गर्द्दभं गर्द्दभसमानवैरिणं संमृण सम्यङ्मारय, यथा गर्दभः श्रोतुमशक्यं परुषं शब्दं करोति, तथा शत्रुरपि । अन्यत् पूर्ववत् । गर्द्दभं, नर्द गर्द शब्दे, कृशृशलिगर्द्दिभ्योऽभच् इत्यौणादिकोऽभच्प्रत्ययः, चितः ( पां ६ । १ । १६३ । ) इत्यन्तोदात्तत्वं । मृण, मृण हिंसायां, तौदादिकस्य शस्य ङित्त्वाद्गुणाभावः । नुवन्तं, णु स्तुतौ, शतरि, अदिप्रभृतित्वाच्छपो लुक्, शतुर्ङित्त्वाद्गुणाभावे उवङादेशः, प्रत्ययाद्युदात्तत्वं ॥ ५ ॥

षष्ठीमृचमाह पताति कुण्डृणाच्येति । वातोऽस्मत्प्रतिकूलो वायुः, कुण्डृ-

। ७ । सर्वं परिक्रोशं जहि जम्भया कृकदाश्वं ।
आ तू न० ॥ २७ ॥

वाच्या कुटिलगत्या, स त्वस्मान् प्रति परित्यज्य वनादधि घोरारण्यादप्यधिकं दूरदेशं पताति, पततु। अन्यत् पूर्ववत्। पताति, लेटि-अडागमः। कुण्डृणाच्या, कुडि दाहे, इदितो नुम् धातोः (पा ७।१।५८।) इति नुमागमः, अस्मात् कुण्डते, कुण्डनशब्दे, डकारात्परस्याकारस्य ऋकारश्छान्दसः, ऋवर्णाच्चेति वक्तव्यमिति वार्त्तिकेन णत्वं, तदञ्चतीति कुण्डृणाची, ऋत्विक् (पा ३।२।५९।) इत्यादिना क्विन्, अनिदितां हलः (पा ६।४।२४।) इति नलोपः, चौ (पा ६।३।१३८।) इति पूर्वपदस्य दीर्घत्वं, अञ्चतेश्चेति वक्तव्यमिति वार्त्तिकेन ङीप्, चौ (पा ६।१।२२२।) इत्याकारस्योदात्तत्वं ॥ ६ ॥

सप्तमीमृचमाह सर्वम्परिक्रोशमिति। परिक्रोशमस्मद्विषये सर्वत आक्रोशकर्त्तारं पुरुषं जहि मारय, कृकदाश्वं अस्मद्विषये हिंसाप्रदं शत्रुं जम्भय मारय। अन्यत्पूर्ववत्। परिक्रोशं, क्रुश आह्वाने रोदने च, परितः क्रोशयतीति परिक्रोशः, पचाद्यच्, कृदुत्तरपदप्रकृतिस्वरत्वं। जहि, हन हिंसागत्योः, हन्तेर्जः (पा ६।४।३६।) इति जादेशः, तस्य, असिद्धवदत्राभात् (पा ६।४।२२।) इत्यसिद्धत्वात्, अतो हेः (पा ६।४।१०५।) इति हेर्लुङ्न भवति। जम्भय, जभि नाशने, चुरादित्वात् स्वार्थिको णिच्, शपः पित्त्वादनुदात्तत्वे णिच एव स्वरः शिष्यते। कृकदाश्वं, कृक हिंसायां, कृदाधारार्चिकलिभ्यः कनित्यौणादिकः कन्प्रत्ययः, किदित्यनुवृत्तेर्गुणाभावः, तथाच कृको हिंसा, तां दाशति प्रयच्छतीति कृकदाशुः, बहुलग्रहणाद्दाशतेरपि कृक उपपदे, कृकेवचः कश्चेत्यौणादिक उण्प्रत्ययः, प्रत्ययस्वरेणोदात्तः, द्वितीयायामपि पूर्वरूपत्वे प्राप्ते, वा छन्दसि (पा ६।१।१०६।) इति तस्य बाधितत्वाद्यणादेशः, उदात्तस्वरितयोर्यणः (पा ८।२।४।) इत्यादिना विभक्तेः स्वरितत्वं ॥ ७ ॥ इति प्रथमस्य द्वितीये सप्तविंशो वर्गः ॥ २७ ॥

---

## त्रिंशद्वर्गः।

१ १ १ आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुं ।
मंहिष्ठं सिञ्च इन्दुभिः ॥

आ व इन्द्रमिति द्वाविंशत्यृचं सप्तमं सूक्तं, शुनःशेपस्यार्षं गायत्रं, अस्माकमित्येषा पादनिचृद्गायत्रीत्रयः सप्तकाः पादनिचृदित्युक्तत्वात्, शश्वदिन्द्र इत्येषा त्रिष्टुप् आदितः षोडशर्चं ऐन्द्र्यः, आश्विनावश्वावत्येत्याद्यास्तिस्र आश्विन्यः, कस्त उष इत्याद्यास्तिस्र उषोदेवताकाः तथा चानुक्रमणिका, आवो द्व्यधिकास्माकं पादनिचृच्छश्वत्त्रिष्टुप् परौ तृचावाश्विनौषस्याविति। प्रथमामृचमाह आ व इन्द्रमिति। वाजयन्तोऽन्नमिच्छन्तो वयं शुनःशेपाः, हे ऋत्विग्यजमाना वो युष्माकं सम्बन्धिनमिममिन्द्रं इन्दुभिः सोमैरासिञ्चे सर्वतः सिञ्चामहे तर्पयामः। कीदृशं, शतक्रतुं शतसङ्ख्याककर्म्मोपेतं। मंहिष्ठमतिशयेन प्रवृद्धं, सेचने दृष्टान्तः, यथा येन प्रकारेण क्रिविमवटं जलेन पूरयति तद्वत्। क्रिविं, दशपाद्यां पञ्चपाद्यां कृविशब्द ऋकारवान् साधनिकया भवति, अत्रापि च क्रिविशब्दोऽवटः। काट इत्यादिषु चतुर्दशसु कूपनामसु क्रिविः कूपः सूद इति पठितं। डुकृञ्करणे, क्रिविडागमश्च निपात्यत इति निघण्टुभाष्यं। वस्तुतस्तु कृवि कृति च्छेदने, कृन्वत इति कृविः, कृविघृष्विच्छविस्थवि किकीदिवि इत्यौणादिकसूत्रे क्विन् प्रत्ययान्तो निपातितः, अत एव तच्छब्दलोपः, नित्त्वादाद्युदात्तत्वं। यथा, यथेति पादान्तेति फिट्सूत्रेण सर्वानुदात्तत्वं। वाजयन्तः, वाजमात्मन इच्छन्तः, सुप आत्मनः क्यच् (पां ३।१।८।) इति क्यच्, न छन्दस्यपुत्रस्य (पां ७।४।३५।) इति ईत्वदीर्घत्वयोः प्रतिषेधः, अश्वाघस्यात् (पां ७।४।३७।) इति पुनर्दीर्घविधानाज्ञापनात्। मंहिष्ठं, महि वृद्धौ, अतिशयेन मंहिता मंहिष्ठः, तुश्छन्दसि (पां ५।३।५९।) इति तृजन्तादिष्ठन्प्रत्ययः, तुरिष्ठेमेयःसु (पां ६।४।१५४।) इति तृलोपः, इष्ठनो नित्त्वादाद्युदात्तत्वं। सिञ्चे, षिचिर् क्षरणे, धात्वादेः षः सः (पां ६।१।६४।) इति षस्य सत्वं, व्यत्ययेनैकवचनं, शेमुचादीनां (पां ७।१।५९।) इति नुमागमः॥ १॥

। २ । शतं वा यः शुचीनां सहस्रं वा समाशिरां।
एदु निम्नं न रीयते॥
। ३ । सं यन्मदाय शुष्मिण एना ह्यस्योदरे।
समुद्रो न व्यचो दधे॥
। ४ । अयमु ते समतसि कपोत इव गर्भधिं।
वचस्तच्चिन्न ओहसे॥

द्वितीयामृचमाह शतं वा य इति। य इन्द्रः शुचीनां शुद्धानां सोमानां शतं वा शतसङ्ख्याकं समूहं वा, समाशिरां समीचीनेनाशिराख्येन पयोद्रव्येणोपेतानां सोमानां सहस्रं सहस्रसङ्ख्याकं समूहं वा एदु रीयते आगच्छत्येव, सोऽस्माननुगृह्णात्विति शेषः। सोमप्राप्तौ दृष्टान्तः, निम्नं न, निम्नमिव, यथा निम्नदेशं आपः प्राप्नुवन्ति तद्वत्। समाशिरां, श्रीञ् पाके इत्यस्य समाङ्पूर्वकस्य क्विपि, अपस्पृधेथामानृचुः (पा० ६।१।३६।) इत्यादिनाशिरादेशो निपातितः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। रीयते, रीङ् स्रवणे, दिवादिभ्यः श्यन्॥२॥

तृतीयामृचमाह सं यन्मदायेति। तत्पूर्वोक्तं शतं सहस्रं वा, शुष्मिणो बलवत इन्द्रस्य, मदाय मदार्थं, संयत् सङ्गतं भवति, एना हि अनेनैव, शतेन सहस्रेण च, अस्येन्द्रस्योदरे, व्यचो व्याप्तिर्दधे धृता भवति। तत्र दृष्टान्तः, समुद्रो न समुद्र इव, यथा समुद्रमध्ये जलं व्याप्तं तद्वत्। एना, सुपां सुलुक् (पा० ७।१।३९।) इति तृतीयाया डाच् आदेशः। व्यचः, व्यचेः कुटादित्वमनसीति परिभाषया ङित्त्वाभावस्य प्रतिषिद्धत्वात्, ग्रहिज्या (पा० ६।१।१६।) इत्यादिना सम्प्रसारणं न भवति, असुनो नित्त्वादाद्युदात्तत्वं। दधे, दधातेः कर्म्मणि अभ्यासह्रस्वजश्त्वेषु कृतेषु, आतो लोप इटि च (पा० ६।४।६४।) इत्याकारलोपः, प्रत्ययस्वरेणान्तोदात्तत्वं, हि च (पा० ८।१।३४।) इति प्रतिषेधान्निघाताभावः॥३॥

चतुर्थीमृचमाह अयमु त इति। हे इन्द्र, अयमु अयमपि दृश्यमानः सोमस्ते त्वदर्थं सम्पादितः, -यं सोमं समतसि सम्यक् सातत्येन प्राप्नोषि, तत्र दृष्टान्तः, कपोत इव, यथा कपोताख्यः पक्षी गर्भधिं

१५। स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते।
विभूतिरस्तु सूनृता ॥ २८ ॥

१६। ऊर्द्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो।
समन्येषु ब्रवावहै ॥

गर्भधारिणीं कपोतीं प्राप्नोति तद्वत्। तद्वित् तस्मादेव कारणात्त्वं मदीयं वच ओहसे प्राप्नोषि। अतसि, अत सातत्यगमने। कपोत इव, कवेरोतच् पश्चेत्यौणादिक ओतच् प्रत्ययः, वस्य पत्वञ्च, व्यत्ययेन मध्योदात्तः, अथवा अव्युत्पन्न एव, लघावन्ते द्वयोश्च बह्वषो गुरुरिति फिट्सूत्रेण गुरुरुदात्तः। गर्भधिं, गर्भोऽस्यां धीयत इति गर्भधिः, कर्म्मण्यधिकरणे च (पां ३।३।९३।) इति किःप्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वं। ओहसे, तुहिर् दुहिर् उहिर् अर्दने, व्यत्ययेनात्मनेपदं ॥ ४ ॥

पञ्चमीमृचमाह स्तोत्रं राधानामिति। हे इन्द्र, राधानां धनानाम्पते धनानाम्पालक, गिर्वाहो गीर्भिरुह्यमान, वीर शौर्य्योपेत, यस्य ते तव स्तोत्रमीदृशं भवति तस्य तव विभूतिर्[illegible] सूनृता प्रियसत्यरूपास्तु। स्तोत्रं, ष्टुञ् स्तुतौ, इत्यस्मात्, दाम्नीशसयुयुजस्तु (पां ३।२।१८२।) इत्यादिना ष्ट्रन्प्रत्ययः, पश्चादर्श आद्यच्, अथवा स्तोतुरिदमित्यर्थेऽण्, सञ्ज्ञापूर्वको विधिरनित्य इति परिभाषया वृद्धिर्न भवति। राधानाम्पते, राध साध संसिद्धौ, राध्नुवन्त्येभिरिति राधानि धनानि, सुबामन्त्रिते पराङ्गवत्स्वरे (पां २।१।२।) इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य निघातः। गिर्वाहः, वह प्रापणे, वहिहाधाञ्भ्यश्छन्दसीति कारकपूर्वकस्यापि वहतेरसुन्प्रत्ययः, गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेत्युक्तत्वात्, णिदित्यनुवृत्तेरुपधावृद्धिः, पूर्वपदस्य, र्वोरुपधाया दीर्घ इकः (पां ८।२।७६।) इति दीर्घाभावश्छान्दसः, षाष्ठिकमामन्त्रिताद्युदात्तं। विभूतिः, तादौ च निति (पां ६।२।५०।) इत्यादिना गतेः प्रकृतिस्वरत्वं ॥ ५ ॥ इति प्रथमस्य द्वितीयेऽष्टाविंशो वर्गः ॥ २८ ॥

षष्ठीमृचमाह ऊर्द्ध्वस्तिष्ठा न इति। हे शतक्रतो शतसङ्ख्याककर्म्मोपेत, अस्मिन् प्रसक्ते वाजे सङ्ग्रामे नोऽस्माकमूतये रक्षणाय ऊर्द्ध्व उन्नत उत्सुकस्तिष्ठ भव, त्वञ्चाहञ्च मिलित्वान्येषु कार्य्यान्तरेषु सम्ब्रवावहै सम्य-

। ७ । योगे योगे तवस्तरं वाजे वाजे हवामहे ।
सखाय इन्द्रमूतये ॥

। ८ । आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः ।
वाजेभिरुप नो हवं ॥

निधारयामः । तिष्ठ, द्व्यचोऽतस्तिङः ( पा ६ । ३ । १३५ । ) इति संहितायां दीर्घः । ऊतये, ऊति यूति जूति साति हेति कीर्तयश्च ( पा ३ । ३ । ९७ । ) इति क्तिन उदात्तत्वं । अस्मिन्, ऊडिदम्पदाद्यप्पुम् ( पा ६ । १ । १७१ ) इत्यादिना सप्तम्या उदात्तत्वं ॥ ६ ॥

सप्तमीमृचमाह योगे योग इति । योगे योगे प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे, वाजे वाजे सर्वविघातिनि तस्मिंस्तस्मिन् सङ्ग्रामे, तवस्तरमतिशयेन बलिनमिन्द्रं, ऊतये रक्षार्थं, सखायः सखिवत् प्रिया वयं, हवामहे आह्वयामः । योगे योगे, युजिर् योगे, हलश्च ( पा ३ । ३ । १२१ । ) इति घञ्, चजोः कु घिण्ण्यतोः ( पा ७ । ३ । ५२ । ) इति कुत्वं, घञो ञित्वादाद्युदात्तत्वं, नित्यवीप्सयोः ( पा ८ । १ । ४ । ) इति वीप्सायां द्विर्भावे सति आम्रेडितानुदात्तत्वं । तवस्तरं, तवस्शब्दात्, अस्मायामेधास्रजो विनिः ( पा ५ । २ । १२१ । ) इति विनि प्रत्ययः, विन्मतोर्लुक् ( पा ५ । ३ । ६५ । ) इति तस्य छान्दसो लुक् ॥ ७ ॥

अष्टमीमृचमाह आ घा गमदिति । यदि श्रवत् अयमिन्द्रो नोऽस्मदीयं हवमाह्वानं शृणुयात्, तदानीं स्वयमेव सहस्रिणीभिरूतिभिर्बहुभिः पालनैर्वाजैरन्नैश्च उप समीपे, आ घ अवश्यमागमदागच्छेत् । घ, ऋचि तुनुघ ( पा ६ । ३ । १३३ । ) इति संहितायां दीर्घः । गमत्, लिङर्थे लेट् ( पा ३ । ४ । ७ । ) इति लिङर्थे लेट्, लेटोऽडाटौ ( पा ३ । ४ । ९४ । ) इत्यडागमः, इतश्च लोपः परस्मैपदेषु ( पा ३ । ४ । ९७ । ) इतीकारलोपः, यद्वा छान्दसे लुङि, पुषादिद्युताद्यॢदितः परस्मैपदेषु ( पा ३ । १ । ५५ । ) इति च्लेरङादेशः, बहुलं छन्दस्यमाङ्योगेऽपि ( पा ६ । ४ । ७५ । ) इत्यडभावः । श्रवत्, श्रु श्रवणे, पूर्ववल्लेट्यडागमः । वाजेभिः, बहुलं छन्दसीति भिस ऐसादेशाभावः । हवं, भावेऽनुपसर्गस्य ( पा ३ । ३ । ७५ । ) इति ह्वयतेरप्, सम्प्रसारणञ्च, अपः पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वं ॥ ८ ॥

१ ९ १ अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरं ।
यं ते पूर्वं पिता हुवे ॥
१ १० १ तं त्वा वयं विश्ववारा शास्महे पुरुहूत ।
सखे वसो जरितृभ्यः ॥ २९ ॥

नवमीमृचमाह अनुप्रत्नस्येति । प्रत्नस्य पुरातनस्यौकसः स्थानस्य स्वर्गरूपस्य सकाशात्, तुविप्रतिं बहून् यजमानान् प्रतिगन्तारं, नरं पुरुषमिन्द्रं अनुहुवे अनुक्रमेण कर्म्मस्वाह्वयामि । यं ते त्वामिन्द्रं पिता मदीयो जनकः, पूर्वं पुरा स्वकीयानुष्ठानकाले हुवे आहूतवान्, तमाह्वयामीति पूर्व्वेणान्वयः। ओकसः, नब्विषयस्यानिसन्तस्येति फिट्सूत्रेणाद्युदात्तत्वं । हुवे, ह्वेञ् स्पर्द्धायां शब्दे च, इटि बहुलं छन्दसीति सम्प्रसारणं, परपूर्वत्वं, गुणे प्राप्ते, क्ङिति च ( पा १।१।५। ) इति प्रतिषेधः, उवङादेशः, प्रत्ययस्वरेणान्तोदात्तत्वं, पादादित्वादनिघातः। तुविप्रतिं, तुवीनां बहूनां प्रति गन्तारं, अत्र प्रतिशब्दो भीमसेनो-भीम इति वत् प्रतिगन्तृशब्दं लक्षयित्वा तद्द्वारा तदर्थं लक्षयति, अतः, प्रतिः प्रतिनिधिप्रतिदानयोः ( पा १।४।९२। ) इतिवत् सत्ववचनत्वेन निपातत्वादनव्ययत्वेन, पूरणगुण ( पा २।२।११। ) इत्यादिना षष्ठी-समासनिषेधः । हुवे, ह्वेञो लिटि, बहुलं छन्दसीति पूर्ववत् सम्प्रसारणपरपूर्वत्वे, द्विर्वचनप्रकरणे, छन्दसि चेति वक्तव्यमिति वार्त्तिकेन द्विर्वचनाभावः, यद्वृत्तान्नित्यं ( पा ८।१।६६। ) इति यद्वृत्तयोगादनिघातः ॥ ९ ॥

दशमीमृचमाह तं त्वा वयमिति । हे विश्ववार, सर्व्वैर्वरणीय, पुरुहूत बहुभिः स्वस्वकर्म्मण्याहूत, सखे सखिवत्प्रिय, वसो निवासहेतो, इन्द्र, तं पूर्वोक्तगुणयुक्तं त्वां, जरितृभ्यः स्तोतॄणामनुग्रहार्थं, वयं आशास्महे प्रार्थयामहे। आशास्महे, आङ्पूर्व्वकशासु इच्छायां, अदि-प्रभृतिभ्यः शपः ( पा २।४।७२। ) इति शपो लुक्। वसो, नामन्त्रिते समानाधिकरणे सामान्यवचनं ( पा ८।१।७३।) इति पूर्वस्याविद्यमानवत्त्वप्रतिषेधात् पराङ्गवद्भावे सति, शेषनिघातेन वा आमन्त्रितनिघातेन वा सर्वानुदात्तत्वं। जरितृभ्यः, जरतिः स्तुतिकर्म्मा, तृचश्चित्त्वादन्तोदात्तत्वं ॥ १० ॥ इति प्रथमस्य द्वितीये एकोनत्रिंशो वर्गः ॥ २९ ॥

। ११ । अस्माकं शिप्रिणीनां सोमपाः सोमपाव्नां ।
सखे वज्रिन्त्सखीनां ॥

। १२ । तथा तदस्तु सोमपाः सखे वज्रिन्तथा कृणु ।
यथा त उश्मसीष्टये ॥

एकादशीमृचमाह अस्माकं शिप्रिणीनामिति । हे सोमपाः सोमस्य पातः, सखे सखिवत्प्रिय, वज्रिन् वज्रयुक्तेन्द्र, सखीनां सखिवत्प्रियाणां, सोमपाव्नां सोमस्य पातॄणामस्माकं, शिप्रिणीनां दीर्घाभ्यां हनूभ्यां नासिकाभ्यां वा युक्तानां, गवां समूहस्त्वत्प्रसादादस्त्विति शेषः । शिप्रिणीनां, ऋन्नेभ्यो ङीप् ( पां ४ । १ । ५ । ) इति ङीप्, तस्य पित्त्वादनुदात्तत्वेसति प्रत्ययस्वरः शिष्यते । सोमपाः, आमन्त्रितस्य सतिशिष्टत्वादामन्त्रिताद्युदात्तत्वं । सोमपाव्नां, आतो मनिन् ( पां ३ । २ । ७४ । ) इति वनिप्, अल्लोपोऽनः ( पां ६ । ४ । १३४ । ) इत्यनोऽकारलोपः ॥ ११ ॥

द्वादशीमृचमाह तथा तदिति । हे सोमपाः सखे वज्रिन्, इष्टये ऽभिलषितार्थं, ते तवानुग्रहं, यथा येन प्रकारेण, उश्मसि वयं कामयामहे, त्वं तथा कुरु, त्वत्प्रसादात्तदभीष्टं तथास्तु । कृणु, कृवि हिंसाकरणयोश्च, इदित्त्वान्नुम्, धिन्विकृण्व्योर च ( पां ३ । १ । ८० । ) इत्युप्रत्ययस्तत्सन्नियोगेन वकारस्याकारः, अतो लोपः ( पां ६ । ४ । ४८ । ) इति तस्य लोपः, स्थानिवद्भावाल्लघूपधगुणाभावः, उतश्च प्रत्ययादसंयोगपूर्वात् ( पां ६ । ४ । १०६ । ) इति हेर्लुक् । उश्मसि, वश कान्तौ इदन्तो मसिः, अदादित्वाच्छपो लुक्, ग्रहिज्या ( पां ६ । १ । १६ । ) इति सम्प्रसारणं, प्रत्ययस्वरः, यद्वृत्तयोगादनिघातः । इष्टये, इषु इच्छायां, क्तिनि कृते, तितुत्रतथसिसुसरकसेषु च ( पां ७ । २ । ९ । ) इति इट्प्रतिषेधः, यद्वा यजतेः क्तिनि, वचिस्वपियजादीनां ( पां ६ । १ । १५ । ) इत्यादिना सम्प्रसारणं, व्रश्चादिना षत्वे ष्टुत्वं, पूर्वस्मिन् पक्षे, मन्त्रे वृषेषपचमनविद ( पां ३ । ३ । ९६ । ) इति क्तिन् उदात्तत्वं, द्वितीये तु व्यत्ययेन ॥ १२ ॥

---

१३ रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।
क्षुमन्तो याभिर्मदेम ॥

१४ आ घ त्वावान्त्मनाप्तः स्तोतृभ्यो धृष्णवियानः ।
ऋणोरक्षं न चक्र्योः ॥

त्रयोदशीमृचमाह रेवतीर्न इति । क्षुमन्तोऽन्नवन्तो वयं, याभिर्गोभिः सह मदेम हृष्येम, इन्द्रे सधमादे, अस्माभिः सह हर्षयुक्ते सति, नोऽस्माकं, ता गावो, रेवतीः क्षीराज्यादिधनवत्यः, तुविवाजाः प्रभूतबलाश्च, सन्तु । रेवतीः, रयिशब्दान्मतुपि, रयेर्मतौ बहुलमिति वार्त्तिकेन सम्प्रसारणं, परपूर्वत्वं, छन्दसीरः (पां ८ । २ । १५ ।) इति मतुपो वत्वं, वाछन्दसि (पां ६ । १ । १०६ ।) इति पूर्वसवर्णदीर्घः, आ रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यमिति वार्त्तिकेन रेशब्दादुत्तरस्यापि भवतीति पूर्वमेवोक्तं । सधमादे, मद तृप्तियोगे, चौरादिकः, सह मादयतीति सहमादः, पचाद्यच्, सधमादस्थयोश्छन्दसि बहुलं (पां ६ । ३ । ९६ ।) इति सहशब्दस्य सधादेशः, गाधघञ्क्ताजबित्रकाणां (पां ६ । २ । १४४ ।) इत्युत्तरपदान्तोदात्तत्वं । तुविवाजाः, तु इति सौत्रो धातुः, अच इरित्यौणादिक इः प्रत्ययः, छन्दसापूर्वकत्वाद्गुणो न भवति, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । क्षुमन्तः, क्षु शब्दे, अस्मात् क्विपि, तुगभावश्छान्दसः, ह्रस्वनुड्भ्यां मतुप् (६ । १ । १७६ ।) इति मतुप उदात्तत्वं । मदेम, मदी हर्षे, व्यत्ययेन शप्, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वं, ततो धातुस्वरः शिष्यते ॥ १३ ॥

चतुर्दशीमृचमाह आ घ त्वावानिति । हे धृष्णो धार्ष्ट्ययुक्तेन्द्र, त्वावान् त्वत्सदृशो देवताविशेषः त्मनाप्तः त्वदनुग्रहवशात् स्वयमेवाप्तः सन्, इयानोऽस्माभिर्याच्यमानः, स्तोतृभ्यः स्तोतृणामनुग्रहाय, तदभीष्टमर्थं, घ अवश्यं, आकृष्णोः, आनीय प्रक्षिपतु, तत्र दृष्टान्तः, चक्र्योः रथस्य, चक्रयोरक्षं न, यथा अक्षं प्रक्षिपति तद्वत् । त्वावान्, वतुप्प्रकरणे, युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानमिति वार्त्तिकेन वतुप्, प्रत्ययोत्तरपदयोश्च (पां ७ । २ । ९८ ।) इति मपर्य्यन्तस्य त्वादेशः, आ सर्व्वनाम्नः (पां ६ । ३ । ९१ ।) इति दकारस्यात्वं, वतुपः पित्त्वा-

। १५ । आ यद्दुवः शतक्रतवा कामं जरितॄणां ।
ऋणो रक्षं न शचीभिः ॥ ३० ॥

। १६ । शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि । स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ॥

इत्युदात्तत्वे प्रातिपदिकस्वरः शिष्यते । त्मना, मन्त्रेष्वाङ्यादेरात्मनः (पां ६।४।१४१।) इत्याकारलोपः । धृष्णो, ञिधृषा प्रागल्भ्ये, त्रसिगृधिधृषिक्षिपेः क्नुः (पां ३।२।१४०।) इति क्नुप्रत्ययः, आमन्त्रिताद्युदात्तत्वं । इयानः, ईङ् गतौ, छन्दसि लिट्, तस्य, लिटः कानज्वा (पां ३।२।१०६।) इति कानजादेशः, अचि श्नुधातु (पां ६।४।७७।) इत्यादिना इयङादेशः, द्विर्वचनप्रकरणे, छन्दसि वेति वक्तव्यमिति वचनादभ्यासो न क्रियते, चितः (पां ६।१।१६३।) इत्यन्तोदात्तत्वं । ऋणोः, ऋणु गतौ लङि व्यत्ययेन तिपः सिपि, इतश्च (पां ३।४।१००।) इति इकारलोपः, तनादिकृञ्भ्य उः (पां ३।१।७९।) इत्युः प्रत्ययः, सार्वधातुकगुणः, बहुलं छन्दस्यमाङ्योगेऽपि (पां ६।४।७५।) इत्यडागमाभावः, विकरणस्वरेणान्तोदात्तत्वं । अक्षं, अक्षस्यादेवनस्येति फिट्सूत्रेणाद्युदात्तत्वं । अक्षोः, अकारस्येकारश्छान्दसः ॥ १४ ॥

पञ्चदशीमृचमाह आ यद्दुव इति । हे शतक्रतो इन्द्र, यत् दुवो धनं कामितार्थरूपं, आस्तोऽभिरावश्यमस्ति, तं कामं जरितॄणां स्तोतॄणामनुग्रहाय आऋणोः, आनीय प्रक्षिपसि, तत्र दृष्टान्तः शचीभिः कर्म्मभिः शकटोचितव्यापारविशेषैः अक्षं न, यथा अक्षं प्रक्षिपन्ति तद्वत् । शचीभिः, शचीशब्दः शार्ङ्गरवादिङीनन्त आद्युदात्तः ॥ १५ ॥

इति प्रथमस्य द्वितीये त्रिंशो वर्गः ॥ ३० ॥

षोडशीमृचमाह शश्वदिन्द्र इति । तुष्टेनेन्द्रेण दत्तं हिरण्यरथं अनयार्चा प्रतिजग्राह, तथाच ब्राह्मणं, तस्मादिन्द्रः स्तूयमानः प्रीतो मनसा हिरण्मरथं ददौ तमेतयार्चा प्रतीयाय शश्वदिन्द्र इतीति । इन्द्रः शश्वत् सर्वदा धनानि वैरिसम्बन्धीनि जिगाय जितवान्,

१ १७ १ आश्विनावश्वावत्येषा यातं शवीरया ।
गोमद्दस्रा हिरण्यवत् ॥

अश्वैरितिशेषः, । कीदृशैस्तैरश्वैः, पोप्रुथद्भिः, घासभक्षणानन्तरभाविनमोष्ठशब्दं कुर्वद्भिः। नानदद्भिः, नानदमाखगतं हेषाशब्दं कुर्वद्भिः। शाश्वसद्भिः, पुनः पुनर्भृशं वा श्वसद्भिः, । दंसनावान् कर्म्मवान् सनिता दाता स इन्द्रो, नोऽस्माकं सनये सम्भजनार्थं, हिरण्यरथं सुवर्णनिर्मितं रथमदात् दत्तवान्, सनः सनः सन इति विभक्तिराकारार्थं। पोप्रुथद्भिः, प्रेथृ पर्य्याप्तौ, अस्माद्यङ्लुकि, अभ्यासहलादिशेषौ, ऋतः (पा ७।४।५९।) इति ऋत्वे कृते, गुणो यङ्लुकोः (पा ७।४।८२।) इति गुणः, धातोरुपधाया उत्वं छान्दसं, अस्माद्यङ्लुगन्ताच्छतरि, अभ्यस्तानामादिः (पा ६।१।८९।) इत्याद्युदात्तत्वं। जिगाय, जि जये, लिटो, णलि, वृद्धिः, द्विर्वचनेऽचि (पा१।१।५९।) इति आनिवद्भावाज्जि इत्यस्य द्विर्वचनं, सन्लिटोर्जेः(पा ७।३।५७।) इत्यभ्यासादुत्तरस्य कुत्वं। नानदद्भिः, णद अव्यक्तशब्दे, पूर्ववद्यङ्लुकि, दीर्घोऽकितः (पा ७।४।८३।) इति अभ्यासस्य दीर्घः, पूर्वपदाद्युदात्तत्वं। शाश्वसद्भिः, श्वस प्राणने, अन्यत् सर्वं पूर्ववत्। हिरण्यरथं, समासस्य (पा ६।१।२२३।) इत्यन्तोदात्तत्वं। अदात्, गातिस्था (पा २।४।७७।) इति सिचो लुक्। दंसनावान्, अपो दंसो वेष इति कर्म्मनामसु पठितो दंसशब्दः, दंस एव दंसना, तदस्यास्तीति मतुप्, दस्यतेऽनेनेति दंसना ॥ १६ ॥

प्रातरनुवाके आश्विने क्रतौ गायत्रे छन्दसि आश्विनावश्वावत्येति-तृचः, अथाश्विन इति खण्डे अश्विना यज्वरीरिष आश्विनावश्वावत्येति सूचितं, तस्मिंस्तृचे प्रथमां सूक्ते सप्तदशीमृचमाह आश्विनावश्वावत्येति । इन्द्रेण प्रेरितः शुनःशेपोऽश्विनौ तुष्टाव, तथाच ब्राह्मणं, तमिन्द्र उवाचाश्विनौ वै देवानाम्भिषजौ तौ नु स्तुहि, अथ त्वोत्स्रक्ष्यामीति स तुष्टाव ता उत्तरेण तृचेनेति। अश्वावत्या बहुभिरश्वैर्युक्तौ हे अश्विनौ, शवीरया प्रेर्य्यमाणया इषा अन्नेन सह आयातं, अस्मिन् कर्म्मण्यागच्छतं, हे दस्रा अश्विनौ, युवयोः प्रसादात्, गोमत् बहुभिर्गोभिर्युक्तं, हिरण्यवद्बहुना हिरण्येन युक्तमस्मदीयं गृहं अस्त्विति शेषः। अश्वावत्या, मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ (पा ६।३।१३१।)

११८। समानयोजनो हि वां रथो दस्रावमर्त्यः।
समुद्रे अश्विनेयते ॥
११९। न्यघ्न्यस्य मूर्द्धनि चक्रं रथस्य येमथुः।
परि द्यामन्यदीयते ॥
१२०। कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये।
कं नक्षसे विभावरि ॥

इति दीर्घत्वं। इषा, सावेकाचस्तृतीयादिर्विभक्तिः (पा ६।१।१६८।) इति तृतीयाया उदात्तत्वं। यातं, या प्रापणे, लोटि तसस्तं, अदादित्वाच्छपो लुक्। प्रवीरया, प्रु गतौ, स्नुपृकटिपटिशौटिभ्य ईरन्नित्यौणादिक ईरन्प्रत्ययो बहुलवचनादस्मादपि भवति, नित्त्वादाद्युदात्तत्वं ॥ १७ ॥

अष्टादशीमृचमाह समानयोजन इति। हे दस्रावश्विनौ, वां युवयोः सम्बन्धी रथः समानयोजनो युवयोर्द्वयोरेकरथारूढत्वादुभयार्थं सकृदेव युज्यते, युक्तः सरथः, अमर्त्यो विनाशरहितः, अप्रतिहतगतिरित्यर्थः, अत एव हे अश्विनौ, हि यस्मात् समुद्रवन्त्यस्मात् समुद्रेऽन्तरीक्षे ईयते गच्छति। अन्तरिक्षनामसु पठितं समुद्रशब्दं यास्क एवं व्याचख्यौ, समुद्रः कस्मात् समुद्रवन्त्यस्मादापः समभिद्रवन्त्येनमापः सम्मोदन्तेऽस्मिन् भूतानि समुद्रको भवति समुनत्तीति। समानयोजनः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। ईयते, ईङ् गतौ, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे, श्यनो नित्त्वादाद्युदात्तत्वं, हि च (पा ८।१।३४।) इति निघातप्रतिषेधः ॥ १८ ॥

एकोनविंशीमृचमाह न्यघ्न्यस्येति। हे अश्विनौ, युवां, अघ्न्यस्य हन्तुं विनाशयितुमशक्यस्य दृढस्य पर्वतस्य, मूर्द्धनि उपरि, रथस्य चक्रं भवदीयरथसम्बन्धि एकं चक्रं, नियेमथुर्नियमितवन्तौ, अन्यच्चक्रं परि द्यां द्युलोकस्य परित ईयते गच्छति। अघ्न्यस्य, अहननमघ्नं, छन्दर्थे कविधानं, स्थास्नापाव्यधिहनियुध्यर्थमित्यौणादिकसूत्रेण हन्तेः कप्रत्ययः, अघ्नमर्हत्यघ्न्यः, छन्दसि च (पा ५।१।६७।) इति यत्प्रत्ययः, प्रत्ययस्वरेणान्तोदात्तत्वं। येमथुः, यमु उपरमे, लिटि थिटि, अत एकहल्मध्येऽनादेशादेर्लिटि, (पा ६।४।१२०।) इत्येत्वाभ्यासलोपौ ॥ १९ ॥

प्रातरनुवाके आश्विनशस्त्रे उषस्ये क्रतौ गायत्रे छन्दसि कस्त उष

१२११ वयं हि ते अमन्मह्यान्तादापराकात् ।
अश्वे न चित्रे अरुषि ॥

इति तृचः, अथोषस्येति खण्डे कस्त उष इति तिस्र इति सूचितं, तस्मिन्सूक्ते प्रथमा सूक्ते विंशीमृचमाह कस्त उष इति। अश्विभ्यां प्रेरितः शुनःशेप उषसं तुष्टाव, तथाच ब्राह्मणं, तमश्विनावूचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याव इति, स उषसं तुष्टावात उत्तरेण तृचेन तस्य ह स्म ऋच्युक्तायां विपाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं भवत्युत्तमस्यामेवर्च्युक्तायां विपाशो मुमुचे अगद ऐक्ष्वाक आसेति ॥ हे कधप्रिये स्तुतिप्रिये, हे अमर्त्ये मरणरहिते, उष एतच्छब्दाभिधेये, उषः कालाभिमानिनि देवते, भुजे तव भोगाय, मर्त्यो मनुष्यः को विद्यते, हे विभावरि विशेषप्रभायुक्ते उषो देवि, कं पुरुषं नक्षसे प्राप्नोषि, तवोचितं भोगं दातुं न कोऽपि मनुष्यः समर्थः, अत एव त्वं कमपि पुरुषं भोगापेक्षया न प्राप्नोषि, ईदृशस्तव महिमेत्यर्थः। ते, ते मयावेकवचनस्य ( पा° ८। १। २२। ) इति युष्मच्छब्दस्य ते आदेशः, सर्वानुदात्तः। कधप्रिये, कथ वाक्यप्रबन्धे, चुरादिरदन्तः, णौ, अतो लोपस्य स्थानिवद्भावादुपधावृद्ध्यभावः, चिन्तिपूजिकथिकुम्बिचर्चश्च ( पा° ३। ३। १०५। ) इत्यङ्प्रत्ययः, णेरनिटि ( पा° ६। ४। ५१। ) इति णिलोपः, ततष्टाप्, षष्ठीसमासे, ङ्यापोः संज्ञाछन्दसोर्बहुलं ( पा° ६। ३। ६३। ) इति ह्रस्वत्वं, थकारस्य धकारश्छान्दसः, आमन्त्रिताद्युदात्तत्वं। भुजे, भुज पालनाभ्यवहारयोः, सम्पदादिलक्षणः क्विप्, सावेकाचः ( पा° ६। १। १६८। ) इति विभक्तेरुदात्तत्वं। मर्त्यः, असिहसि मृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्नित्यौणादिकस्तन्प्रत्ययः, नित्त्वादाद्युदात्तः। नक्षसे, नक्ष तक्षु गतौ। विभावरि, भा दीप्तौ, विपूर्वादस्मात्, आतो मनिन्क्वनिब्वनिपश्च ( पा° ३। २। ७४। ) इति वनिप्, वनो र च ( पा° ४। १। ७। ) इति ङीप्, तत्सन्नियोगेन नकारस्य रेफादेशः, अम्बार्थनद्योर्ह्रस्वः ( पा° ७। ३। १०७। ) इति ह्रस्वः ॥ २० ॥

एकविंशीमृचमाह वयं हि त इति। हे अश्वे व्यापनशीले, चित्रे चायनशीले, अरुषि आरोचमाने, उषः कालाभिमानिनि देवते, ते तव स्वरूपं आन्तात् समीपपर्य्यन्तं, आपराकात् दूरपर्य्यन्तं, वयं मनुष्या नाममपि न बोद्धुं समर्थाः, हिशब्दः प्रसिद्धौ, देवतामहिमः पारा-

१२२१ त्वं त्येभिरागहि वाजेभिर्दुहितर्दिवः ।
अस्मे रयिं निधारय ॥ ३१ ॥

## एकत्रिंशसूक्तं ।

१११ त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानाम-
भवः शिवः सखा । तव व्रते कवयो विद्मनाप-
सोऽजायन्त मरुतो भ्राजदृष्टयः ॥

वारयोरन्नमस्मासु प्रसिद्धमित्यर्थः । अमन्महि, मन ज्ञाने, बहुलं छन्दसीति विकरणस्य लुक्, लुङ्लङ्लृङ्क्ष्वडुदात्तः (पा ६। ४।७१।) इत्यडागम उदात्तः, हि च (पा ८।१।३४।) इति निघातप्रतिषेधः । अश्वे, अशू व्याप्तौ, अशिप्रुषिलटिकणिखटिविशिभ्यः, क्वन्नित्यौणादिकः क्वन्प्रत्ययः, आमन्त्रिताद्युदात्तत्वं ॥ २१ ॥

द्वाविंशीमृचमाह त्वं त्येभिरिति । हे दिवो दुहितः द्युदेवतायाः पुत्रि उषो देवि, त्येभिर्वाजेभिस्तैरन्नैः सह, त्वमागहि आगच्छ, अस्मे अस्मासु, रयिं धनं, निधारय नितरां स्थापय । त्येभिः, बहुलं छन्दसीति भिस ऐसादेशाभावः । गहि, असकृदुक्तं । दुहितर्दिवः, परस्यापि दिव इत्यस्य दिवो दुहितरित्यन्वये सति पूर्वत्वात्, सुबामन्त्रिते पराङ्गवत्स्वरे (पा २।१।२।) इति पराङ्गवद्भावेन षष्ठ्यामन्त्रितसमुदायस्य सर्वानुदात्तत्वं, यद्वा चार्थकाणां सन्ध्यापरिभाषमिति न्यायेन, सुबामन्त्रित इत्यस्य, आमन्त्रितस्य च (पा ८।१।१९।) इत्यादर्शनक्रमेण योगेनैकवाक्यत्वे सति, परत्वात् पराङ्गवद्भावे सति सर्वानुदात्तत्वं, छान्दसयोः षष्ठ्यामन्त्रितयोः पश्चात्, व्यत्ययो बहुलं (पा ३।१।८५।) इति व्यत्यस्तप्रयोगः । अस्मे, सुपांसुलुक् पूर्वसवर्णात् (पा ७ । १ ।३९। ) इति सप्तम्याः शे आदेशः ॥ २२ ॥ इत्येकत्रिंशो वर्गः ॥ ३१ ॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे प्रथमे मण्डले षष्ठोऽनुवाकः ॥ ६ ॥

सप्तमेऽनुवाके पञ्चसूक्तानि, तत्र त्वमग्ने प्रथम इति प्रथमं सूक्तमष्टादशर्चं, आङ्गिरसो हिरण्यस्तूप ऋषिः, अष्टमी षोडश्यष्टादश्य-

१ २ १ त्वमग्ने प्रथमो अङ्गिरस्तमः कविर्देवानां परिभूषसि व्रतं । विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधाचिदायवे ॥

त्रिष्टुभः, शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः, अग्निर्देवता, तथा-चानुक्रमणिका, त्वमग्ने ऊना हिरण्यस्तूप आग्नेयं त्रिष्टुबन्त्याष्टमीषो-डश्यौ चेति । प्रातरनुवाके आग्नेये क्रतौ आश्विनशस्त्रे च त्वमग्ने प्रथम इति सूक्तं, अथैतस्यारात्रेरिति खण्डे त्वमग्ने प्रथमोऽङ्गिरा ऋषि नृंचित्सद्योजा अमृतोनितुन्दत इति सूचितं । अभिप्लवषडहस्य तृती-येऽहनि आग्निमारुते शस्त्रे इदं सूक्तं जातवेदस्य निविद्धानीयं, तथाच तृतीयस्य अर्य्यमेति खण्डे सूचितं, त्वमग्ने प्रथमोऽङ्गिरा इत्या-ग्निमारुतमिति । वाजपेयेऽप्याग्निमारुत एतत् सूक्तं जातवेदस्य निविद्धानं तृतीयेनाभिप्लविकेनोक्तं, तृतीयस्य सवनमित्यतिदिष्टत्वात्, अस्मिन् सूक्ते प्रथमामृचमाह त्वमग्न इति, हे अग्ने, त्वं प्रथम आद्यः, आङ्गिरसानामृषीणां सर्वेषां जनकत्वात्तादृशोऽङ्गिरोनामक ऋषिर-भवः, तथाच ब्राह्मणं. येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्निति । तथाच स्वयन्देवो भूत्वा देवानामन्येषां शिवः शोभनः सखा अभवः । तव व्रते त्वदीये कर्म्मणि, कवयो मेधाविनः, विद्मनापसो ज्ञानेन व्याप्नुवाना ज्ञातकर्म्माणो वा, भ्राजदृष्टयो दीप्यमानायुधाः, मरुतो मरुत्सञ्ज्ञका देवा अजायन्त । विद्मनापसः, विद ज्ञाने, विद्मो वेदनं, बहुलमन्यत्रा-पीत्यादिको मक्प्रत्ययः, तदस्यास्तीति पादादिलक्षणो नः, प्रत्ययस्व-रेणान्तोदात्तत्वं, विद्मनान्यपांसि येषान्ते विद्मनापसः, पूर्वपदस्य, अन्ये-षामपि दृश्यते ( पां ६ । ३ । १३७ । ) इति दृशिग्रहणादवग्रहसमये-ऽपि दीर्घत्वं । अजायन्त, जनी प्रादुर्भावे, तस्य श्यनि, ज्ञाजनोर्जा ( पां ७ । ३ । ७९ । ) इति जादेशः । भ्राजदृष्टयः, भ्राज्र दीप्तौ, व्यत्य-येन शतृ, तस्य लसार्वधातुकानुदात्तत्वे धातुस्वरः, ऋष गताविस्यस्मात्, क्तिच् क्तौ च सञ्ज्ञायां ( पां ३ । ३ । १७४ । ) इति क्तिजन्त ऋष्टिशब्द-स्तौ बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ १ ॥

द्वितीयामृचमाह त्वमग्न इति । हे अग्ने, त्वं प्रथम आद्यः अङ्गिर-स्तमः अतिशयेनाङ्गिरा भूत्वा, कविर्मेधावी सन् देवानामन्येषां सर्वं

१ ३ १ त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते । आरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ॥

कर्म्मं परिभूषसि परितः सर्वतोऽलङ्करोषि । कीदृशस्त्वं, विश्वस्मै भुवनाय समस्तलोकानामनुग्रहार्थं, विभुर्बहुविध आहवनीयाद्यनेकरूपधारीत्यर्थः, मेधिरो मेधावान्, द्विमाता द्वयोररण्योरुत्पन्नः, यद्वा द्वयोर्लोकयोर्निर्म्माता, आयवे मनुष्यार्थं, कतिधाचित् कतिभिः प्रकारैः, सर्वत्र शयुः शयानः, तत्तन्मनुष्यगृहेऽवस्थितस्य तव प्रकारा इयन्त इति न केनापि ज्ञायन्त इत्यर्थः । भूषसि, भूष अलङ्कारे, भौवादिकः । विभुः, विप्रसम्भ्योड्वसञ्ज्ञायां ( पां ३ । २ । १८० । ) इति विपूर्वाद्भवतेर्डुःप्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वं । भुवनाय, भूसूधूभ्रस्जिभ्यश्छन्दसीत्यौणादिकः क्युन्प्रत्ययः, युवोरनाकौ ( पां ७ । १ । १ । ) इति योरनादेशे नित्स्वरेणाद्युदात्तत्वं । मेधिरः, मेधृ सङ्गमे च, अस्माद्बाहुलक इरन्प्रत्ययः, नित्स्वरः । द्विमाता, द्वौ मातरौ यस्यासौ द्विमाता, नद्यृतश्च ( पां ५ । ४ । १५३ । ) इति कप्प्रत्ययो न भवति, मातृ मातृकयोर्भेदेनोपादानान्नद्यृतश्चेति कवपि विभाष्यत इति, तस्य मातृशब्दविषये पाक्षिकत्वोक्तेः, त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वं, यद्वा द्वयोर्माता द्विमाता, समासस्य ( पां ६ । १ । २२३ । ) इत्यन्तोदात्तत्वं । शयुः, शीङ् स्वप्ने, भृमृशीत्यादिनौणादिक उःप्रत्ययः । कतिधा, डत्यन्तस्य किम्शब्दस्य, बहुगणवतुडतिसङ्ख्या ( पां १ । १ । २३ । ) इति सङ्ख्यासञ्ज्ञायां, संख्याया विधार्थे धा ( पां ५ । ३ । ४२ । ) इति धाप्रत्ययः । आयवे, छन्दसीण इत्यौणादिक उण्प्रत्ययः ॥ २ ॥

तृतीयामृचमाह त्वमग्ने प्रथम इति । हे अग्ने, त्वं मातरिश्वनः प्रथमो मुख्यो भूत्वा वर्त्तसे, अग्निर्वायुरादित्य इति वाय्वपेक्षया सर्वत्र मुख्यत्वावगमात्, तादृशस्त्वं, सुक्रतूया शोभनकर्म्मेच्छया, विवस्वते परिचरते यजमानाय, आविर्भव प्रकटो भव, तव सामर्थ्यं दृष्ट्वा रोदसी द्यावापृथिव्यौ आरेजेतां आकम्पेतां । भ्यसते रेजत इति भयवेपनयोरिति यास्कः । होतृवूर्य्ये होतृवरणयुक्ते कर्म्मणि भारं भरणं असघ्नः ऊढवानसि, हे वसो निवासहेतो अग्ने, महः पूज्यान्देवान-

यजः इष्टवानसि । मातरिश्वनः, निर्म्माणहेतुत्वान्माताऽन्तरिक्षं, तत्र श्वसिति प्राणितीति मातरिश्वा वायुः, श्वन्नुक्षन्नित्यादौ मातरिश्वन् शब्द औणादिककनिन्प्रत्ययान्तो निपातितः। सुक्रतूया, सुक्रतुमात्मन इच्छति, सुप आत्मनः क्यच् ( पां ३ । १ । ८ । ) इति क्यच्, अकृत्सार्वधातुकयोर्दीर्घः ( पां ७ । ४ । २५ । ) इति दीर्घः, क्यजन्तस्य धातुसञ्ज्ञायां, अप्रत्ययात् ( पां ३ । ३ । १०२ । ) इति अकारःप्रत्ययः, ततष्टाप्, सुपां सुलुक् ( पां ७ । १ । ३९ । ) इति तृतीयैकवचनस्य डादेशः, टिलोपे उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वं, संहितायां, अन्येषामपि दृश्यते ( पां ६ । ३ । १३७ । ) इति पूर्वपदस्य दीर्घत्वं। विवस्वते, विवासतिः परिचरणकर्म्मा, अस्मात् सम्पदादिलक्षणः क्विप्, व्यत्ययेनोपधाह्रस्वत्वं, तदस्यास्त्यस्मिन्निति मतुप् ( पां ५ । २ । ९४ । ) इति मतुप्, मादुपधायाश्च ( पां ८ । २ । ९ । ) इति मतुपो वत्वं, तसौमत्वर्थे ( पां १ । ४ । १९ । ) इति भत्वेन पदत्वाभावात् रुत्वाभावः, मतुपः पित्त्वादनुदात्तत्वं, धातुस्वरः शिष्यते। रोदसी, वा छन्दसि ( पां ६ । १ । १०६ । ) इति पूर्वसवर्णदीर्घत्वं। होतृवूर्य्ये, होत्रा व्रियत इति होतृवूर्य्यो यज्ञः, वृञ् वरणे, वञ्जलग्रहन्यादौणादिकः क्यप्, उदोष्ठ्यपूर्वस्य ( पां ७ । १ । १०२ । ) इत्युत्वं, हलि च ( पां ८ । २ । ७७ । ) इति दीर्घः, यद्वा वृञ् वरणे इत्यस्मात्, एति स्तु शास्वृदृजुषः क्यप् ( पां ३ । १ । १०९ । ) इति क्यप्प्रत्ययः। अनित्यमागमशासनमिति तुगभावः। अकृत्सार्वधातुकयोर्दीर्घः ( पां ७ । ४ । २५ । ) इति दीर्घः। अथवा पूर्ववदुत्वदीर्घौ। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः, कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। असघ्नः, सघ हिंसायां, अत्र तु वहनार्थः, स्वादिभ्यः श्नुः ( पां ३ । १ । ७३ । ) इति श्नुप्रत्ययः। पादादित्वादनिघातः, अयजः, भारमित्यस्य पूर्वपदस्य वाक्यान्तरगतत्वात्तदपेक्षया अस्य निघातो न भवति, समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या इति वचनात्। महः, मह पूजायां, क्विप् च ( पां ३ । २ । ७६ । ) इति क्विप्, सुपां सुपो भवन्तीति वक्तव्यमिति वार्त्तिकेन शसो ङसादेशः, सावेकाचस्तृतीयादिः ( पां ६ । १ । १६८ । ) इत्यादिना तस्योदात्तत्वं। यद्वा शसि महच्छब्दस्य छान्दसस्तलोपश्छान्दसः, वृहन्महतोरुपसङ्ख्यानमिति वार्त्तिकेन शस उदात्तत्वं ॥ ३ ॥

१ ४ १ त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते
सुकृत्तरः । श्वात्रेण यत्पित्रोर्मुच्यसे पर्य्या त्वा पूर्व-
मनयन्नापरं पुनः ॥

१ ५ १ त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि
श्रवाय्यः । य आहुतिं परिवेदा वषट्कृतिमेका-
युरग्ने विश आविवाससि ॥ ३२ ॥

चतुर्थीमृचमाह त्वमग्ने मनव इति । हे अग्ने, त्वं मनवे मनोरनुग्रहार्थं, द्यां द्युलोकं, अवाशयः शब्दितवानसि, पुण्यकर्म्मभिः साध्यो द्युलोक इति प्रकटितवानसि, सुकृते तव परिचरणं कुर्वते पुरूरवसे पुरूरव एतन्नामकस्य राज्ञोऽनुग्रहार्थं, सुकृत्तरः, अतिशयेन शोभनफलकार्य्यभूः, यद्यदा पित्रोररण्योः श्वात्रेण क्षिप्रमथनेन परिमुच्यसे परिमुक्तो भवसि उत्पद्यस इत्यर्थः, तदानीं त्वा अरण्योरुत्पन्नं त्वां पूर्व्वं वेद्याः पूर्वदेशे आनयन् आहवनीयत्वेन स्थापितवन्तः । पुनः पश्चादपरं पश्चिमदेशं, आनयन् गार्हपत्यरूपेण धारितवन्त इत्यर्थः । अवाशयः, वाशृ शब्दे । पुरूरवसे, पुरु रौतीति पुरूरवाः, रु शब्दे, असुन्, पुरसि च, पुरूरवा इत्यौणादिकसूत्राभ्यां पुरुशब्दस्य दीर्घो रौतेरसिच निपात्यते । सुकृते, सुकर्म्मपापमन्त्रपुण्येषु कृञः ( पा ३ । २ । ८९ । ) इति क्विप्प्रत्ययः, ततस्तुक् । पित्रोः, उदात्तयणो हल्पूर्वात् ( पा ६ । १ । १७४ । ) इति विभक्तेरुदात्तत्वं । मुच्यसे, अनुपदेशात्सार्वधातुकानुदात्तत्वं, यद्यपि सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वचनाद्विकरणस्वरः, सति शिष्टोऽपि लसार्वधातुकस्वरस्य बाधको न भवति, तथापि धातुस्वरं बाधत एव । धातुस्वरं स्वास्वर इत्युक्तत्वात्, अतो यक एव स्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वं ॥ ४ ॥

पञ्चमीमृचमाह त्वमग्ने वृषभ इति । हे अग्ने, त्वं वृषभः कामानां वर्षिता, पुष्टिवर्धनो यजमानस्य धनादिपुष्टिभिर्वृद्धिहेतुः, उद्यतस्रुचे उद्यतया स्रुचा युक्ताय यजमानाय, तदनुग्रहार्थं श्रवाय्यः, मन्त्रैः श्रवणीयो भवसि, यो यजमानो वषट्कृतिं वषट्कारयुक्तां आहुतिं परिवेद परितो जानाति समर्पयतीत्यर्थः । एकायुर्मुख्यान्नस्त्वमग्ने

१६। त्वमग्ने वृजिनवर्त्तनिं नरं सक्मन्पिपर्षि विदथे विचर्षणे। यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः ॥

प्रथमं तं यजमानं, तदनु विशस्तदनुकूलाः प्रजाः आविवासिस सर्वतः प्रकाशयसीत्यर्थः। पुष्टिवर्धनः, ऋधु वृद्धौ, अस्माणिजन्तात्, नन्द्यादित्वात् ल्युः, लित्स्वरेणोत्तरपदस्याद्युदात्तत्वं, कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। उद्यतस्रुचे, यम उपरमे, अस्मात् उत्पूर्वात्, निष्ठा (पां १।२।१०२।) इति क्तप्रत्यये, अनुदात्तोपदेश (पां ६।४।३७।) इत्यादिना अनुनासिकलोपः, गतिरनन्तरः (पां ६।२।४९।) इति गतेः प्रकृतिस्वरत्वं, उद्यता स्रुक् येनेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। वेद, द्व्यचोऽतस्तिङः (पां ६।३।१३५।) इति संहितायां दीर्घत्वं ॥५॥ इति प्रथमस्य द्वितीये द्वात्रिंशो वर्गः ॥३२॥

षष्ठीमृचमाह त्वमग्ने वृजिनवर्त्तनिमिति। हे विचर्षणे विशिष्टज्ञानयुक्ताग्ने, त्वं वृजिनवर्त्तनिं विवृतमार्गं सदाचाररहितं नरं पुरुषं, सक्मन् सचनीये समवेतुं योग्ये, विदथे योग्ये कर्म्मणि, पिपर्षि पालयसि पूरयसि वा, सत्कर्म्मानुष्ठानयुक्तं करोषीत्यर्थः। यस्त्वं परितक्म्ये परितो गन्तव्ये धने, धनवच्छूराणां प्रियतमे, शूरसाता शूरैः सम्भजनीये युद्धे, दभ्रेभिश्चित् अल्पैरपि शौर्य्यरहितैः पुरुषैः, दभ्रमर्भकमल्पस्येति यास्कः, समृता सम्यग्योद्धुमागते सति मदनुग्रहार्थं भूयसः प्रौढान् प्रतिपक्षिणः प्रभूतान् हंसि मारयसि, ईदृशस्त्वं मद्यज्ञमेत्यर्थः। वृजिनवर्त्तनिं, वृजिना वर्त्तनिर्यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। सक्मन्, षच समवाये, अन्येभ्योऽपि दृश्यन्ते (पां ३।२।७५।) इति मनिन्, नेड्वशि कृति (पां ७।२।८।) इतीट्प्रतिषेधः, न्यङ्क्वादित्वात्कुत्वं। सुपां सुलुक् (पां ७।१।३९।) इत्यादिना सप्तम्या लुक्। पिपर्षि, पृ पालनपूरणयोः, सिपि, श्लौ द्विर्भावः, उरदत्वहलादिशेषाः, अर्त्तिपिपर्त्त्योश्च (पां ७।४।७७।) इत्यभ्यासस्येत्वं। शूरसाता, शु गतौ, शुसिचिमीनान्दीर्घश्चेत्यौणादिकरन्प्रत्ययान्त आद्युदात्तः, वनषनसम्भक्तावित्यस्मात् क्तिन्नन्तः सातिशब्दः, जनसनखनां सञ्झलोः (पां ६।४।४२।) इत्यात्वं, शूराणां सातिः

। ७ । त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे
दिवे दिवे। यस्तातृषाण उभयाय जन्मने मयः
कृणोषि प्रय आ च सूरये॥

। ८ । त्वं नो अग्ने सनये धनानां यशसं कारुं कृणुहि
स्तवानः। ऋध्याम कर्म्मापसा नवेन देवैर्द्यावा-
पृथिवी प्रावतं नः॥

सम्भजनमन्त्रेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं, सुपां सुलुगित्यादिना सप्तम्या डादेशः। परितक्म्ये, तक हसने, अस्मादौणादिको भावे मक्, तदर्हतीत्यस्मिन्नर्थे, छन्दसि च (पा ५।१।६७।) इति यत् प्रत्ययः। प्रादयो गताद्यर्थे प्रथमयेति सूत्रवार्त्तिकेन समासे ऽव्ययपूर्वपदप्रकृतिस्वरत्वं। दम्भेभिः, दम्भु दम्भे, इषाषि तृषीत्यादिना औणादिको रक्, बहुलं छन्दसीति भिस ऐसादेशाभावः। समृता, गतिरनन्तरः (पा ६।२।४९।) इति गतेः प्रकृतिस्वरत्वं, पूर्ववदाकारः। हंसि, हन्तेः सिपि, नश्चापदान्तस्य झलि (पा ८।३।२४।) इत्यनुस्वारः। यद्वृत्तयोगादनिघातः। भूयसः, बहोर्लोपो भू च बहोः (पा ६।४।१५८।) इति बहुशब्दादुत्तरस्य ईयसुन ईकारलोपो बहोर्भूभावश्च, नित्त्वादाद्युदात्तत्वं॥ ६॥

सप्तमीमृचमाह त्वं तमग्न इति। हे अग्ने, त्वं तं मर्त्तं तथाविधं स्तोत्रिणं मनुष्यं, दिवे दिवे प्रतिदिनं, श्रवसे अन्नार्थं, उत्तमे अमृतत्वे उत्कृष्टे मरणरहिते पदे, दधासि धारयसि। यो यजमानः उभयाय जन्मने द्विविधजन्मार्थं, द्विपदाच्चतुष्पदाश्च लाभायेत्यर्थः, तातृषाणो ऽतिशयेन तृष्णायुक्तो भवति, तस्मै सूरये अभिज्ञाय यजमानाय, मयः सुखं, यद्वै सुखं तन्मय इति श्रुत्यन्तरात्, प्रयश्च अन्नमपि, आकृणोषि सर्वतः करोषि। तातृषाणः, ञितृषा पिपासायां, लिटः कानज्वा (पा ३।२।१०६।) इति लिटः कानजादेशः, चित्त्वादन्तोदात्तत्वं, संहितायां दीर्घश्छान्दसः। कृणोषि, कृवि हिंसाकरणयोश्च, धिन्विकृण्व्योरच (पा ३।१।८०।) इति उः प्रत्ययः, चादिलोपे विभाषा (पा ८।१।६३।) इति निघातप्रतिषेधः॥ ७॥

अष्टमीमृचमाह त्वं नो अग्न इति। हे अग्ने, स्तवानः स्तूयमानस्त्वं

१९१ त्वं नो अग्ने पित्रोरुपस्थ आ देवो देवेष्वनवद्य जागृविः। तनूकृद्बोधि प्रमतिश्च कारवे त्वं कल्याण वसु विश्वमोपिषे ॥

नोऽस्माकं, धनानां सनये दानार्थं, यशसं यशोयुक्तं, कारुं कर्मणां कर्त्तारं पुत्रं, कृणुहि कुरु। नवेन नूतनेन अपसा प्राप्तेन त्वद्दत्तेन पुत्रेण, कर्म्म यागदानादिरूपं, ऋध्याम वर्द्धयामहे, द्यावापृथिवी उभे देवते, देवैरन्यैः सह, नोऽस्मान् प्रावतं प्रकर्षेण रक्षतं। यशसं, अर्श-आदित्वादच्प्रत्ययः, व्यत्ययेन प्रत्ययात् पूर्वस्योदात्तत्वं, यद्वा सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य इति वार्त्तिकेन यशस्शब्दात् क्विप्, तस्य प्रत्ययान्तस्य सनाद्यन्तत्वात् धातुसञ्ज्ञायां, क्विप् च (पां ३।२।७६।) इति क्विप्प्रत्ययान्तधातोः सति शिष्टत्वात्, धातोः (पां ६।१।१६२।) इत्यन्तोदात्तत्वं। कृणुहि, उतश्च प्रत्ययाच्छन्दो वा वचनमिति सूत्रवार्त्तिकेन हेर्लुगभावः। स्तवानः, उणादयो बहुलमिति बहुलवचनात् सम्यानचः स्तुव इत्यौणादिकसूत्रेण केवलस्तौतेरप्यानच्प्रत्ययः, कृषादित्वादाद्युदात्तत्वं। ऋध्याम, ऋधु वृद्धौ, बहुलं छन्दसीति विकरणस्य लुक्, यासुट उदात्तत्वं। द्यावापृथिवी, दिवो द्यावा (पां ६।३।२९।) इति द्यावादेशः, आमन्त्रिताद्युदात्तत्वं ॥ ८॥

नवमीमृचमाह त्वन्नो अग्न इति। हे अनवद्य दोषरहिताग्ने, देवेषु सर्वेषु मध्ये, जागृविर्जागरूकस्त्वं, पित्रोर्मातापितृरूपयोर्द्यावापृथिव्योरुपस्थे समीपस्थाने वर्त्तमानः सन्, नोऽस्माकं तनूकृत् पुत्ररूपशरीरकारी देवो भूत्वा, आबोधि बुध्यस्व अनुगृहाणेत्यर्थः। तथा कारवे कर्म्मकर्त्रे यजमानाय, प्रमतिश्च अनुग्रहरूपप्रकृष्टमतियुक्तश्च भवेति शेषः। हे कल्याण मङ्गलरूपाग्ने, त्वं विश्वं वसु सर्वमपि धनं, ओपिषे यजमानार्थमावपसि। उपस्थ, सुपि स्थः (पां ३।२।४।) इति तिष्ठतेः कः प्रत्ययः, आतो लोप इटि च (पां ६।४।६४।) इत्याकारलोपः, मरुद्वृधादीनां छन्दस्युपसङ्ख्यानमिति वार्त्तिकेन पूर्वपदान्तोदात्तत्वं। जागृविः, जागृ निद्राक्षये, जॄ शॄ स्तॄ जागृभ्यः क्विन्नित्यौणादिकसूत्रेण क्विन्प्रत्ययः, नित्त्वादाद्युदात्तत्वं। बोधि, बुध अवगमने, बहुलं छन्दसीति शपो लुक्, वा छन्दसि (पां ३।४।८८।) इति

११०१ त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत्तव
जामयो वयं। सं त्वा रायः शतिनः सं सहस्रिणः
सुवीरं यन्ति व्रतपामदाभ्य ॥ ३३ ॥

११११ त्वामग्ने प्रथममायुमायवे देवा अकृण्वन्नहुषस्य
विश्पतिं। इलामकृण्वन्मनुषस्य शासनीं पितुर्य-
त्पुत्रो ममकस्य जायते ॥

हेरपित्त्वस्य विकल्पितत्वेन पित्त्वादङित्त्वे सति, अङितश्च (पा ६।४।
१०३।) इति हेर्धिरादेशः, लघूपधगुणः, धातोरन्त्यलोपश्छान्दसः।
प्रमतिः, मन ज्ञाने, क्तिनि, अनुदात्तोपदेश वनति (पा ६।४।३७।)
इत्यनुनासिकलोपः, प्रकृष्टा मतिर्यस्येति बहुव्रीहौ पूर्वपदप्रकृति-
स्वरत्वं। ऊपिथे, टुवप् बीजतन्तुसन्ताने, छान्दसे लिटि, थासःसे (पा
३।४।८०।) इति से आदेशः, वचिस्वपियजादीनामिति (पा ६।
१।१५।) इति सम्प्रसारणपरपूर्वत्वे, द्विर्भावहलादिशेषौ, क्रादिनिय-
मादिट् ॥ ९ ॥

दशमीमृचमाह त्वमग्ने प्रमतिरिति। हे अग्ने, त्वं प्रमतिरस्मदनु-
ग्रहरूपप्रकृष्टमतियुक्तोऽसि, तथा त्वं नोऽस्माकं पिता पालकोऽसि,
तथा त्वं वयस्कृत् आयुष्यप्रदोऽसि, वयमप्यनुष्ठातारस्तव जामयो
बन्धवः, हे अदाभ्य केनाप्यहिंसनीयाग्ने, सुवीरं शोभनपुत्रयुक्तं व्रतपां
कर्मणः पालकं त्वां, शतिनः शतसङ्ख्यायुक्ता रायो धनानि संयन्ति
सम्यक् प्राप्नुवन्ति, तथा सहस्रिणः सहस्रसङ्ख्याकाः रायो धनानि
संयन्ति प्राप्नुवन्ति। सुवीरं, बहुव्रीहौ, नञ्सुभ्यां (पा ६।२।१७२।)
इत्युत्तरपदान्तोदात्तत्वे प्राप्ते, वीरवीर्य्यौ च (पा ६।२।१२०।)
इत्युत्तरपदाद्युदात्तत्वं। अदाभ्य, दभिः प्रकृत्यन्तरमस्तीति केचिदाहुः,
दम्भेश्चेति वक्तव्यमिति वार्त्तिकेन ण्यत् ॥ १० ॥ इति प्रथमस्य द्वितीये
चयस्त्रिंशो वर्गः ॥ ३३ ॥

एकादशीमृचमाह त्वामग्न इति। हे अग्ने, त्वां प्रथमं पुरा देवा
आयवे, आयोर्मनुष्यरूपस्य नहुषस्य एतन्नामकराजविशेषस्य आयुं
मनुष्यरूपं विश्पतिं सेनापतिं अकृण्वन् कृतवन्तः, तथा मनुषस्य मनोः

1121 त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य। त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते॥

इलां एतन्नामधेयामुर्वीं शासनीं धर्मोपदेशकर्त्रीं अकृण्वन् कृतवन्तः, तथा च तैत्तिरीयैराम्नायते, इडा वै मानवी यज्ञानुकाशिन्यासीदिति। वाजसनेयिनोऽप्येवमामनन्ति प्रयाजानूयाजानां मध्ये मामवकल्पय मया सर्वानवाप्स्यसि कामानिति सामनुमन्त्वशादिति। यत् यदा ममकस्य मदीयस्य हिरण्यस्तूपसम्बन्धिनो यः पिताङ्गिरास्तस्य पितुः पुत्रो जायते, तदानीं हे अग्ने, त्वमेव पुत्ररूप आसीरिति शेषः। आयवे, षष्ठ्यर्थे चतुर्थी वक्तव्येति वार्त्तिकेन चतुर्थी। नहुषस्य, नहबन्धने, नहिकलिवृन्यर्त्तिलसिभ्य उषजित्यौणादिकसूत्रेण उषच्प्रत्ययः, चषादित्वादाद्युदात्तत्वं। विश्पतिं, परादिश्छन्दसि बहुलं (पां ६।२। १९९।) इत्युत्तरपदाद्युदात्तत्वं। मनुषस्य, * मनोर्जातावञ्यतौ षुक् च (पां ४।१।१६१।) इति मनोरञ्प्रत्ययः, षुगागमश्च, आदिवृद्धौ प्राप्तायां सत्यां, सर्वे विधयश्छन्दसि विकल्पन्त इति परिभाषया बाहुलकाद्वृद्ध्यभावः, पूर्वपदाद्युदात्तत्वं। शासनीं, शिष्यतेऽनयेति शासनी, करणाधिकरणयोश्च (पां ३।३।११७।) इति करणे ल्युट्, टिड्ढाणञ्द्वयसज्दघ्नञ् (पां ४।१।१५।) इति ङीप्, लित्स्वरेणाद्युदात्तत्वं। ममकस्य, ममेदमित्यर्थे, तस्येदं (पां ४।३।१२०।) इत्यणि कृते, तवकममकावेकवचने (पां ४।३।३।) इत्यस्मच्छब्दस्य ममकादेशः, संज्ञापूर्वको विधिरनित्य इति परिभाषया वृद्ध्यभावः, व्यत्ययेनाद्युदात्तत्वं॥ ११॥

द्वादशीमृचमाह त्वं नो अग्न इति। हे वन्द्य वन्दनीयाग्ने देव, त्वं, तव पायुभिस्त्वदीयैः पालनैर्मघोनो धनयुक्तान् नोऽस्मान् रक्ष, तथा तन्वश्च तन्वः पुत्रदेहानपि रक्ष, तोकस्यास्यास्मदीयपुत्रस्य यत्तनयोऽस्मत्पौत्रादिस्तव व्रते त्वदीये कर्म्मणि अनिमेषं निरन्तरं रक्षमाणः सावधानो वर्त्तते, तस्मिन् या गावः सन्ति तासां गवां त्राता रक्षकोऽसि, ईदृशस्य तवास्मद्रक्षणे किमु वक्तव्यमित्यर्थः। मघोनः,

* मनेर्निदित्युषच् नित्त्वादाद्युदात्तत्वं, षं का। मनेर्निदित्युषच् बाहुलकाद्वृद्ध्यभावः पूर्वपदाद्युदात्तत्वं, सां। उभयपेक्षपदसिद्धिः पाणिनिसम्मता।

११३१ त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय चतुरक्ष इध्यसे । यो रातहव्योऽवृकाय धायसे कीरेश्चिन्मन्त्रं मनसा वनोषि तं ॥

शसि, श्वयुवमघोनामतद्धिते ( पां ६ । ४ । १३३ । ) इति सम्प्रसारणं । तस्याः, सुपां सुपो भवन्तीति वक्तव्यमिति वार्त्तिकेन शसो जसादेशः । प्रथमयोः पूर्वसवर्णः ( पां ६ । १ । १०२ । ) इति पूर्वसवर्णदीर्घस्य, दीर्घाज्जसि च ( पां ६ । १ । १०५ । ) इति प्रतिषेधः, उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ( पां ८ । २ । ४ । ) इत्यादिना स्वरितत्वं, शसि हि, उदात्तयणो हल्पूर्वात् ( पां ६ । १ । १७४ । ) इति विभक्त्युदात्तत्वं स्यात् ॥ १२ ॥

अथोदशीमृचमाह त्वमग्ने यज्यव इति । हे अग्ने, त्वं यज्यवे यज्योर्यजमानस्य पायुः पालकः, अन्तरः समीपवर्त्ती सन्, अनिषङ्गाय रक्षोभिरसम्बन्धाय यज्ञाय चतुरक्षः दिक्चतुष्टयेऽपि इन्द्रियस्थानीयज्वालायुक्त इध्यसे दीप्यसे, अवृकाय अहिंसकाय धायसे पोषकाय तुभ्यं, रातहव्यो दत्तहविर्यो यजमानोऽस्ति, कीरेश्चित् स्तोतुरेव सततस्य सम्बन्धिनं मन्त्रं त्वदीयस्तोत्ररूपं, मनसा त्वदीयेन चित्तेन, वनोषि याचसि । यज्यवे, यजिमनिशुन्धिदसिजनिभ्यो युच् इत्यौणादिके युच्प्रत्ययः, वृषादित्वादाद्युदात्तत्वं । पायुः, कृवापाजिमिस्वदिसाध्यशूभ्य उण् इत्यौणादिके उण्प्रत्ययः, आतो युक् चिण्कृतोः ( पां ३ । ३ । १२८ । ) इति युगागमः । अनिषङ्गाय, षञ्ज सङ्गे, न विद्यते षङ्गो यस्येति बहुव्रीहौ, नञ्सुभ्यां ( पां ६ । २ । १७२ । ) इत्युत्तरपदान्तोदात्तत्वं । चतुरक्षः, चत्वार्यक्षीणि ज्वालारूपाणि यस्यासौ चतुरक्षः । बहुव्रीहौ, सक्थ्यक्ष्णोः स्वाङ्गात् षच् ( पां ५ । ४ । ११३ । ) इति समासान्तः षच्प्रत्ययः, चित्वादन्तोदात्तत्वं । धायसे, वहिहाधाञ्भ्यश्छन्दसीत्यौणादिको ऽसुन् प्रत्ययः, णिदित्यनुवृत्तेः, आतो युक् चिण्कृतोः (पां ३ । ३ । १२८ ।) इति युगागमः । कीरेः, कॄत संशब्दे, अस्मात् अन्तादच इरित्यौणादिक इप्रत्यये, णिलोपे, धातोरन्त्यलोपश्छान्दसः । मन्त्रं, मत्रि गुप्तभाषणे, पचाद्यचि, वृषादिषु पाठादाद्युदात्तत्वं । वनोषि, वनु याचने, तनादिकृञ्भ्य उः ( पां ३ । १ । ७९ । ) इत्युप्रत्ययः, प्रत्ययस्वरः ॥ १३ ॥

११४१ त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत् । आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः ॥

चतुर्दशीमृचमाह त्वमग्ने उरुशंसायेति। हे अग्ने, त्वं उरुशंसाय बहुभिः स्तोतव्याय वाघते ऋत्विजे, तदुपकारार्थं स्पार्हं स्पृहणीयं परममुत्तमं यद्रेक्णो धनमस्ति, तद्धनं वनोषि अनुष्ठाता लभतामिति कामयसे, तथा त्वं आध्रस्य चित् सर्वतो धारणीयस्य दुर्बलस्य यजमानस्यापि प्रमतिः प्रकृष्टबुद्धियुक्तः पिता पालक इत्यभिधीयसे, तथा विदुष्टरोऽतिशयेनाभिज्ञस्त्वं पाकं शिशुं, पोतः पाकोऽर्भको डिम्भ इत्यभिधानात्, यास्कोऽप्येवमाह पाकः पक्तव्यो भवति, तथाविधं यजमानं प्रशास्सि प्रकर्षेणानुशिष्टं करोषि, तथा दिशः प्राच्यादिकाः प्रशास्सि त्वदीयशासनाभावे अनुष्ठातॄणां विभ्रमः स्यात्, तथाच श्रूयते, देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्निति सभ्रमो दक्षिणदिग्गतोऽग्निनानिवर्त्तते। तदपि तथैवाम्नातं, पथ्यां स्वस्तिमयजन्प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणां सोमेन प्रतीचीं सवित्रोदीचीमिति। ऐतरेयिणापि तथैवाम्नातं, अथो एतं नरमवदीत मयैव प्राचीन्दिशम्प्राजानन्नग्निना दक्षिणामिति। उरुशंसाय, शंसु स्तुतौ, शस्यत इति शंसः, कर्म्मणि घञ्, ञित्स्वरेणाद्युदात्तत्वं, कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। स्पार्हं, स्पृहासम्बन्धि, तस्येदं (पां ४।३।१२०।) इत्यण्प्रत्ययः। रेक्णः, रिचिर् विरेचने, रिचेर्धने घिच्चेत्यौणादिकोऽसुन्प्रत्ययः, चकारात्प्रत्ययस्य नुडागमः, चजोःकुघिण्ण्यतोः (पां ७।३।५२।) इति कुत्वं। आध्रस्य, ध्रै तृप्तौ, आतश्चोपसर्गे (पां ३।१।१३६।) इति कप्रत्ययः, आदेच उपदेशे शिति (पां ६।१।४५।) इत्यात्त्वं। शास्सि, शासु अनुशिष्टौ, अदादित्वाच्छपो लुक्, सिपः पित्त्वादनुदात्तत्वे धातुस्वरः, पाकञ्च प्रशास्सीति, अत्र चार्थो गम्यते, अतः, चादिलोपे विभाषा (पां ८।१।६३।) इति प्रथमा तिङ्विभक्तिर्न निहन्यते। विदुष्टरः, विद्वच्छब्दात्तरपि, अयस्मयादीनि छन्दसि (पां १।४।२०।) इति भसञ्ज्ञायां, वसोः सम्प्रसारणं (पां ६।४।१३१।) इति सम्प्रसारणं, परपूर्वत्वं, शासि वसि घसीनाञ्च (पां ८।

१ १५१ त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि-
पासि विश्वतः । स्वादुक्षद्मा यो वसतौ स्योनकृज्जी-
वयाजं यजते सोपमा दिवः ॥ ३४ ॥

३।६०।) इति षत्वं, तरपः पित्त्वादनुदात्तत्वे वसोः स्वरेणोकार उदात्तः ॥ १४ ॥

पञ्चदशीमृचमाह त्वमग्ने प्रयतदक्षिणमिति । हे अग्ने, त्वं प्रयतदक्षिणं येन यजमानेन ऋत्विग्भ्यो दक्षिणा दत्ता, तादृशं नरं पुरुषं यजमानं, विश्वतः सर्वतः, परिपासि सम्यक् पालयसि, तत्र दृष्टान्तः, स्यूतं निश्छिद्रत्वेन सूचीभिः सम्यक्छिन्नत्वात्यादितं वर्मेव, यथा कवचं युद्धे पालयति तद्वत् । स्वादुक्षद्मा स्वाद्वन्नवान्, वसतौ निवासभूते स्वगृहे, स्योनकृत् अतिथीनां सुखकारी यो यजमानो जीवयाजं जीवयजनसहितं यज्ञं, यद्वा जीवनिष्पाद्यं यज्ञं यजते अनुतिष्ठति, स यजमानो दिवः स्वर्गस्योपमा दृष्टान्तो भवति, यथा स्वर्गोऽनुष्ठातृन् सुखयति, तथा त्वमप्यृत्विगादीनित्यर्थः । स्यूतं, षिवु तन्तुसन्ताने, निष्ठा (पां ३।२।१०२।) इति क्तः, यस्य विभाषा (पां ७।२।१५।) इति इट्प्रतिषेधः, छ्वोः शूडनुनासिके च (पां ६।४।१९।) इति वकारस्य ऊठादेशः । स्वादून् क्षदतीति स्वादुक्षद्मा, क्षदतिर्दत्तिकर्म्मा, अन्येभ्योऽपि दृश्यन्ते (पां ३।२।७५।) इति मनिन्, नित्त्वादाद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वं बहुव्रीहौ व्यत्ययेन । जीवयाजं, जीवान्मृत्विज इज्यन्ते दक्षिणाभिः पूज्यन्त इत्यधिकरणे घञ्, कुत्वाभावश्छान्दसः, यद्वा जीवैः पशुभिर्याजनं जीवयाजः, याजयतेर्घञ्, णेरनिटि (पां ६।४।५१।) इति णिलोपस्य, अचः परस्मिन् (पां १।१।५७।) इति स्थानिवद्भावात्, चजोःकुघिण्ण्यतोः (पां ७।३।५२।) इति कुत्वाभावः, थाथादिस्वरेणोत्तरपदान्तोदात्तत्वं । सोमपा, सोऽचि लोपे चेत् पादपूरणं (पां ६।१।१३४।) इति संहितायां सोर्लोपः । दिवः, ऊडिदं (पां ६।१।१७१।) इति विभक्तेरुदात्तत्वं ॥ १५ ॥ इति प्रथमस्य द्वितीये चतुस्त्रिंशो वर्गः ॥ ३४ ॥

११६। इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात्। आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानां॥

११७। मनुष्वदग्ने अङ्गिरस्वदङ्गिरो ययातिवत्सदने पूर्ववच्छुचे। अच्छ याह्यावहा दैव्यं जनमासादय बर्हिषि यक्षि च प्रियं॥

इमामग्न इत्यनया अनाहिताग्निरार्त्तिं कृत्वा आज्याहुतिं जुहुयात्, ऋत्विजो ब्रूयादिति खण्डे एवमनाहिताग्निरार्त्त्य इमामग्ने शरणिं मीमृषो न इति सूचितं, तामेतां सूक्ते षोडशीमृचमाह इमामग्न इति। हे अग्ने, त्वं नोऽस्मत्सम्बन्धिनीमिमामिदानीं निष्पादितां शरणिं हिंसां व्रतलोपरूपां, मीमृषः क्षमस्व, तथापि होमादिरूपां त्वदीयसेवां परित्यज्य दूराद्दूरदेशं यमिममध्वानमगाम गतवन्तस्तमपि क्षमस्वेति शेषः। सोम्यानां, सोमार्हाणामनुष्ठातॄणां मर्त्यानां त्वमाप्यादिगुणयुक्तोऽसि, आपिः प्रापणीयः, पिता पालकः, प्रमतिः प्रकृष्टमननयुक्तः, भृमिर्भ्रामकः कर्म्मनिर्वाहक इत्यर्थः, ऋषिकृद्दर्शनकारी अनुजिघृक्षया प्रत्यक्षो भवसीत्यर्थः। शरणिं, शॄ हिंसायामित्यस्मादौणादिकोऽनिः प्रत्ययः। मीमृषः, मृष तितिक्षायां, अस्माल्लोटि चङि गुणे प्राप्ते, नित्यं छन्दसि (पां ७। ४ ।८।) इत्युपधाऋकारस्य ऋकारादेशः, णिलोपे द्विर्भावहलादिशेषोरदत्वसन्वद्भावेत्वदीर्घत्वानि, तिङ्ङतिङः (पां ८। १। २८।) इति निघातः। अगाम, इण् गतौ, इणो गा लुङि (पां २। ४। ४५।) इति गादेशः, गातिस्थाघुपाभूभ्यः (पां २। ७। ७७।) इति सिचो लुक्, अडागम उदात्तः। भृमिः, भ्रमु अनवस्थाने, भ्रमेः सम्प्रसारणञ्चेत्यौणादिक इन्प्रत्ययः, सम्प्रसारणे परपूर्वत्वं, इगुपधात् किदित्यनुवृत्तेः, कित्त्वाद्गुणप्रतिषेधः, नित्त्वादाद्युदात्तत्वं ॥ १६ ॥

सप्तदशीमृचमाह मनुष्वदग्न इति। हे शुचे शुद्धियुक्ताङ्गिरोऽङ्गनशील हविरानयनाय तत्र तत्र गमनशीलाग्ने, अच्छ आभिमुख्येन, सदने देवयजनदेशे याहि गच्छ, तत्र चत्वारो दृष्टान्ताः, मनुष्वत्, यथा मनु-

। १८ । एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा। उत प्रणेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ॥ ३५ ॥

रनुष्ठानदेशे गच्छति, अङ्गिरस्वत्, यथा चाङ्गिरा गच्छति, ययातिवत्, यथा ययातिर्नाम राजा गच्छति, पूर्ववदन्ये च, पूर्वपुरुषा यथा गच्छन्ति, अथवा, मन्वादीनां यज्ञे यथा त्वं गच्छसि तद्वत्। गत्वा च दैव्यं देवतासमूहरूपं जनमावह, अस्मिन् कर्म्मण्यानय, आनीय बर्हिषि आस्तीर्णदर्भे आसादय तान्देवानुपवेशय, उपवेश्य च प्रिय-मभीष्टं हविर्यच्छ च देहि। मनुष्वत्, तेन तुल्यं क्रियाचेद्वतिः (पां ५। १। ११५) इति प्रथमार्थे वतिः, तत्र तस्येव (पां ५। १। ११६।) इति षष्ठ्यर्थे वा वतिः, अयस्मयादित्वेन भत्वाद्रुत्वाद्यभावः। प्रत्ययस्वरः, एवमङ्गिरस्वदित्यादिषु। यक्ष, द्व्यचोऽतस्तिङः (पां ६। ३। १३५।) इति संहितायान्दीर्घः। यच्छ, लोटि, बहुलं छन्दसीति शपो लुक्, सेर्ह्यपिच्च (पां ३। ४। ८७।) इति सेर्हिरभावश्छान्दसः, व्यत्ययात्वे॥१७॥

साग्निचयने क्रतौ उखासम्भरणीयायामिष्टौ अग्नेर्ब्रह्मणस्पतेः पुरोऽनुवाक्या एतेनाग्न इत्येषा,। दर्शपूर्णमासाभ्यामिष्ट्वेति खण्डे एतेनाग्ने ब्रह्मणा वावृधस्व ब्रह्म च ते जातवेदो नमश्चेति सूत्रितं, तामेतां सूक्तेऽष्टादशीमृचमाह एतेनाग्ने ब्रह्मणेति। हे अग्ने, एतेनास्मत्प्रेरितेन ब्रह्मणा मन्त्रेण वावृधस्व अभिवृद्धो भव, शक्ती वा, विदा वा, अस्मदीयशक्त्या चास्मदीयज्ञानेन च, ते तव, यत् स्तोत्रं, चकृम वयं कृतवन्तः, एतेन ब्रह्मणेति पूर्वेणान्वयः। उत अपि च, अस्मान् अनुष्ठातॄन्, अभि वस्यो वसुमत्तरत्वलक्षणं श्रेयः, प्रणेषि प्रकर्षेण प्रापयसि, नोऽस्मान्, वाजवत्या प्रभूतान्नयुक्तया, सुमत्या अनुष्ठानविषयया शोभनबुद्ध्या, संसृज संयोजय। वावृधस्व, वृधु वृद्धौ, लेट्याडागमः, बहुलं छन्दसीति शपः श्लुः, द्विर्भावहलादिशेषोरदत्वानि, अभ्यासस्य संहितायां दीर्घश्छान्दसः। शक्ती, शक्लृ शक्तौ, क्तिन्, सुपां सुलुक् (पां ७। १। ३९।) इत्यादिना तृतीयायाः पूर्वसवर्णदीर्घत्वं, क्तिनो नित्वादाद्युदात्तत्वं। विदा, सावेकाचः (पां ६। १। १६८।) इत्यादिना तृतीयाया उदात्तत्वं। नेषि, णीञ् प्रापणे, बहुलं छन्दसीति शपो लुक्, उपसर्गादसमासेऽपि

द्वात्रिंशसूक्तं।

१ १ १ इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार
प्रथमानि वज्री। अहन्नहिमन्वपस्ततर्द प्र वक्षणा
अभिनत्पर्वतानां ॥

णोपदेशस्य (पां ८।४।१४।) इति णत्वं। समन्तात्, मनधातोः क्तिन् प्रत्ययः, मन्क्तिन्व्याख्यान (पां ६।२।१५१।) इत्यादिनोत्तरपदान्तोदात्तत्वं प्रथमाध्याये प्रपञ्चितं, उदात्तयणो हल्पूर्वात् (पां ६।१।१७४।) इति विभक्तेरुदात्तत्वं ॥ १८ ॥ इति प्रथमस्य द्वितीये पञ्चत्रिंशोवर्गः ॥

इन्द्रस्य नु वीर्याणीति पञ्चदशर्चं सूक्तं, आङ्गिरसो हिरण्यस्तूप ऋषिः, त्रिष्टुप्छन्द इन्द्रो देवता, इन्द्रस्य पञ्चोनेत्यनुक्रमणिका, अग्निष्टोमे माध्यन्दिनसवने निष्केवल्यशस्त्रे इन्द्रस्य नु वीर्याणि प्रवोचमिति निविद्धानीयसूक्तं। निष्केवल्यस्येति खण्डे इन्द्रस्य नु वीर्याणीत्येतस्मिन्नैन्द्रीं निविदन्दध्यादिति। विषुवत्यपि तस्मिन् शस्त्रे एतद्विनियुक्तं, विषुवान्दिवा कीर्त्य इति खण्डे सूत्रितं इन्द्रस्य नु वीर्याणीत्येतस्मिन्नैन्द्रीं निविदं शंसेति। महाव्रते निष्केवल्येऽप्येतदेव विनियुक्तं। रायन्तरो दक्षिणः पक्ष इति खण्डे चतस्रः स्तुतीः षड्स्तुतीः करोतीन्द्रस्य नु वीर्याणि प्रवोचमिति। तत्र प्रथमामृचमाह इन्द्रस्य न्विति। वज्री वज्रयुक्त इन्द्रः, प्रथमानि पूर्वसिद्धानि यानि मुख्यानि, वीर्य्याणि पराक्रमयुक्तानि कर्म्माणि चकार, अस्येन्द्रस्य, तानि वीर्य्याणि, नु क्षिप्रं, प्रवोचं प्रब्रवीमि, कानि वीर्याणि, तदुच्यते, अहिं मेघं अहन् हतवान, तदेतदेकं वीर्य्यं। अनु पश्चात्, अपो जलानि ततर्द हिंसितवान्, भूमौ पातितवानित्यर्थः, इदं द्वितीयं वीर्यं। पर्वतानां पर्वतसम्बन्धिनीः, वक्षणाः प्रवहणशीला नदीः, प्राभिनत्, भिन्नवान्, कूलद्वयसङ्घर्षेण प्रवाहितवानित्यर्थः, इदं तृतीयं वीर्यं। एवमुत्तरत्रापि द्रष्टव्यं। वीर्य्याणि, शूर वीर विक्रान्तौ, अस्मात्, अचो यत् (पां ३।१।९७।) इति यत् प्रत्ययः, णेरनिटि (पां ६।४।५१।) इति णिलोपः, तित्स्वरितं (पां ६।१।१८५।) इति स्वरितत्वं, यतोऽनावः (पां ६।१।२१३।) इत्याद्युदात्तत्वं न भवति, आद्युदात्तत्वे हि नु शब्देन बहुव्रीहौ, आद्युदात्तं द्व्यच् छन्दसि

१२१ अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं
ततक्ष। वाश्रा इव धेनवः स्यन्दमाना अंजः समुद्र-
मवजग्मुरापः॥

(पा ६।२।११९।) इत्यनेनैवोत्तरपदाद्युदात्तस्य सिद्धत्वात्, वीरवीर्य्यौ च (पा ६।२।१२०।) इति पुनस्तद्विधानमनर्थकं स्यात्, अतोऽवगम्यते यतोऽनाव इत्याद्युदात्तत्वं वीरशब्देन प्रवर्त्तत इति, अतः परिशेषात् तित्स्वरितमिति प्रत्ययस्य स्वरितत्वमेव, यकारेण विस्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं। वोचं, अस्यतिवक्तिख्यातिभ्योऽङ् (पा ३।१।५२।) इति च्लेरङादेशः, बहुलं छन्दस्यमाङ्योगेऽपि (पा ६।४।७५।) इत्यडभावः, यद्वृत्तयोगादनिघातः। अहन्, हन हिंसागत्योः, अस्तेर्लङि, अडागमे, लङस्तिबादेशे, इतश्च (पा ३।४।१००।) इति इकारलोपे, हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् (पा ६।१।६८।) इति तकारलोपः। अहिं, आङ्पूर्वाद्धन्तेः, आङि श्रिहनिभ्यां ह्रस्वश्चेत्यौणादिक इण्प्रत्ययः, आङो ह्रस्वत्वञ्च, वातेर्डिच्च, समासे स्वरोदात्त इत्यौणादिकसूत्राभ्यां डित्त्वं, पूर्वपदोदात्तत्वञ्चानुवर्त्यते, ततष्टिलोपे पूर्वपदस्योदात्तत्वं। ततर्द, उ तृदिर् हिंसानादरयोः, तिङ्ङतिङः (पा ८।१।२८।) इति निघातः॥ १॥

द्वितीयामृचमाह अहन्नहिमिति। पर्वते, शिश्रियाणं आश्रितं, अहिं मेघं, अहन् हतवान्, अस्मै इन्द्राय, स्वर्यं सुष्ठु प्रेरणीयं, यद्वा, शब्दनीयं स्तुत्यं, त्वष्टा विश्वकर्म्मा, वज्रं, ततक्ष आहृतवान्, तेन वज्रेण मेघे भिन्ने सति, स्यन्दमानाः प्रस्रवणयुक्ता आपः, समुद्रं, अंजः सम्यक् अवजग्मुः प्राप्ताः, तत्र दृष्टान्तः, वाश्रा इव धेनवः, वत्सं प्रति हम्मारवोपेता धेनव इव, यथा धेनवः सहसा वत्सस्थाने गच्छन्ति तद्वत्। शिश्रियाणं, श्रिञ् सेवायां, लिटः कानच्, द्विर्भावहलादिशेषेयङादेशाः, चितः (पा ६।१।१६३।) इत्यन्तोदात्तत्वं। स्वर्यं, स्वृ गतौ, अस्मात्सुपूर्वात्, ऋहलोर्ण्यत् (पा ३।१।१२४।) इति ण्यत्, सञ्ज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावः, यद्वा स्वृ शब्दोपतापयोरित्यस्मात् ण्यति पूर्व्ववद्वृद्ध्यभावः, तित्स्वरितं (पा ६।१।१८५।) इति स्वरितत्वं। वाश्राः, वाश्यन्त इति वाश्राः, वाशृ शब्दे, स्फायितञ्चि-

। ३ । वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सु-
तस्य । आ सायकं मघवादत्त वज्रमहन्नेनं प्रथ-
मजामहीनां ॥

। ४ । यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः
प्रोत मायाः । आत्सूर्यं जनयन्द्यामुषासं तादीत्ना
शत्रुं न किला विवित्से ॥

त्वाष्ट्रीयादिको रक्प्रत्ययः । जग्मुः, उसि, गमहन० ( पां ६ । ४ । ९८ । ) इत्यादिनोपधालोपः ॥ २ ॥

तृतीयामृचमाह वृषायमाण इति । वृष इव आचरन्निन्द्रः, सोमं, अवृणीत वृतवान्, त्रिकद्रुकेषु ज्योतिष्टोम गोष्टोम आयुष्टोम इत्ये-तन्नामकास्त्रयो यागास्त्रिकद्रुका उच्यन्ते, तेषु सुतस्य अभिषुतस्य, सोमं सोमस्यांशं, अपिबत् पीतवान्। मघवा धनवानिन्द्रः, सायकं वज्रं, आदत्त स्वीकृतवान्, तेन वज्रेण अहीनां मेघानां मध्ये, प्रथमजां प्रथमोत्पन्नं एनं मेघं, अहन् हतवान्। वृषायमाणः, वृष इव आचरन्, कर्त्तुः क्यङ्सलोपश्च ( पां ३ । १ । ११ । ) इति क्यङ्प्रत्ययः, अकृत्सार्व-धातुकयोर्दीर्घः ( पां ७ । ४ । २५ । ) इतिदीर्घः, अदुपदेशाद्धातोरन्तो-दात्तत्वे क्यङन्ताद्धातोरन्तोदात्तत्वं। सायकं, षिञ् बन्धने, सिनोतीति सायकः, ण्वुल्, लित्स्वरेणाद्युदात्तत्वं। प्रथमजां, प्रथमं जायत इति प्रथमजाः, जन सन खनक्रमगमोविट् ( पां ३ । २ । ६७ । ) इति विट्-प्रत्ययः, विड्वनोरनुनासिकस्यात् ( पां ६ । ४ । ४१ । ) इत्यात्वं ॥ ३ ॥

चतुर्थीमृचमाह यदिन्द्रेति । उत अपिच, हे इन्द्र, यत् यदा, अहीनां मेघानां, प्रथमजां प्रथमोत्पन्नं मेघं, आहन् हतवानसि, आत् तदनन्तरं, मायिनां मायोपेतानां असुराणां सम्बन्धिनीर्मायाः, प्रामिनाः प्रकर्षेण नाशितवानसि। आत् अनन्तरं, सूर्य्यं, उषासं उषः कालं, द्यामाकाशञ्च, जनयन्नुत्पादयन्, आवरकमेघनिवारणेन प्रकाश-यन् वर्त्तसे। तादीत्ना तदानीं, आवरकान्धकाराभावात् शत्रुं घातकं वैरिणं, न विवित्से किल, त्वं न लब्धवान् खलु। अहन्, हन्तेर्लङि अडागमे, बहुलंछन्दसि, इतश्च ( पां ३ । ४ । १०० । ) इति इकारलोपे,

१५। अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता
वधेन। स्कन्धांसीव कुलिशेनाविवृक्णाहिःशयत
उपपृक् पृथिव्याः॥३६॥

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् (पां ६।१।६८।) इति तकारलोपः, अडागम उदात्तः, यद्वृत्तयोगादनिघातः। मायिनां, मायाशब्दस्य व्रीह्यादिषु पाठात्, व्रीह्यादिभ्यश्च (पां ५।२।११६।) इति मत्वर्थीय इनिः। अमिनाः, मीञ् हिंसायां, क्र्यादिकः, मीनातेर्निगमे (पां ७।३।८१।) इति ह्रस्वत्वं। तादीत्ना, तदानीमित्यस्य पृषोदरादित्वाद्वर्णविपर्य्ययः। द्विच, निपातस्य च (पां ६।३।१३६।) इति दीर्घत्वं। विविदे, विद्लृ लाभे, क्रादिनियमप्राप्त इट् व्यत्ययेन न भवति॥४॥

पञ्चमीमृचमाह अहन्वृत्रमिति। अयमिन्द्रो, वज्रेण, महता वधेन वज्रेण सम्पादितो यो महान् वधस्तेन वज्रेण, वृत्रतरं अतिशयेन लोकानामावरकं अन्धकाररूपं, यद्वा, वृत्रैरावरकैः सर्वान् प्रभूततरत्, तं वृत्रं एतन्नामकं असुरं, व्यंसं विगतांसं, छिन्नबाहुर्यथा भवति तथा अहन् हतवान्। अंसच्छेदे दृष्टान्तः, कुलिशेन कुठारेण आविवृक्णा विशेषतश्छिन्नानि स्कन्धांसीव, यथा वृक्षस्कन्धाश्छिन्ना भवन्ति तद्वत्, तथा सति, अहिर्वृत्रः, पृथिव्याः पृथिव्युपरि, उपपृक् सामीप्येन सम्पृक्तः, शयते शयनङ्करोति, छिन्नकाष्ठवद्भूमौ पततीत्यर्थः। वृत्रतरं, वृतु वर्त्तने, स्फायितञ्चीत्यादिना भावे औणादिको रक्प्रत्ययान्तो वृत्रशब्दः, वृत्रेणावरणेन सर्वं तरतीति वृत्रतरः, तरतेः पचाद्यच्, पचादिश्छन्दसि बहुलं (पां ६।२।१९९।) इत्युत्तरपदान्तोदात्तत्वं, तदपि तु व्यत्ययेन। व्यंसं, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते, उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (पां ८।२।४।) इति स्वरितत्वं, वधेन, हनश्च वधः (पां ३।३।७६।) इति भावे अप्, तत्सन्नियोगेन धातोर्वधादेशः, स चान्तोदात्तः, अन्त्यस्याकारस्य, अतो लोपः (पां ६।४।४८।) इति लोपे, उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वं। विवृक्णा, ओव्रश्चू छेदने, कर्म्मणि निष्ठायां क्तप्रत्ययः, यस्य विभाषा (पां ७।२।१५।) इति इट्प्रतिषेधः। ओदितश्च (पां ८।२।

।६। अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुवि-
बाधमृजीषं। नातारीदस्य समृतिं वधानां सं
रुजानाः पिपिष इन्द्रशत्रुः॥

७५।) इति परत्वान्निष्ठानत्वं, ततो, व्रश्चभ्रस्जसृजमृज० (पां ८।२।३६।) इत्यादिना षत्वे प्राप्ते, निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्य इति वार्त्तिकेन झल्परत्वाभावात् षत्वं न भवति, कुत्वे कर्त्तव्ये तदसिद्धमेवेति, चोः कुः (पां ८।२।३०।) इति कुत्वं, शेश्छन्दसि बहुलं (पां ६।१।७०।) इति शेर्लोपः, गतिरनन्तरः (पां ६।२।४७।) इति गतेः प्रकृतिस्वरत्वं। शयते, बहुलं छन्दसि (पां २।४।७३।) इति शपो लुगभावः। पृथिव्याः, उदात्तयणो हल्पूर्वात् (पां ६।१।१७४।) इति विभक्तेरुदात्तत्वं॥५॥ इति प्रथमस्य द्वितीये षट्त्रिंशो वर्गः॥३६॥

षष्ठीमृचमाह अयोद्धेवेति। दुर्म्मदो दुष्टमदोपेतो दर्पयुक्तो वृत्रः, अयोद्धेव योद्धृरहित इव, इन्द्रं आ हि जुह्वे आह्वतवान् खलु, कीदृशमिन्द्रं महावीरं, गुणैर्महान् भूत्वा शौर्य्योपेतं। तुविबाधं बहूनां बाधकं। ऋजीषं शत्रूणामपार्जकं। अस्येदृशस्येन्द्रस्य सम्बन्धिनो ये शत्रुवधाः सन्ति तेषां वधानां, समृतिं सङ्गमं नातारीत्, पूर्वोक्तो दुर्म्मदस्तरितुं नाशक्नोत्। इन्द्रशत्रुः, इन्द्रः शत्रुर्घातको यस्य वृत्रस्य तादृशो वृत्रः, इन्द्रेण हतो, नदीषु पतितः सन्, रुजानाः नदीः सम्पिपिषे सम्यक् पिष्टवान्, सर्वान् लोकानावृण्वतो वृत्रदेहस्य पातेन नदीनां कूलानि, तत्रत्यं पाषाणादिकञ्च चूर्णीभूतमित्यर्थः। अयोद्धेव, न विद्यते योद्धास्येति बहुव्रीहौ, नञ्सुभ्यां (पां।६।२।१७२।) इत्युत्तर-पदान्तोदात्तत्वं, समासान्तविधेरनित्यत्वात्, नद्यृतश्च (पां ५।४।१५३।) इति कबभावः। जुह्वे, ह्वेञ् स्पर्द्धायां शब्दे च, अभ्यस्तस्य च (पां ६।१।३३।) इति सम्प्रसारणं, उवङादेशाभावश्छान्दसः, यद्वा, छन्दस्युभयथा (पां ३।४।११७।) इति सार्वधातुकसञ्ज्ञायां, हुश्नुवोः सार्वधातुके (पां ६।४।८७।) इति यणादेशः, अथ लक्षणप्रतिपदोक्तपरिभाषया लक्ष्यानुरोधान्नाश्रीयते, इतरथा हि आजुह्वानः सुप्रतीक इत्यादिषु यणादेशो न स्यात्। न चैवं सति, सातये

१७ १ अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान। वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः॥

ऋचे वामित्यादावपि तथा स्यादिति वाच्यं, अनेकाजभावात्, एरनेकाचोऽसंयोगपूर्वस्य (पां ६।४।८२।) इति सूत्रात्, अनेकाच इति हि तत्रानुवर्तते, प्रत्ययस्वरेणान्तोदात्तत्वं। हि च (पां ८।४।३४।) इति निघातप्रतिषेधः। महावीरं, महांश्चासौ वीरश्चेति महावीरः, आन्महतः (पां ६।३।४६।) इत्यादिना आत्वं। तुविबाधं, तुवीन् बहून् बाधत इति तुविबाधः, बाधृ विलोडने, पचाद्यच्, कृदुत्तरपदप्रकृतिस्वरत्वं। सम्पृतिं, तादौ च निति कृत्यतौ (पां ६।२।५०।) इति गतेः प्रकृतिस्वरत्वं। रुजानाः, रुजो भङ्गे, रुजन्ति कूलानीति रुजानाः नद्यः। रुजाना नद्यो भवन्ति रुजन्ति कूलानीति यास्कः। व्यत्ययेन शानच्, तुदादिभ्यः शः (पां ३।१।७७।) इति शप्रत्ययः, लुगभावश्छान्दसः, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः। पिपिषे, पिष्लृ सञ्चूर्णने, व्यत्ययेन लिट्, इन्द्रशत्रुः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥ ६॥

सप्तमीमृचमाह अपादहस्त इति। अपात् वज्रेण छिन्नत्वात् पादरहितः, अहस्तो हस्तरहितो वृत्रः, इन्द्रमुद्दिश्य, अपृतन्यत् पृतनां युद्धमैच्छत्, दोषाधिक्येन बहुधा छिन्नोऽपि युद्धं न परित्यक्तवानित्यर्थः, अस्य हस्तपादहीनस्य वृत्रस्य, सानौ पर्वतसानुसदृशे प्रौढस्कन्धे, अधि उपरि, वज्रं आजघान इन्द्र आभिमुख्येन प्रक्षिप्तवान्। अशक्तस्यापि युद्धेच्छायां दृष्टान्तः, वध्रिश्छिन्नमुष्कः पुरुषः, वृष्णो रेतःसेचनसमर्थस्य पुरुषान्तरस्य प्रतिमानं सादृश्यं बुभूषन् प्राप्तुमिच्छन्, यथा न शक्नोति तद्वदयमिति शेषः। स वृत्रः, पुरुत्रा बहुष्ववयवेषु, व्यस्तः विविधं छिन्नस्ताडितः सन्, अशयत् भूमौ पतितवानित्यर्थः। अपात्, बहुव्रीहौ पादस्यान्त्यलोपश्छान्दसः। अहस्तः, बहुव्रीहौ, नञ्सुभ्याम् (पां ६।२।१७२।) इत्युत्तरपदान्तोदात्तत्वं अपृतन्यत्, सुप आत्मनः क्यच् (पां ३।१।८।) इति क्यच्प्रत्ययः, कव्यध्वरपृतनस्यर्चि लोपः (पां ७।४।३९।) इति पृतनाशब्दस्यान्त्याकारलोपः।

१८। नदं न भिन्नममुया शयानं मनोरुहाणा अति-
यन्त्यापः। याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः
पत्सुतःशीर्बभूव॥

बुभूषन्, सनिग्रहगुहोश्च (पां ७।२।७२।) इति इट्प्रतिषेधः। पुरुत्रा, देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलं (पां ५।४।५६।) इति सप्तम्यर्थे त्राप्रत्ययः। अशयत्, व्यत्ययेन परस्मैपदं, बहुलं छन्दसीति शपो लुगभावः। व्यस्तः, असु क्षेपणे इत्यस्मात्कर्मणि क्तः, यस्य विभाषा (पां ७।२।१५।) इति इट्प्रतिषेधः, गतिरनन्तरः (पां ६।२।४९।) इति गतेः प्रकृतिस्वरत्वं, संहितायां, उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य (पां ८।२।४।) इति परस्यानुदात्तस्य स्वरितत्वं॥७॥

अष्टमीमृचमाह नदं नभिन्नमिति। अमुया पृथिव्यां, शयानं पतितं मृतं वृत्रं, आपो जलानि, अतियन्ति अतिक्रम्य गच्छन्ति, तत्र दृष्टान्तः, भिन्नं बहुधा भिन्नं कूलं नदं न सिन्धुमिव, यथा वृष्टिकाले प्रभूता आपो नद्याः कूलं भित्वा अतिक्रम्य गच्छन्ति तद्वत्। कीदृश्य आपः, मनोरुहाणा मनुष्याणां चित्तमारोहन्त्यः, पुरा वृत्रे जीवति सति तेन निरुद्धा मेघाः स्थित्वा आपो भूमौ वृष्टा न भवन्ति, तदानीं नृणां मानसः खिद्यते, मृते तु वृत्रे निरोधरहिता आपो वृत्रशरीरमुल्लङ्घ्य प्रवहन्ति, तदा वृष्टिलाभेन मनुष्यास्तुष्यन्तीत्यर्थः, तदेतदुत्तरार्द्धेन स्पष्टीक्रियते, वृत्रो जीवनदशायां, महिना स्वकीयेन महिम्ना, याश्चित् या एव, मेघगता आपः, पर्यतिष्ठत् परिवृत्य स्थितवान्, अहिर्वृत्रो मेघस्तासामपां पत्सुतःशीः, पादस्याधः शयानो बभूव, यद्यप्यपां पादो नास्ति, तथाप्यद्भिर्वृत्रस्याभिलङ्घितत्वात्पादस्याधःशयनमुपपद्यते। भिन्नं, भिदेः, रदाभ्यां निष्ठातो नः पूर्वस्य च दः (पां ८।२।४२।) इति दकारस्य नकारः। अमुया, सुपां सुलुक् (पां ७।१।३९।) इत्यादिना सप्तम्या याजादेशः। शयानं, शीङः सार्वधातुकगुणे धातोर्ङित्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। रुहाणाः, रुह बीजजन्मनि प्रादुर्भावे च, व्यत्ययेन शानच्, कर्त्तरि शपि प्राप्ते, व्यत्ययेन शः, अनित्यमागमशासनमिति वचनान्मुमभावः, अदुपदेशाल्लसार्वधातुकानु-

। ९ । नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार। उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः॥

दात्तत्वेन विकरणस्वरे प्राप्ते व्यत्ययेन धातुस्वरः। महिना, मह पूजायां, सर्वधातुभ्य इन् इत्यौणादिक इन्प्रत्ययः, व्यत्ययेन विभक्तेरुदात्तत्वं। यद्वा महिना महिम्ना, महच्छब्दस्य पृथ्वादिषु पाठात् तस्य भाव इत्येतस्मिन्नर्थे, पृथ्वादिभ्य इमनिज्वा (पा ५।१।१२२।) इति विकल्पेन इमनिच् प्रत्ययः। टेः (पा ६।४।१५५।) इति टिलोपः। चितः (पा ६।१।१६३।) इत्यन्तोदात्तत्वं, तृतीयैकवचने अल्लोपे सति उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वं, मकारलोपश्छान्दसः। पत्सुतःशीः, पादस्याधः शेत इति पत्सुतःशीः, क्विप् च (पा ३।२।७६।) इति क्विप्, घसि, पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु (पा ६।१।६३।) इति पादशब्दस्य पदादेशः, अस्मिन्सूत्रे शस्प्रभृतिष्वित्युक्तत्वेनात्र प्रभृतिशब्दः प्रकारवचने, तेन शसादेरभावेऽन्यत्रापि दोषन्नादेशो भवतीत्युक्तत्वात्, मध्ये सु इति शब्दोपजनश्छान्दसः, यद्वा पादशब्दस्य सप्तमीबहुवचने पदादेशे कृते, इतराभ्योऽपि दृश्यन्ते (पा ५।३।१४।) इति सप्तम्यर्थे तसिल्प्रत्ययस्तस्य लुगभावश्छान्दसः॥८॥

नवमीमृचमाह नीचावया इति। वृत्रपुत्रा वृत्रः पुत्रो यस्या मातुः सेयं माता वृत्रपुत्रा, नीचावया न्यग्भावमापन्ना हता अभवत्, पुत्रं प्रहाराद्रक्षितुं देहस्योपरि तिरश्ची पतितवतीत्यर्थः, तदानीमिन्द्रः, अस्या मातुः, अव अधोभागे, वृत्रस्योपरि वधर्वधनसाधनमायुधं, जभार प्रहृतवान्, तदानीं, सूर्माता उत्तरा उपरिस्थिता आसीत्, पुत्रः पुत्रस्तु अधरोऽधोभागस्थित आसीत्, सा च दानुर्दानवी वृत्रमाता शये मृता शयनं कृतवती, तत्र दृष्टान्तः, धेनुर्लोकप्रसिद्धा गौः सहवत्सा न यथा वत्ससहिता शयनं करोति तद्वत्। नीचावयाः, वेतिर्वा इतीति वयो वायुरौणादिको असि प्रत्ययः, न्यग्वयो यस्याः सा नीचावयाः, न्यच् शब्दादुत्तरस्या विभक्तेः, सुपां सुपो भवन्तीति वचनात् तृतीयैकवचनादेशः, अचः, (पा ६।४।१३८।) इत्यकारलोपे, चौ (पा ६।३।१३८।)

१ १० १ अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरं १ वृत्रस्य निण्यं विचरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥ ३७ ॥

इति दीर्घत्वं, अचेश्छन्दस्यसर्वनामस्थानं ( पां ६ । १ । १७० । ) इति तस्योदात्तत्वं, समासे लुगभावश्छान्दसः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं, यद्वा, नीचा निकृष्टा वयसो यस्याः सा, पूर्वपदस्य दीर्घश्छान्दसः। वधः, हन्यतेऽनेनेति वधः, अपि न हन्तेर्वधादेशः, निपातादाद्युदात्तत्वं। अभार, हृग्रहोर्भश्छन्दसीति सूत्रवार्त्तिकेन भत्वं। सूः, षूङ् प्राणिगर्भविमोचने, सूते गर्भं विमुञ्चतीति सूर्माता, क्विप् च (पां ८ । २ । ७६ ।) इति क्विप्। दानुः, दो अवखण्डने, दाभाभ्यांनुरित्यौणादिको नुः प्रत्ययः, निदित्यनुवर्त्तेराद्युदात्तः। शये, शीङ् स्वप्ने, लटस्त आदेशे, टित आत्मनेपदानां टेरे ( पां ३ । ४ । ७९ । ) इत्येत्वं, लोपस्त आत्मनेपदेषु ( पां ७ । १ । ४१ । ) इति तलोपे, शीङः सार्वधातुके गुणः ( पां ७ । ४ । २१ । ) इति गुणे अयादेशः ॥ ९ ॥

दशमीमृचमाह अतिष्ठन्तीनामिति । वृत्रस्य शरीरं, आपो विचरन्ति विशेषेण उपर्य्याक्रम्य प्रवहन्ति, कीदृशं शरीरं निण्यं निर्नामधेयं, अणुमात्रत्वेन गूढत्वात्केनापि न ज्ञायते, एतदेव स्पष्टीक्रियते, काष्ठानामपां मध्ये निहितं निक्षिप्तं, कीदृशानां काष्ठानां अतिष्ठन्तीनां अवस्थितिरहितानां, अनिवेशनानां स्थानरहितानां, प्रवहणस्वभावत्वादेतासां मनुष्यवन्न क्वापि स्थितिः सम्भवति । इन्द्रशत्रुरेषो जलमध्ये शरीरे प्रक्षिप्ते सति, दीर्घं तमो दीर्घनिद्रात्मकं मरणं यथा भवति तथा आशयत् सर्वतः पतितवान्। अतिष्ठन्तीनां, अव्ययपूर्वपदप्रकृतिस्वरत्वं। अनिवेशनानां, निविशन्त्यस्मिन्निति निवेशनं स्थानं, करणाधिकरणयोश्च (पां ३ । ३ । ११७। इत्यधिकरणे ल्युट्, तद्रहितानां, बहुव्रीहौ, नञ्सुभ्यां (पां ६ । २ । १७२ ।) इत्युत्तरपदान्तोदात्तत्वं। क्रान्त्वा स्थिता इति काष्ठाः पृषोदरादिः। निहितं, गतिरनन्तरः (पां ६ । २ । ४९ ।) इति गतेः प्रकृतिस्वरत्वं। अत्र यास्कः, अतिष्ठन्तीनामनिवेशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः, शरीरं शृणातेः शम्नातेर्वा वृत्रस्य निण्यं निर्नामं विचरन्ति विजानन्त्यापो दीर्घं द्राघते

१ ११ १ दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः। अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार॥

तमस्तमोतेरामयदाप्नेत इन्द्रशत्रुस्त्वष्टो वृत्रो मेघ इति नैरुक्तास्त्वाष्ट्र इत्यैतिहासिका इति ॥१०॥ इति प्रथमस्य द्वितीये सप्तत्रिंशो वर्गः ॥३७॥

एकादशीमृचमाह दासपत्नीरिति। दासपत्नीर्दासो विश्वोऽपक्षयहेतुर्वृत्रः पतिः स्वामी यासान्ताः दासपत्नीः, अतएवाहिगोपाः अहिर्वृत्रो गोपा रक्षको यासान्ताः, गोपनं नाम स्वच्छन्देन यथा न प्रवहन्ति तथा निरोधनं। एतदेव स्पष्टीक्रियते, आपो निरुद्धा अतिष्ठन्निति। तत्र दृष्टान्तः, पणिनेव गावः, पणिनामकोऽसुरो गा अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवांस्तद्वदित्यर्थः। अपां यत् बिलं प्रवहणद्वारं अपिहितं वृत्रेण निरुद्धं आसीत्, तद्बिलं प्रवहणद्वारं, वृत्रं जघन्वान् हतवानिन्द्रः, अपववार अपावृतमकरोत्, वृत्रकृतमपां निरोधं परिहृतवानित्यर्थः। अत्र यास्कः, दासपत्नीर्दासाधिपत्न्यो दासो दस्यतेरुपदासयति कर्माण्यहिगोपा अतिष्ठन्नहिना गुप्ता अहिरयनादेत्यन्तरिक्षेऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति, निरुद्धा आपः पणिनेव गावः, पणिर्वणिग्भवति, पणिः पणनाद्वणिक्पण्यं नेनेक्ति, अपां बिलमपिहितं यदासीत्, बिलं भरं भवति बिभर्तेः, वृत्रं जघन्वान् अपववार, तद्वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा यदवृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते, यदवर्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते, यदवर्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायत इति। दासपत्नीः, दसु उपक्षये, दासयतीति दासो वृत्रः, पचाद्यच्, चितः (पां ६। १। १६३।) इत्यन्तोदात्तत्वं, दासः पतिर्यासां, विभाषा सपूर्वस्य (पां ४। १। ३४।) इति ङीप्, तत्सन्नियोगेन इकारस्य नकारः, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं, यद्वा दासस्य पालयित्र्यः, पत्यावैश्वर्ये (पां ६। २। १८।) इति पूर्वपदप्रकृतिस्वरत्वं। अहिगोपाः, गुपू रक्षणे, गोपायतीति गोपाः, आयादय आर्धधातुके वा (पां ३। १। ३१।) इत्यायः प्रत्ययः। ततः क्विप्, अतो लोपः (पां ६। ४। ४८।) इत्यलोपः,

1121 अश्व्यो वारो अभवस्तदिन्द्र सृके यत्वा प्रत्य-
हन्देव एकः। अजयो गा अजयः शूर सोममवा-
सृजः सर्त्तवे सप्त सिन्धून्॥

वेरपृक्तलोपाद्वलिलोपो बलीयानिति परिभाषया पूर्वं यकारलोपः, नच, अचः परस्मिन्पूर्वविधौ ( पां १ । १ । ५७ । ) इति अतो लोपस्य स्थानिवत्त्वं, नपदान्तद्विर्वचनवरेय लोप० ( पां १ । १ । ५८ । ) इत्यादिना स्थानिवत्त्वनिषेधात् । अहिगोपाः, अहिर्गोपा यासां पूर्ववत्स्वरः । निरुद्धाः, रुधिर् आवरणे, निष्ठायां क्तः, झषस्तथोर्धोऽधः ( पां ८ । २ । ४० । ) इति निष्ठातकारस्य धकारः, गतिरनन्तरः ( पां ६ । २ । ४२ । ) इति गतेः प्रकृतिस्वरत्वं । जघन्वान्, हन्तेर्लिटः क्वसुः, अभ्यासाच्च ( पां ७ । ३ । ५५ । ) इत्यभ्यासादुत्तरस्य हकारस्य कुत्वं । क्रादिनियमप्राप्तस्य इटो, विभाषागमहनविदविशां ( पां ७ । २ । ६८ । ) इति विकल्पविधानादभावः, संहितायां नकारस्य रुत्वानुनासिकावुक्तौ ॥ ११ ॥

द्वादशीमृचमाह अश्व्यो वार इति। हे इन्द्र, सृके वज्रे, सृको वज्र इति वज्रनामसु पठितत्वात्। देवो दीप्यमानः सर्वायुधकुशलः। एको ऽद्वितीयो वृत्रः, यत् यदा, त्वा त्वां, प्रत्यहन् प्रतिकूलत्वेन प्रहृतवान्, तत् तदानीं, अश्व्यो वारः अश्वसम्बन्धी वालोऽभवः, यथा ऽश्वस्य वालो ऽनायासेन मक्षिकादीन् वारयति तद्वत् वृत्रमगणयित्वा निराकृतवानित्यर्थः। किञ्च गाः पणिना ऽपहृतास्त्वमजयः जितवान्। हे शूर शौर्य्ययुक्तेन्द्र, सोमं अजयो जितवान्, तथाच तैत्तिरीयाः, त्वष्टा हतपुत्र इत्यस्मिन्नुपाख्याने समामनन्ति, त्वष्टा हतपुत्रो वीन्द्रं सोममाहरत्तस्मिन्निन्द्र उपहवमैच्छत तन्नोपाह्वयत पुत्रम्मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबदिति। सप्त सिन्धून्, इमम्मे गङ्गे इत्यस्यामृच्यामाम्नाता गङ्गाद्याः सप्तसङ्ख्याका नद्यः सर्त्तवे सर्तुं प्रवाहरूपेण गन्तुं अवासृजः त्यक्तवान्, वृत्रकृतम्प्रवाहनिरोधं निराकृतवानित्यर्थः। अश्व्यः, अश्वे भवः अश्व्यः, भवेच्छन्दसि ( पां ४ । ४ । ११० । ) इति यत्, यतो ऽनावः ( पां ६ । १ । २१३ । ) इत्याद्युदात्तत्वं, वारयति दंशमशकानिति वारः, पचाद्यच्, कपिलकादित्वाल्लत्वविकल्पः, वृषादित्वादा-

१३ । नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहम-
किरद्ध्रादुनिं च। इन्द्रश्च यद्युयुधाते अहिश्चोताप
रीभ्यो मघवा विजिग्ये॥

१४ । अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो
भीरगच्छत्। नव च यन्नवतिं च स्रवन्तीः श्येनो
न भीतो अतरो रजांसि॥

द्युदात्तत्वं। प्रत्यहन्, यद्वृत्तान्नित्यं (पां ८।१।६६।) इति निघातप्रतिषेधः, तिङि चोदात्तवति (पां ८।१।७१।) इति गतेरनुदात्तत्वं। अजयः, गा इत्यस्य वाक्यान्तरगतत्वात्तदपेक्षयाऽस्य, तिङ्ङतिङः (पां ८।१।२८।) इति निघातो न भवति, समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या इति वचनात्। सर्तवे, तुमर्थे सेसेनसेऽसेन् (पां३।४।९।) इत्यादिना तवेन्प्रत्ययः, नित्त्वादाद्युदात्तत्वं॥१२॥

त्रयोदशीमृचमाह नास्मै विद्युदिति। इन्द्रं निषेद्धुं वृत्रो यान् विद्युदादीन् मायया निर्मितवान्, ते सर्वेऽप्येनं निषेद्धुमशक्ताः, सोऽयमर्थोऽनेन मन्त्रेणोच्यते, अस्मै इन्द्रार्थं निर्मिता विद्युत् नासिषेध इन्द्रं न प्राप्नोत्, तथा तन्यतुर्गर्जनं यां मिहं सेचनं यां वृष्टिं अकिरत्, वृत्रो विक्षिप्तवान्, सापि वृष्टिर्न सिषेध, ह्रादुनिं च अशनिमपि यां वृत्रः प्रयुक्तवान्, सापि न सिषेध, इन्द्रश्च अहिश्च इन्द्रवृत्रावुभावपि यत् यदा युयुधाते युद्धं कृतवन्तौ, तदानीं विद्युदादयो न प्राप्ता इति पूर्वत्रान्वयः। उत अपि च मघवा धनवान् इन्द्रः, अपरीभ्योऽपराभ्योऽन्यासामपि वृत्रनिर्म्मितानां मायानां सकाशात् विजिग्ये विशेषेण जितवान्। सिषेध, षिधु गत्यां। मिहं, मिह सेचने, मेहति सिञ्चतीति मिहवृष्टिः, क्विप् च (पां ८।२।७६।) इति क्विप्। अकिरत्, कॄ विक्षेपे, तुदादिभ्यः शः (पां ३।१।७७।) इति श प्रत्ययः। ऋत इद्धातोः (पां ७।१।१००।) इति इत्वं, अडागम उदात्तः, यद्वृत्तयोगादनिघातः। युयुधाते, युध सम्प्रहारे, लिटि प्रत्ययस्वरः। जिग्ये, जि जये, सन्लिटोर्जेः (पां ७।३।७।) इति अभ्यासादुत्तरस्य जकारस्य कुत्वं॥१३॥

चतुर्दशीमृचमाह अहेर्यातारमिति। हे इन्द्र, जघ्नुषो वृत्रं हत-

। १५ । इन्द्रो यातोऽवसितस्य राजा शमस्य च
शृङ्गिणो वज्रबाहुः । सेदु राजा क्षयति चर्षणी-
नामरान्न नेमिः परि ता बभूव ॥ ३८ ॥

॥ इति प्रथमाष्टके द्वितीयोऽध्यायः ॥

तत्तव हृदि चित्ते यत् यदि भीरगच्छत् हतवानस्मीति बुद्ध्या भयमाप्नुयात्, तर्हि अहेर्हन्तुरन्यस्य यातारं हन्तारं कमपश्यः, त्वत्तोऽन्यं कं पुरुषं दृष्टवानसि, तादृशस्य पुरुषान्तरस्याभावात्, माभूत्तव भयमित्यर्थः, यद्यस्मात्कारणात् नव च नवतिं च स्रवन्तीः एकोनशतसंख्याकाः प्रवहन्तीर्नदीः प्राप्य रजांसि तत्रत्यान्युदकानि अतरस्तीर्णवानसि। तत्र दृष्टान्तः, श्येनो न श्येननामको बलवान् पक्षीव, दूरगमनात् तव भयमासीत् इति गम्यते, तद्भयं माभूदित्यभिप्रायः। तच्च दूर-गमनं ब्राह्मणे समाम्नातं, इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगच्छदिति, तैत्तिरीयाश्चामनन्ति इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपाराधमिति मन्यमान इति। हृदि, पद्दन्नोमास्हृन्निशसन् (पां ६।१।१७३।) इत्यादिना हृदयशब्दस्य हृदादेशः, ऊडिदंपदाद्यप्पुम्रैद्युभ्यः (पां ६।१।१७१।) इति विभक्तेरुदात्तत्वं। जघ्नुषः, हन्तेर्लिटः क्वसुः, षष्ठ्येकवचने, वसोः सम्प्रसारणं (पां ६। ४।१३१।) इति सम्प्रसारणपरपूर्वत्वे, शासिवसिघसीनाञ्च (पां ८।३।६०।) इति षत्वं,। न च षत्वतुकोरसिद्धत्वेन एकादेशस्यासिद्धत्वात् षत्वं न प्राप्नुयादिति वाच्यं, सम्प्रसारणस्य ङीप्सुप्रतिषेधो वक्तव्य इति वार्त्तिकेन असिद्धवद्भावस्य प्रतिषिद्धत्वात्, गमहनजनखन-घसां लोपः क्ङित्यनङि (पां ६।४।९८।) इत्युपधालोपः,। न चा-सिद्धवदत्राभात् (पां ६।४।२२।) इति सम्प्रसारणस्यासिद्धवद्भावः, भिन्नाश्रयत्वात्, सम्प्रसारणं हि षष्ठ्येकवचने, उपधालोपस्तु स्यादेवेति भिन्नाश्रयत्वं। स्रवन्तीः, स्रु गतौ, शप्श्यनोर्नित्यं (पां ७।१।८१।) इति नुमागमः, शपः पित्त्वादनुदात्तत्वं, शतुश्च लसार्वधातुकस्वरेणा-द्युदात्तत्वं। अतरः, यद्वृत्तयोगादनिघातः ॥ १४ ॥

पञ्चदशीमृचमाह इन्द्रो यात इति। वज्रबाहुरिन्द्रः, शत्रौ हते सति, निःसपत्नो भूत्वा यातो गच्छतो जङ्गमस्यावसितस्य एकत्रैव स्थितस्य

स्थावरस्य, शमस्य शान्तस्य, शृङ्गराहित्येन प्रहरणादावप्रवृत्तस्याश्व-गर्दभादेः, शृङ्गिणः शृङ्गोपेतस्योग्रस्य महिषबलीवर्दादेश्च राजा अभूत्। सेदु स एवेन्द्रश्चर्षणीनां मनुष्याणां राजा भूत्वा क्षयति निवसति, ता, तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि परिबभूव व्याप्तवान्,। तत्र दृष्टान्तः, अरान्न नेमिर्यथा रथचक्रस्य परितो वर्त्तमाना नेमिः अरान् नाभौ प्रोतितान् काष्ठविशेषान् व्याप्नोति तद्वत्। यातः, या प्रापणे, याति गच्छतीति यात्, शसः शस, सावेकाचः ( पां ६। १। १६८।) इत्यादिना विभक्तेरुदात्तं। सेदु इत्यत्र, स इत्यस्य, सोऽचिलो-पेचेत्पादपूरणं ( पां ६। १। १३४।) इति संहितयां सोर्लोपः,। ता, शेश्छन्दसि बहुलं ( पां ६। १। ७०।) इति शेर्लोपः, बभूव, भवते र्लिटो णलि, भवतेरः ( पां ७। ४। ७३।) इत्यभ्यासस्य अत्वं, कृता-कृतप्रसङ्गितया वुगागमस्य नित्यत्वादृद्धेः पूर्वं वुगागमः। यद्वा, इन्धि-भवतिभ्याञ्च ( पां १। २। ६।) इति लिटः कित्त्वाद्वृद्ध्यभावः। न च, असिद्धवदत्राभात् ( पां ६। ४। २२।) इति तस्यासिद्धत्वादुवङादेशः प्रसज्यते, वुग्युटावुवङ्यणोः सिद्धौ वक्तव्याविति वार्त्तिकेन तस्य सिद्धत्वात्, तिङ्ङतिङः ( पां ८। १। २८।) इति निघातः ॥ १५ ॥
इति प्रथमस्य द्वितीयेऽष्टत्रिंशो वर्गः ॥ ३८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्वि-द्यातीर्थमहेश्वरः। इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणामात्येन विरचिते माध-वीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके द्वितीयोऽध्यायः।

(ॐ तत् सत्।)

# RIG VÉDA SANHITÁ.

---

## FIRST BOOK.

### FIRST CHAPTER.

#### FIRST HYMN.*

1. I praise Agni, the household priest, the divine offerer of the sacrifice, the inviter who keeps all treasures.

2. Agni, worthy of the praises of the ancient Rishis, and also of our's, do thou bring hither the Gods.

3. By Agni, *the sacrificer* enjoys wealth, that grows from day to day, confers renown, and surrounds him with heroes.

4. Agni, the sacrifice which thou keepest from all sides uninvaded, approaches surely the Gods.

5. Agni, inviter, performer of gracious deeds, thou who art truthful, and who shinest with various glories, come thou, O God, with the Gods.

6. The prosperity which thou, O Agni, bestowest upon the worshipper, will be in truth *a prosperity* to thee, O Angiras.†

7. We approach thee in our minds, O Agni, day after day, by night and day, to offer thee our adoration,

8. Thee, the radiant guardian of the meet *reward* of the sacrifices, who is resplendent and increasing in his sacred house.

9. Be thou, O Agni, accessible to us, as a father is to the son; be near us for our welfare.

#### SECOND HYMN.‡

1. Come, O beautiful Váyu, the moonplant juice is prepared, drink of it, and listen to our invocation.

* Hymn in praise of Agni, Rishi Madhuchanda, the son of Visvamitra—Metre Gáyatri.

† A name of Agni.

‡ Hymn in praise first of Váyu, then of Indra and Váyu, and lastly of Mitra and Varuna; the same Rishi and Metre.

2. The chanters, holding the ready libation and knowing the *sacred* days, chant thee here with hymns, O Váyu.

3. Váyu, thy approving voice approaches the worshipper, *it approaches* to many for the drinking of the moonplant juice.

2.

1. Indra and Váyu, this *juice* is prepared, come with the viands, for the libations long for you.

2. Váyu and Indra, come ye with speed, *and* seated near the sacrifice, attend ye to the prepared libation.

3. Váyu and Indra, approach to the *libation* which adorns the *priest* who prepares it; *after your approach*, O men, the libation will soon *be purified* by the pious rite.

3.

1. I invoke Mitra of holy strength, Varuna also, the destroyer of foes, ye who hear the prayer for rain.

2. Mitra and Varuna, ye, that collect and shed the rain, have accepted this great sacrifice for the due *reward of the pious rites*.

3. Mitra and Varuna, ye wise, born as a help and refuge to many, preserve *our* strength *and our* pious rites.

## Third Hymn.*

1.

1. O Aswins, whose hands are swift, ye lords of the pure *sacrifice*, accept, ye long-armed of the sacrificial food.

2. O Aswins, performers of many pious works, ye men and wise, hear our prayer with approving minds.

3. Ye destroyers *of foes*, ye truthful, come on the road, that causes lamentations;† for the libation, placed on the sacred grass, is ready.

2.

1. Come, O resplendent Indra, these *libations* which long for thee, and are always purified by the fingers of the priest, are prepared.

2. Approach, O Indra, moved by our invocation; thou who art obtained by the wise, come to the prayers of the priest, holding the libation in his hands.

* Hymn in praise first of the Aswins, then of Indra, thirdly of the Viswadévas, and lastly of Saraswati; Rishi and Metre the same.

† Viz. to our foes.

3. Indra, lord of the golden coloured horses, with celerity approach, *and hearken* to our supplications. Take our food with the libation.

3.

1. Viswadévas, ye protectors, preservers of man, ye bestowers of gifts, come to the prepared *libation* of the worshipper.

2. O Viswadévas, givers of rain, swiftly approach the prepared *libation*, as the sunbeams *approach* the days.

3. Ye all-wise Viswadévas, whom nought can destroy or injure, attend, O givers *of riches*, to the *sacred* butter.

4.

1. O, purifying Saraswatí, who rejoicest in offered food, with the food, *given by the priest*, be pleased with our sacrifice, thou who grantest wealth to prayer.

2. Saraswatí who inspires with friendly words, and explains true thoughts, has accepted the sacrifice.

3. Saraswatí by *her* impulse moves the great ocean *and* irradiates all minds.*

### Fourth Hymn.†

1. We call day after day Indra, the performer of glorious deeds, for assistance, as milch-cows are *called to the herdsman* who milks them.

2. Come to our oblations, drink of the juice, O drinker of the juice, O thou, that is rich, it is *thy* delight to grant the gift of cows.

3. Then‡ let us see thee among those that are thy near companions, among those that are wise; do not, by passing us over, manifest *thyself rather to* others, than us, *but* come.

4. *O sacrificer*, draw near to the wise, uninvaded Indra, ask the experienced *priest*; for he, (Indra) *will grant* blessings to thy friends.

5. Let then our *priests* give praise *to Indra*. Ye slanderers, from this place depart, while they, (the priests) O Indra, perform this festal pomp.

6. O destroyer *of foes*, let then the men, that are our enemies, call us fortunate. May we live under this Indra's protection.

* The commentator makes the remark, that Saraswatí must be here considered in her double capacity as a goddess and a river.

† Hymn in praise of Indra; Rishi and Metre the same.

‡ Viz. after the drinking of the juice.

